

# THE

# KÂVYANUS'ÂSANA

OF

# HEMACHANDRA

With his own gloss

EDITED BY

MAHÂMAHOPÂDYÂYA PANDIT S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKARAM JAVAJÎ

PROPRIETOR OF JAVAJI DADAJI'S NIRNAYA-SAGARA PRESS.

BOMBAY

1901

*Price 2½ Rupees.*

काव्यमाला ७०

श्रीहेमचन्द्रविरचितं

# काव्यानुशासनम्।

सटीकम्।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादद्वारक
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम्।

तच
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम्।

१९०१



मूल्यं सपाद रूप्यकद्वयम्।

अथ श्वेताम्बरजैनाचार्यश्रीहेमचन्द्रः कदा कतमं भूमिमण्डलं मण्डयामासेति जिज्ञासायामनेकग्रन्थपर्यालोचने प्राप्ते Dr P Peterson महाशयानां Fifth Report पुस्तके—

> तत्पट्टपूर्वाद्रिसहस्ररश्मिः सोमप्रभाचार्य इति प्रसिद्धः ।
> श्रीहेमसूरेश्च कुमारपालदेवस्य चेदं व्यरचच्चरित्रम् ॥

इति सोमप्रभाचार्यविरचितहेमकुमारचरित्रग्रन्थतः

> '[illegible] प्रभुहेमसूरेरनन्यतुल्यामुपदेशपद्धतिम् ।
> अतीन्द्रियज्ञानविवर्जितोऽपि यः क्षोणिपतिर्व्यधित प्रबोधम् ॥
> सत्त्वानुकम्पा न महीभुजां स्यादित्येष क्लृप्तो वितथः प्रवादः ।
> जिनेन्द्रधर्मं प्रतिपद्य येन श्लाघ्यः स केषां न कुमारपालः ॥
> इति सोमप्रभकथिते कुमारनृप-हेमचन्द्रसंबद्धे ।
> जिनधर्मप्रतिबोधे प्रस्तावः पञ्चमः प्रोक्तः ॥[1]

इति सोमप्रभविरचितकुमारपालप्रतिबोधग्रन्थतः

> 'शिष्यो जम्बुमहामुनेः प्रभव इत्यासीत्प्रभुष्यापि च
> श्रीशय्यंभव इत्यमुष्य च यशोभद्राभिधानो मुनिः ।
> संभूतो मुनिभद्रबाहुरिति च[2] द्वौ तस्य शिष्यौ तयोः
> संभूतस्य च पादपद्ममधुलिट् श्रीस्थूलभद्रः प्रभुः ॥
> दक्षस्तत्र चतुर्दशपूर्वसारोऽस्य तस्य दशपूर्वधरौ महर्षी ।
> नाम्ना महागिरिरिति स्थिरतागिरीन्द्रो ज्येष्ठोऽन्तिषण्णमनिशं विधिरप्यकम्पः ॥
> शिष्योऽन्यो दशपूर्विमन्मुनिपतिर्नाम्ना सुहस्तीत्यभूत्
> यत्पादाम्बुजसेवनात्सुमतिना राज्ये प्रबोधं गतः ।
> यः संप्रतिपार्थिवः प्रतिपुरग्रामाकरं भारते
> ऽस्मिन्नर्धे जिनवेश्ममण्डितमिलापृष्ठं समस्तामपि ॥
> अभवन् सुस्थित-सुप्रतिबुद्ध इत्यभिधया सुहस्तिमहामुने ।
> शमधनो दशपूर्वधरान्तिषद्भवमहातरुमत्तमतङ्गजः[3] ॥

---

१ अस्य जिनधर्मप्रतिबोधाख्यस्य निर्माणसमयस्तु— शशिजलधिसूर्यवर्षे शुचिमासे रविदिने सिताष्टम्याम् । जिनधर्मप्रतिबोधः क्लृप्तोऽयं गूर्जरेन्द्रपुरे ॥ इति वचसा प्रायः संवत् १२४१ (A. D 1184) विक्रमसंवत्सरात्मकः स्पष्टः  २ इति च' इति भवेत्, ३ सुस्थित सुप्रतिबद्धः इति सुसिद्धम्

कुमारपालराज्यसमयस्तु—

ओं नमः शिवाय ।

ब्रह्माद्वैतधिया मुमुक्षुभिरभिध्यातस्य पद्माक्षरै-
रित्यक्षरकिमपि सिद्धमिति यमतो यस्तु श्रुतीनां निधे ।
या न्यायार्जितसंहृते सकलये ब्रह्मण्यपि मैत्रै
श्रीकन्ती भगवच्छुर्भैरिव सदा सम्यक्स्वमाश्रयते ॥

गौर्वाणैर्वितर्मदै रनुपरिमवाराध्यैर्वितमभ्यर्पं
येषां संभ्यां नमसमपि विजयुद्धके पुण्यगाम्नुपूर्ले ।
सद्यो वीरं चुलुक्यादमसृजदिमं येन कीर्तिप्रवाहै
पूर्तं त्रैलोक्यमेतन्निजतमगुरस्येव हेतोः फर्म भी ॥

वंशः कोऽपि ततो बभूव विविधार्यैकश्रीमसरं
यस्माद्भूमिवतोऽपि भीतगमितः(गमा)ः प्रादुर्भवन्स्यन्वयम् ।
यस्मां च प्रथितप्रतापमहतीं बन्ने विपमोऽपि स
स्यो यस्यामपि सर्वदापि जगतो विभ्रस्य धत्ते फल्गम् ॥

वंशस्यास्य यशःप्रभवनिधी निर्मूल्यमुक्तामणिः
क्षोणीपालकिरीटचुम्बितपदः श्रीमूलराजोऽभवत् ।
यो मूलं कलितावदभ्यधिनिशितस्यावाहमोत्पादने
यो राजेव करै प्रथमशिशिरै प्रीति नियाय प्रजाः ॥

यशापोतसद्राजराज्यकमलो सम्यक्प्रवर्न्दीयवां
विद्रुतमवनिप्रपन्नित्प्रतकम्पूरोपमोऽस्या क्षणात् ।
यत्प्राभविनी तदा विषमवं मुक्ताकराख्यम-
स्यैता सर्वविपक्षरविविधुना मकम्पाविर मेजिरे ॥

सनुरस्य बभूव भूपतिलकश्चामुण्डराजाह्वयो
यद्गन्धद्विपदानगन्धपवनाघ्राणेन दूरादपि ।
विभ्रश्यन्मदगन्धभग्नकरिभिः श्रीसिन्धुराजस्तथा
नष्टः क्षोणिपतेर्यथास्य यशसां गन्धोऽपि निर्णाशित ॥

तस्माद्वल्लभराज इत्यभिधया ख्यातक्षमाशामपि
यो राजकर्मनिर्मितभमलधर धमामण्डले ।
यस्यैवामसमृद्धिमिनं पितुमसस्वैतप्रकावभुति-
र्ध्यात्मानमभूरतनश्रीरुपमम्याढिम्यप्रमोऽजम ॥

---

१ मूलराजराज्यम्—वि सं ९९३-१ ५३ २ चामुण्डराजराज्यम्—वि सं १ ५३-१ ६६

अश्रा(श्रा)न्तोत्सवमम्यमानविभवोत्कर्षप्रकर्षस्थितो
भार्या एव वदन्ति यत्र नृपते सौराज्यसंपद्गुणम् ॥
अस्मिन्नामरवेषावह्निजननात्क्रोसान्तरे
रक्षां शान्तिकपौष्टिकैर्वितनुत भूपस्य राष्ट्रस्य च ।
मा भूत्तस्य तथापि तीव्रतपसो बाधेति मत्वा नृपो
वप्रं विप्रपुराभिरक्षणकृते निर्मापयामास सः ॥
अस्मिन्वप्रगुणेन तोयनिचया प्रीणन्ति लोकं जलैः
कामं क्षेत्रभुवोऽपि धान्यनिचितास्तन्वन्ति वाञ्छाधिकम् ।
एवं चेतसि संप्रधार्य सकलप्रलोपकारेच्छया
चक्रे वप्रविभूषितं पुरमिदं चौलुक्यचूडामणिः ॥
पाताम्भन्तरसात्रसे गिरिरिव श्वभ्रे महाभोगत
श्रृङ्गारीव तरङ्गिणीपतिरिव स्मरोरगारम्भः ।
उत्सर्पत्कपिशीर्षको वन इव कन्यावनायाङ्गिरा
नारीवर्षे इवैवमन्तररुचिः सालोऽयमालोक्यते ॥
भोगाभोगमनोहरः फणधरैरत्युद्गतो धारण-
न्मात्र कुम्भसितो च महपुरस्याक्षायमनेनायत ।
रत्नसर्वमहानिधिं पुरमिव त्रातुं स शेष स्थितः
प्राकार कुमध्या वितोपपविशा संमन्यते द्रष्टवान् ॥
कामं धामधनर्द्धिपूरकरमारामाभिरामा सदा
सच्छन्दस्वनतत्परैर्द्विजगणैरत्यन्तवाचालिता ।
उत्सर्पद्गुणशालिभ्रमयन्प्रीतैः प्रसन्ना वने-
रत्नान्तवनविह संप्रति भुवः शोभाद्भुतं बिभ्रति ॥
अस्मीकृत्य क्षोणिभुजो दधानः श्रीवीरधावितचितविप्रदोऽवम ।
विभाव्यते नामसमन्तादिवंशस्य चौलुक्यनराधिपस्य ॥
यावत्कूर्मो पृथुभिरविलाशेषभूभिवेशा
यावत्सीर्ति सगरनृपतिर्विपदे सामरोऽयम् ।
तावसम्यादिव्यपरमहास्मानरम्यानिदान
श्रीचौलुक्यक्षितिपतिरिया कीर्तिन यत्र एषः ॥
एतद्दनिष्पन्नमहाप्रबन्धं श्रीपसिद्धराजप्रतिपन्नबन्धुः ।
श्रीपालनामा कविचक्रवर्ती प्रशस्तिमेतामकरोत्प्रशस्ताम् ॥
संवत् ११ ८ वर्षे आश्विन शुदि १ गुरौ लिखितं नागरब्राह्मणनागरकेण ॥
इति काव्यमालाद्युत्पन्नास्यपराधीनहितसत्का G Bühler Ph D L L D, C I E महाशयप्रेषित ४५ तमलेखत विक्रमसंवत् ११ ८ (A D

## काव्यानुशासनविषयानुक्रमणिका

### मूलग्रन्थश्च ।

1151) इस स्फुटमेव प्रतीयते एवं च ग्रामणी सिद्धराजस्य हेमचन्द्रसत्तासारमूला-
वगम्यते

अनेनाचार्यश्रीहेमचन्द्रेणैयन्तो ग्रन्था निर्मिता इति निश्चितं नैव परंतु तन्निर्मितग्रन्थे-
षु—अनेकार्थकोष अनेकार्थशेष अभिधानचिन्तामणि (नाममालाख्यव्याख्या) अलंकार
चूडामणि (काव्यानुशासनव्याख्या) तत्त्वविद्युतवृत्ति काव्यानुशासनम् छन्दोनुशा-
सनम्, छन्दोनुशासनवृत्ति देशीनाममाला सवृत्ति [द्वयाश्रयकाव्यं सवृत्ति,] धातुपाठः
सवृत्ति धातुपारायणं सवृत्ति धातुमाला नाममाला नाममालाशेष निघण्टुशेष
[प्रमाणमीमांसा सवृत्ति,] बलाबलसूत्रबृहद्वृत्ति बालभाषाव्याकरणसूत्रवृत्ति [योगशा-
स्त्रम्,] विभ्रमसूत्रम् लिङ्गानुशासनं सवृत्ति शब्दानुशासनं सवृत्ति शेषसंग्रह शेषसंग्र-
हसारोद्धार एते ग्रन्था Catalogus Catalogorum ग्रन्थे Dr Theodor
Aufrecht महाशयै प्रकाशिता

एवमनेकग्रन्थानामग्रन्थकर्तुरेतस्माच्छ्रीनाचार्यश्रीहेमचन्द्रकृतं काव्यानुशासनं सोपज्ञ
स्वाभिर्मुद्रयितुं यत्नं एतेतस्य ग्रन्थस्य मुद्रणाय शोधनसमये येषां पुस्तकानां पुस्त
कानि प्राप्तानि तेषां नामानि धन्यवादपुरःसरं प्रकाश्यन्ते—

| | | |
|---|---|---|
| १ काव्यानुशासनम् | — | पुण्यपत्तनपुस्तकालयात |
| १ काव्यानुशासनविवेक. | — | प कृष्णेश्वरमुकुन्दशर्मणाम्, |
| १ | — | मसहूदस्याम्, |

एवंपरानेकपुस्तकाधारेण शोधितमुद्रितेऽस्मिन्काव्यानुशासनेऽस्माकं प्रमादजन्यो दृष्टिदोषा-
पाद्य यत्र कुत्रचनाशुद्धिः स्थिता चाता वा तत्र सुहृदया सौहार्देन शोधयिष्यन्ति । यत—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जना ॥

इति प्रार्थयत

पण्डित–शिवदत्त–काशीनाथौ ।

# काव्यानुशासनविषयानुक्रमणिका

## मूलग्रन्थश्च ।

विषयः । मूलग्रन्थः । पृष्ठसंख्या ।

बीभत्सरसः— ७९

अहृद्यदर्शनादिविभावाङ्गसंकोचाद्यनुभावापस्मारादिव्यभिचारिणी जुगुप्सा बीभत्सः ।

अद्भुतरसः— ७९

विस्मयदर्शनादिविभावो नयनविस्ताराद्यनुभावो हर्षादिव्यभिचारी विस्मयोऽद्भुतः ।

शान्तरस — ८०

वैराग्यादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृत्यादिव्यभिचारी शमः शान्तः ।

स्थायिभावा — ८१

रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः ।

व्यभिचारिभावा — ८४

धृतिस्मृतिमतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्यावहित्थशङ्काचापलालस्यहर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्माद मोहचिन्तामर्षत्रासापस्मारनिर्वेदावेगवितर्कासूयामृतयः स्थिरत्वदयभ्रमसंविग्नबलत्वप्रमाणस्थायिरसव्यभिचारिणः ।

सात्त्विकभावाः— ९९

स्तम्भस्वेदरोमाञ्चस्वरभेद(स्वर)कम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः ।

रसाभासाः— १०१

निरिन्द्रियेषु तिर्यगादिषु चारोपाद्रसभावाभासौ ।

इति द्वितीयोऽध्यायः ।

---

काव्यदोष — ११०

रसादेः स्वशब्दोक्तिः कविसंचारिधर्म दोषः ।

विषय । मूलग्रन्थः । पृष्ठाङ्क।

बीभत्सरस — ९८

अहृद्यदर्शनादिविभावाऽङ्गसंकोचाद्यनुभावापस्मारादिव्यभिचारिणी जुगुप्सा बीभत्सः ।

अद्भुतरस — ९९

दिव्यदर्शनादिविभावो नयनविस्ताराद्यनुभावो हर्षादिव्यभिचारी विस्मयोऽद्भुतः ।

शान्तरस — १००

वैराग्यादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृत्यादिव्यभिचारी शमः शान्तः ।

स्थायिभावा — १०१

रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः ।

व्यभिचारिभावा — १०२

धृतिस्मृतिमतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्यावहित्थशङ्काचापलालस्यहर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्मादमोहचिन्तामर्षत्रासापस्मारनिर्वेदावेगवितर्कासूयामृतयः त्रिस्त्रदयमश्रममसंधिश्रवलस्वधर्माणस्त्रयस्त्रिंशद्व्यभिचारिणः ।

सात्त्विकभावा — १०३

स्तम्भस्वेदरोमाञ्चस्वरभद(स्वर)कम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः ।

रसाभासा — १०४

निरिन्द्रियेषु तिर्यगादिषु चारोपाद्रसभावाभासौ ।

इति द्वितीयोऽध्यायः ।

काव्यदोष — ११०

रसादेः स्वशब्दोक्तिः कचित्संचारिवर्जं दोषः ।

इत्यष्टमोऽध्यायः ।

# काव्यमाला।

## आचार्यहेमचन्द्रविरचितं

## काव्यानुशासनम्।

स्वोपज्ञालंकारचूडामणिसंज्ञवृत्तिसमेतम्।

---

### प्रथमोऽध्यायः।

प्रणम्य परमात्मानं निजं काव्यानुशासनम्।
आचार्यहेमचन्द्रेण विद्वत्प्रीत्यै प्रतन्यते॥

शास्त्रारम्भे शिष्टसमयपरिपालनाय शास्त्रकारः समुचितेष्टदेवतां प्रणिधत्ते—

अकृत्रिमस्वादुपदां परमार्थाभिधायिनीम्।
सर्वभाषापरिणतां जैनीं वाचमुपास्महे॥ १॥

रागादिजेतारो जिनास्तेषामियं जैनी जिनोपज्ञा। अनेन कारणशुद्ध्योपादेयतामाह। उच्यते इति वाक्, वर्णपदवाक्यादिभावेन भाषाद्रव्यपरिणतिस्तामुपास्महे। उपासनं योगप्रणिधानम्। अकृत्रिमत्वादूनमनाहार्यमाधुर्याणि पदानि नामिकादीनि यस्यां सा तथोक्ता। स्वच्छस्वादुमृदवो हि गुणमात्रवचना अपि दृश्यन्ते। अथ वा अकृत्रिमाण्यसंस्कृतान्यत एव स्वादूनि मन्दधियामपि पेशलानि पदानि यस्यामिति विग्रहः। उक्तं हि—'बालस्त्रीमूढमूर्खाणां नृणां चारित्रकाङ्क्षिणाम्। अनुग्रहार्थं

---

विवरीतुं कविवृन्दं यत् संदर्भितुं कथित्।
ग्रन्थाद्भुतस्वरूपं विवेकः प्रतिपाद्यते॥

---

१ एतिसमेतस्यैव मूलग्रन्थस्य नाम काव्यानुशासनमितीति प्रतीयते काव्यानुशासनपदमेव वा काव्यानुशासनकम्.

तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः ॥' तदेतद्गीतादिसाधारणमिति विधि
नष्टि—परमार्थो निःश्रेयसं तदभिधानशीलां परमार्थाभिधायिनीम् । द्रव्याद्य
नुयोगानामपि पारम्पर्येण निःश्रेयसप्रयोजनत्वात् । तथा सर्वेषां सुरनर
तिरश्चां विचित्रासु भाषासु परिणतां तन्मयतां गतां सर्वभाषापरिणताम् ।
एकरूपापि हि भगवतोऽर्धमागधीभाषा वारिदविमुक्तवारिवदाश्रयानुरू
पतया परिणमति । यदाह—'देवा दैवीं नरा नारीं शबराश्चापि शाब
रीम् । तिर्यञ्चोऽपि हि तैरश्चीं मेनिरे भगवद्गिरम् ॥' न चैवंविधभुवना
द्भुतमतिशयमन्तरेण युगपदनेकसत्त्वोपकारः शक्यः कर्तुम् ॥

अथ मेधावत्प्रवृत्त्यङ्गं प्रयोजनं वक्तुं तत्प्रस्तावनामाह—

शब्दानुशासनेऽस्माभिः साध्व्यो वाचो विवेचिताः ।
तासामिदानीं काव्यत्वं यथावदनुशिष्यते ॥ २ ॥

शब्दानुशासने 'सिद्धहेमचन्द्राभिधाने' । विवेचिताः असाधुभ्यो
वाग्भ्यः पृथक्कृताः । इदानीं शब्दानुशासनानन्तरं तासां वाचां काव्यत्वं
काव्यीभावो यथावद्वास्तविकेन रूपेणानुशिष्यते । वाचां हि साधुत्वे नि
श्चिते सुकरः काव्योपदेशः । अनेन शब्दानुशासन-काव्यानुशासनयोरेक
कर्तृकत्वं चाह । अत एव हि प्रायोगिकमन्यैरिव नारभ्यते। शब्दानुशास
नेनैव चरितार्थत्वात् ॥

शास्त्रप्रयोजनमुक्त्वा अभिधेयप्रयोजनमाह—

काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च ।

---

द्रव्याद्यनुयोगानामपीति । द्रव्यानुयोगचतुर्थो । आचारकल्पधर्मकथागणितानु
प्रभेदाद् । तत्रापरम सम्यग्ज्ञानदर्शनचारित्रैः भवकर्मानुचारमार्गीतकर्मनिर्जरात्वे
संयमतपसी प्रतिपाद्ये इति सर्वकर्मविमोक्षलक्षणमोक्षपरत्वात्परमार्थाभिधायित्वं प्रतीत
मेव । शेषाणां तु पारम्पर्येण द्रव्यस्य योगवशेन प्रधानतया विवक्षितत्वात्मातृका
द्यनुपदेशः । तथा हि । प्रथमानुयोगेन तुर्यादिष्वस्वरूपादानप्रतीतं प्रकरणमात्मा
सर्वक्रियाचारिणमशुभं सारं प्रपद्यते । चेतनाचेतनद्रव्यस्वरूपमपि बोधयतीति
धर्मानुयोगनिरूपणेन द्रव्यस्य गतिनयनेन पुरातनानां सर्वमपि चमत्कारात्मत्वम
निषीदन्ते इत्याद्युत्तरोत्तरेण गणितस्य वैराग्योपजननमिति इतं प्रपूर्यते । इत्यादि

'शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥' इति ।

धनमनैकान्तिकं व्यवहारकौशलं शास्त्रेभ्योऽप्यनर्थनिवारणं प्रकारान्तरेणापीति न काव्यप्रयोजनतयास्माभिरुक्तम् ॥

प्रयोजनमुक्त्वा काव्यस्य कारणमाह—

**प्रतिभास्य हेतुः ।**

प्रतिभा नवनवोल्लेखशालिनी प्रज्ञा । अस्य काव्यस्य । हेतुः प्रधानं कारणम् । व्युत्पत्त्यभ्यासौ तु प्रतिभाया एव संस्कारकाविति वक्ष्यते ॥

सा च सहजौपाधिकी चेति द्विधा । तत्र सहजामाह—

**सावरणक्षयोपशममात्रात्सहजा ॥**

सवितुरिव प्रकाशस्वभावस्यात्मनोऽभ्रपटलमिव ज्ञानावरणीयाद्यावरणं तस्योदितस्य क्षयेऽनुदितस्योपशमे च यः प्रकाशाविर्भावः सा सहजा प्र-

---

पुत्रप्रमास्तथा आचार्यमित्रस्यैव परमप्रीतिकारित्वं काव्यात् [उ]द्भवपाठप्रवेशमुखेन चतुर्वर्गोपायव्युत्पत्तिरप्येषा । इत्थमानुप्रवेशश्च रसास्वादरूप एवाधवरसचतुर्वर्गोपायव्युत्पत्तिमात्मप्रतिबन्धविभावादिसंयोगप्रसादोऽपनत इत्येवं रसोचितविभावानुप्र
रसास्वादवैवश्य(श्य)मेव स्वरसभाविन्या व्युत्पत्ती प्रयोजनमिति प्रीतिरेव प्रयोजिकेत्यर्थः । ननु—'धर्मं वाप्येतिका(?) धर्ममिमानि पूनः पर्श
व्यक्तो दृहाम्परित्यविधिस्तु स्थितिरियम् । त्वचारभ्यं जन्म
न मो योनेषु भि क्वचिदपि प्रवीतान्मनमभूत् ॥'
व्युत्पत्तिरपि च तथात्वरूपिणया पर्याप्यते । ततश्च तदुपदेशमिश्रानागतम्
वाक्यमनुपदेशः । किं तु निषेध्यत्वेन न विधेयत्वेन । न एवंविधा
पुंसां धेमवन्ति तान्यतुल्य परिहरेदिति कवीनां भावः ॥
व्युत्पत्तीनां काव्यप्रयोजनत्वमधाचार्यो प्रतिपाद्य यत् केचित्
मिव धर्म [illegible]
जनमवधुपन्यस्तम्, तत्प्रतिक्षिपति—धनमनैकान्तिकमिति । न
भवत्येवैतस्यैकान्तिकमित्यर्थः । तथा चाह—'उपायमध्यादृषाणीजगत्सु
भवति विकल्पे यथायथस्तरम किमद्भुतम् । न नियतकमः कर्तुर्मार्गा
यद जनयति यत्नु मीहेर्यानं न जातु नयाद्भुतम् ॥' इति ॥ शास्त्रेभ्य

'शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥' इति ।

अनमनैकान्तिकं व्यवहारकौशलं शास्त्रेभ्योऽप्यनर्थनिवारणं प्रकारान्तरेणापीति न काव्यप्रयोजनतयास्माभिरुक्तम् ॥

प्रयोजनमुक्त्वा काव्यस्य कारणमाह—

प्रतिभास्य हेतुः ।

प्रतिभा नवनवोल्लेखशालिनी प्रज्ञा । अस्य काव्यस्य । इदं प्रधानं कारणम् । व्युत्पत्त्यभ्यासौ तु प्रतिभाया एव संस्कारकाविति वक्ष्यते ॥

सा च सहजौपाधिकी चेति द्विधा । तत्र सहजामाह—

सावरणक्षयोपशममात्रात्सहजा ॥

सवितुरिव प्रकाशस्वभावस्यात्मनोऽभ्रपटलमिव ज्ञानावरणीयाद्यावरणं तस्योदितस्य क्षयेऽनुदितस्योपशमे च यः प्रकाशाविर्भावः सा सहजा प्र

---

द्वयप्राधान्यस्तेषां व्यापारमित्यस्येव परमप्रीतिकारिणः काव्यात् [स]हृदयानुप्रवेशमुखेन चतुर्वर्गोपायव्युत्पत्तिरायेषा । हृदयानुप्रवेशश्च रसास्वादमय एव । स च रसश्चतुर्वर्गोपायव्युत्पत्तिनान्तरीयकविभावादिसंयोगप्रसादोपगत इत्येवं रसोचितविभावाद्युपनिबन्धे रसास्वादवैवश्य(श्य)मेव स्वरसभाविन्यां व्युत्पत्तौ प्रयोजकमिति प्रीतिरेव व्युत्पत्तेः प्रयोजिकेत्यर्थः । ननु—'चरां धात्वेतिसा(?) तदभिमनि चून' परिमलापीच्छामो दस्ताम्पत्तिचच्चिविन्दु रिथतिरियम् । तदारम्भं यत्र स्वपमितुमसमर्पेण किमिदं न को बोधेतु त्रि' क्षितिरसि सदीयस्त्वममभूत् ॥' इत्यादिकाव्यमप्युपदेशकं दृश्यते । व्युत्पत्तिरपि च तत्प्रतातिविषयात् संजायते । तथा च तदनुपदेशस्यभिचारिताम् । सत्यम् । व्यत्ययपदुपदेशः । किं तु निषेध्यत्वेन न विधेयत्वेन । न एवंविधा विदग्धाः परकीपुंचा संभवन्ति तान्यवुद्ध्य परिहरेदिति कवीनां भाव ॥ एवमास्वादमयचतुर्वर्गोपायव्युत्पत्तौ काव्यप्रयोजनतामसाधारणीं प्रतिपाद्य यत् केचित् 'श्रीहर्षादेर्धावकादीनामिव धनं राजादिभ्यो‍ोचिताचारपरिज्ञानमित्यादेर्मयूरादीनामिवानर्थनिवारणं च' प्रयोजनमभ्युपगतम्, तत्प्रतिक्षिपति—धनमनैकान्तिकमिति । न हि काव्यादेवं भवतीत्येकान्तिकमित्यर्थः । तथा चाह—'उपहतमफल्याद्वियावीतरस्य धनमिच्छतो भवति विफले यथावाधारत्र किमद्भुतम् । न नियतफलं कर्तुर्भावाः फलान्तरमीयते जनयति खलु व्रीहेर्बीजं न जातु यवाङ्कुरम् ॥' इति ॥ शास्त्रेभ्य इति । चाप

तिभा । मात्रग्रहणं मन्त्रादिकारणनिषेधार्थम् । सहजप्रतिभाबलाद्धि गणभृतो द्वादशाङ्गीमासूत्रयन्ति स्म ॥

द्वितीयामाह—

**मन्त्रादेरौपाधिकी ।**

मन्त्रदेवतानुग्रहादिप्रभवौपाधिकी प्रतिभा । इयमप्यावरणक्षयोपशमनिमित्तैव । दृष्टोपाधिनिबन्धनत्वात्तु औपाधिकीत्युच्यते ॥

सा चेयं द्विधापि प्रतिभा—

**व्युत्पत्त्यभ्यासाभ्यां संस्कार्या ।**

व्युत्पत्त्यभ्यासौ वक्ष्यमाणौ ताभ्यां संस्करणीया । अत एव न तौ काव्यस्य साक्षात्कारणं प्रतिभोपकारिणौ तु भवतः । दृश्येते हि प्रतिभाहीनस्य विफलौ व्युत्पत्त्यभ्यासौ ॥

व्युत्पत्तिं व्यनक्ति—

**लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिः ।**

लोके स्थावरजङ्गमात्मके लोकवृत्ते च शास्त्रेषु शब्दच्छन्दोनुशासनाभिधानकोशश्रुतिस्मृतिपुराणेतिहासागमतर्कनाट्यार्थकामयोगादिग्रन्थेषु का

---

व्यमिप्रसीदेत्र ॥ प्रकारान्तरेणापीति । प्रज्ञाङ्कुरनाशिना ॥ लोके इति । इह लोकशब्देन स्थावरजङ्गमात्मको लोकः । तद्व्यवहारश्चाभिधीयत इत्यर्थः । स च देशकालविशेषादनेकप्रकारः प्रकृतिव्यवहाराख्ये रसप्रपञ्चे प्रपञ्चयिष्यते ॥ शास्त्रेष्वपि । शब्दानुशासनं व्याकरणं ततो हि शब्दशुद्धिः । तन्नैपुण्यं यथा—'त्रिपुरपि शम्भोऽयं स्वे च मे स्तवस्मयमभीमान । तस्यास्य कमी वारय पैशाई सा बहुभीति' ॥ छन्दोनुशासनं छन्दोविचितिः । काव्याभ्यासाकृतपरिज्ञानेऽपि हि भावगतत्वावि तत एव निश्चय । तन्नैपुण्यं यथा—'वन्दिरी च संघती भाहुपरकोऽयो भवैपदि क्षिती श्रीजिनेन्द्रशासनम्' ॥ अभिधानकोशो नाममाला । ततो हि पदार्थनिश्चयः । अपूर्वाभिधानमावसीतं प्रयुक्तमभिधानकोशस्याप्रयुक्तस्याप्रयोज्यत्वात् । यदि तर्हि प्रयुक्तं प्रयुज्यते किमिति पदस्य संदिग्धार्थत्वमावहितम् तत्र सामान्येनार्थगति संभवति । यथा गौरीबन्धेन अवगच्छसमभिलष्यते इति कस्याभिधेयत्व क्रिया पुरस्य भैति संशय । गौरिरायम्वर्न भार्या अवबस्यस्य वाससः इति नाममालाप्रयोज्यमपदिश्यते इति ॥ श्रुतिरियञ्चन्ती श्रुतिः । यथा— सर्वोहाप्सरसः पुरस्तस्मैव यच्छ्ये । तन्नैपुण्यं यथा—'अस्य प्रभुः सममनन्तरमात्मभावं पुरुरवसमेकमपायतस्य(सूत्र) ।

'शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ॥' इति ।

धनमनैकान्तिकं व्यवहारकौशलं शास्त्रेभ्योऽप्यनर्थनिवारणं प्रकारान्तरेणापीति न काव्यप्रयोजनतयास्माभिरुक्तम् ॥

प्रयोजनमुक्त्वा काव्यस्य कारणमाह—

**प्रतिभास्य हेतुः ।**

प्रतिभा नवनवोल्लेखशालिनी प्रज्ञा । अस्य काव्यस्य । हेतुः प्रधानं कारणम् । व्युत्पत्त्यभ्यासौ तु प्रतिभाया एव संस्कारकाविति वक्ष्यते ॥

सा च सहजौपाधिकी चेति द्विधा । तत्र सहजामाह—

**सावरणक्षयोपशममात्रात्सहजा ॥**

सवितुरिव प्रकाशस्वभावस्यात्मनोऽभ्रपटलमिव ज्ञानावरणीयाद्यावरणं तस्योदितस्य क्षयेऽनुदितस्योपशमे च यः प्रकाशाविर्भावः सा सहजा प्र

---

पुत्रप्रायास्तेषां कार्यार्थमितस्त्वेन परमप्रीतिकारिणः प्रश्नात् (प्र)हृदयानुप्रवेशमुखेन चतुर्वर्गोपायव्युत्पत्तिराधेया । हृदयानुप्रवेशश्च रसास्वादमय एवेति रसचतुर्वर्गोपायव्युत्पत्तिनान्तरीयकविभावादिसंयोगप्रसादोऽपगत इत्येवं रसोचितविभावाद्युपनिबन्धे रसास्वादवैवश्य(त्य)मेव स्वरसभाविन्यां व्युत्पत्तौ प्रयोजकमिति प्रीतिरेव व्युत्पत्तेः प्रयोजिकेत्यर्थः । ननु—'चरो वाल्मीकिना(?) तत्रभिमनि भूनः परिम्लायती छायामो [illegible] सिततिरियम् । तथाप्यस्य जन्म कथयितुमस्मात्पैव किमिदं न मो गोऽस्तु कि कथितपि [illegible] ॥' इत्यादिवाक्यमप्युपदेशकं दृश्यते । व्युत्पत्तिरपि च तस्मात्तत्परिणयता संपाद्यते । तत्त्व तदनुपदेश्यमित्याचार्यम् । सम्यक् । अस्त्रप्रयुपदेशः । किं तु निषेध्यत्वेन न विधेयत्वेन । न एवंविधा विषयं परस्त्रीषु पुंसां संभवन्ति तानयुक्तं परिहरेदिति कवीनां भावः ॥ एवमानन्दचतुर्वर्गोपायव्युत्पत्तीनां काव्यप्रयोजनतामसाधारणीं प्रतिपाद्य यत् केचित् 'श्रीहर्षादेर्धावकादीनामिव धनं राजादिगतोचिताचारपरिज्ञानमादित्यादेर्मयूरादीनामिवानर्थनिवारणं च' प्रयोजनमप्युपन्यस्तम्, तत्प्रतिक्षिपति—धनमनैकान्तिकमिति । न हि काव्याद्धर्ममवश्यमेवैकान्तिकमित्यर्थः । तथा चाह—'उपशमफलाद्विद्याबीजात्फलं धनमिच्छतां भवति विफलो यद्यायासस्तदत्र किमद्भुतम् । न नियतफलाः कर्तुर्भावाः फलान्तरमीशते जनयति खलु व्रीहेर्बीजं न जातु यवाङ्कुरम् ॥' इति ॥ शास्त्रेभ्य इति । चाण

विभा। मात्रमद्दर्शं मन्त्रादिकारणनिषेधार्थम् । सहजप्रतिभाबलाद्धि गुणभृतः सद्यो द्वादशाङ्गीमासूत्रयन्ति स्म ॥

द्वितीयामाह—

**मन्त्रादेरौपाधिकी ।**

मन्त्रदेवतानुग्रहादिप्रभवौपाधिकी प्रतिभा । इयमप्यावरणक्षयोपशमनिमित्तैव । दृष्टोपाधिनिबन्धनत्वात्तु औपाधिकीत्युच्यते ॥

सा चेयं द्विधापि प्रतिभा—

**व्युत्पत्त्यभ्यासाभ्यां संस्कार्या ।**

व्युत्पत्त्यभ्यासौ वक्ष्यमाणौ ताभ्यां संस्करणीया । अत एव न तौ काव्यस्य साक्षात्कारणं प्रतिभोपकारिणौ तु भवतः । दृश्येते हि प्रतिभाहीनस्य विफलौ व्युत्पत्त्यभ्यासौ ॥

व्युत्पत्तिं व्यनक्ति—

**लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिः ।**

लोके स्थावरजङ्गमात्मके लोकवृत्ते च शास्त्रेषु शब्दच्छन्दोनुशासनाभिधानकोशश्रुतिस्मृतिपुराणेतिहासागमतर्कनाट्यार्थकामयोगादिग्रन्थेषु का

---

स्यादिप्रणीतेभ्य ॥ प्रकारान्तरेणापीति । मन्त्रानुग्रहादिना ॥ लोके इति । इह लोकशब्देन स्थावरजङ्गमात्मको लोकः। तद्व्यवहारश्चाभिधीयत इत्यर्थः। स च देशकालविभेदादनेकप्रकारः प्रकृतिव्यवहारात्मा रसबोधे प्रपञ्चयिष्यते ॥ शब्देत्यादि । शब्दानुशासनं व्याकरणं ततो हि शब्दशुद्धिः। तदेवोक्तं यथा—'द्विपुरपि सहस्रोऽर्धं एवं च मे सततमध्यगीमाय'। तद्युक्त [illegible] ॥ छन्दोऽनुशासनं छन्दोविचितिः। काव्यात्माद्यवृत्तपरिज्ञानेऽपि हि मात्राच्युतादौ तत एव निश्चयः। तदेवोक्तं यथा—'[illegible] भवति [illegible]' ॥ अभिधानकोशो नाममाला। ततो हि पदार्थनिश्चयः। अपूर्वाभिधानसमावेशं प्रयुक्ताभिधानकोशस्याप्रयुक्तस्याप्रयोज्यत्वात्। यदि तर्हि प्रयुक्तं प्रयुज्यते किमिति पदस्य [illegible] तत्र सामान्येनार्थगतिः संभवति। यथा [illegible] इति [illegible] पुरुषस्य मति [illegible]। '[illegible]' इति [illegible] ॥ अपौरुषेयवचनं श्रुतिः। यथा— '[illegible]' तदेवोक्तं यथा—'[illegible] (सूत्र)'।

अभ्यासं व्याचष्टे—

काव्यविच्छिक्षया पुनः पुनः प्रवृत्तिरभ्यासः ।

काव्यं कर्तुं जानन्ति विचारयन्ति वा ये ते काव्यविदः कविसहृदयाः । वेत्तेर्विन्तेश्चावृत्त्या रूपम् । तेषां शिक्षया वक्ष्यमाणलक्षणया काव्य एव पौनःपुन्येन प्रवृत्तिरभ्यासः । अभ्याससंस्कृता हि प्रतिभा काव्यामृतकामधेनुर्भवति । यदाहुः—'अभ्यासो हि कर्मसु कौशलमावहति । नहि सकृन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधातीति शिक्षयेत्युक्तम्' इति ॥

शिक्षां लक्षयति—

सतोऽप्यनिबन्धोऽसतोऽपि निबन्धो नियमश्छायाद्युपजीवना दयश्च शिक्षाः ।

सतोऽपि जातिद्रव्यगुणक्रियादेरनिबन्धनम्, असतोऽपि जात्यादेरेव निबन्धनम्, नियमोऽतिप्रसक्तस्य जात्यादेरेकत्रावधारणम्, छायाया प्रतिबिम्बकल्पतया आलेख्यप्रख्यतया तुल्यदेहितुल्यतया परपुरप्रवेशप्रतिमतया

---

गुणः कवेः ॥ इति ॥ छायाया इति । छायाया अर्थार्थस्य । तदुपजीवनं कविः प्रतिबिम्बकल्पतया । यथा—'ते पान्तु वः पशुपतेररिनीलभासः कण्ठप्रदेशघटिताः फणिनः स्फुरन्तः । चन्द्रामृताम्बुकणसेकसुखप्ररूढैर्यैरङ्कुरैरिव विराजति कालकूटः ॥' यथा च—'जयन्ति नीलकण्ठस्य नीलाः कण्ठे महाहयः । गलद्गङ्गाम्बुसंसिक्तकालकूटाङ्कुरा इव ॥' यदाह—'अर्थः स एव सर्वो वाक्यान्तरविरचनापरं यत्र । तदपरमार्थविभेदं काव्यं प्रतिबिम्बकल्पं स्यात् ॥' कविरालेख्यप्रख्यतया । तत्रैवार्थे यथा—'जयन्ति धवलव्यालाः शंभोर्जूटावलम्बिनः । गलद्गङ्गाम्बुसंसिक्तचन्द्रकन्दाङ्कुरा इव ॥' यदाह—'किंचित्तापि वस्तुसंस्कारकर्मोपा वस्तु भिन्नवद्भाति । तत्कथितमर्थचतुरैरालेख्यप्रख्यमिति काव्यम् ॥' कविस्तुल्यदेहितुल्यतया । यथा—अपीनादौ हन्त न भवति तुरगे यावदपि पद्मपत्रस्थाम्बुप्रतिवसति यो जीवति सुखम् । अमीषां निर्माणं किमपि तदभूदद्भुतकरिणां वनं वा क्षोणीभृद्भवनमथ वा येन शरणम् ॥' अत्रार्थे—'मति एकस्तुपकम्पायेक एव प्रकारो मुकुरपकरम्यनापर्यन्ति पुष्पिताम । स्फुरति ह तु मनीषा किं तु तद्धाम येन क्षितिपतिभवने वा काकरे वा निवास ॥' यदाह—'विषयस्य यत्र भेदेऽप्यभेदबुद्धिर्नितान्तसादृश्यात् । तत्तुल्यदेहितुल्यं काव्यं बध्नन्ति सुधियोऽपि ॥' कविः परपुरप्रवेशप्रतिमतया । यथा—'जलारातिमितस्विधीभिरभितो पीताम्बर

---

१ 'कल्पतया' इति मूलपुस्तके नपठ्यते

सतोऽपि सामान्यस्यानिबन्धो यथा—मालत्या वसन्ते, पुष्पफलस्य चन्दनद्रुमेषु, फलस्याशोकेषु । द्रव्यस्य यथा—कृष्णपक्षे सत्या अपि ज्योत्स्नाया, शुक्लपक्षे त्वन्धकारस्य । गुणस्य यथा—कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वस्य, कमलमुकुलप्रभृतेश्च हरितत्वस्य, प्रियङ्गुपुष्पाणां तु पीतत्वस्य । क्रियाया यथा—दिवा नीलोत्पलानां विकासस्य, निशानिमित्तस्य शेफालिकाकुसुमानां विस्रंसस्य च ॥

असतोऽपि सामान्यस्य निबन्धो यथा—नदीषु पद्मनीलोत्पलानाम्, स

---

मालतोऽप्यौ कवित्वस्य ॥' इति । मालत्या वसन्त इति । अनिबन्ध' इति पूर्वस्मात्प्रत्येकमभिसंबध्यते । मालत्या वसन्तेऽनिबन्धो यथा—'मकरन्दविमुक्तमैत्रो विभ्रती पुष्पसंपदम् । जातार्थ जातिहीनस्य कथं सुमनस प्रिय(या) ॥' पुष्पफलस्य चन्दनद्रुमेष्वनिबन्धो यथा—यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहित । निजवपुषैव परेषां तथापि संतापमपनयति ॥' फलस्याशोकेष्वनिबन्धो यथा—'दैव पते हि फले किं क्रियतामेतावत्र तु वदाम । नाशोकस्य किसलयैस्तुल्यान्तरपत्रतुल्या ॥' कृष्णपक्षे ज्योत्स्नाया अनिबन्धो यथा—दशरथे जगत्सम पात्रामी समुन्नतैः । वसन्तद्रुमसम्पन्नौ पक्षाविव सितासितौ ॥' शुक्लपक्षेऽन्धकारस्यानिबन्धो यथा—'मासि मासि समा ज्योत्स्ना पक्षयो कृष्णशुक्लयो । तत्रैक शुक्लतां यातो यश पुण्यैरवाप्यते ॥' कुन्दकुड्मलानां कामिदन्तानां च रक्तत्वस्यानिबन्धो यथा—'पोषितामन्तप्रभे कुन्दकुड्मलसमपदत' सिते । कपिवेगामपत्तस्य सुदुर्वर्णाम्बरद्युती ॥' कमलमुकुलानां हरितत्वस्यानिबन्धो यथा—'उद्दण्डोदरपुण्डरीककुसुमभ्रान्तिस्पृशा दंष्ट्रया मग्नां प्रलयमहार्णवपयस(म्म)सि महीमुत्पक्ष्मलो हेलया । तत्पद्मप्रभवस्य राजपदवीत्तालमेवमहं वीरेशाविपदामबाधमघहृदनर्गलितां वपु' ॥ प्रियङ्गुपुष्पाणां पीतत्वस्यानिबन्धो यथा—'प्रियङ्गुश्यामममम्भोधि(धि)रन्ध्राणां समगणम् । चक्रव्यूहमिव सम्यक् स्फुटे मौक्तिकसंपद ॥' दिवा नीलोत्पलानां विकासस्यानिबन्धो यथा—जाम्बिलम पद्मसिताग्रमभिरामं रामानुजे क्षणसमाश्रितचन्द्रबिम्बे । आतपुर्णविकसनायसरोऽपमस्तोत्सुकत्वा सखी कुवलयं प्रददे चकार ॥ निशानिमित्तस्य शेफालिकाकुसुमानां विस्रंसस्यानिबन्धो यथा—'त्वद्विप्रयोग निरवेक्ष्यपोरिधिर्वर्षयास्मि दूरस्य विषयं सविता । इतीव दुःखं सविधे परस्मिन् शेफालिका रोदिति पुष्पबाष्पै ॥' नद्यादिष्विस्यादि । 'निबन्ध' इति प्रत्येकमभिसंबध्यते । तत्र नदीषु पद्मनिबन्धो यथा—'दीर्घिकास्वम्बु मरकत कृमित स्मरणानां प्रसूनेषु स्फुरितकमलमोदमैत्री कषाय' । यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूल शिप्रावात प्रियतम इव प्रार्थना

जातेर्नियमो यथा—समुद्रेष्वेव मकरा, ताम्रपर्ण्यामेव मौक्तिकानि। द्रव्यस्य यथा—मलय एव चन्दनस्थानम्, हिमवानेव भूर्जोत्पत्तिपदम्। गुणस्य यथा—सामान्योपादाने रक्तानां शोणतैव, पुष्पाणां शुक्लतैव, मेघानां कृष्णतैव। क्रियाया यथा—ग्रीष्मादौ संभवदपि कोकिलरुतं वसन्त एव, मयूराणां वर्षास्वेव निरुतं नृत्यं चेति॥

अथ या नियम समय कवीनां यथा—कृष्णनीलयो कृष्णहरितयो

---

यत्नं यथा—'एकाको(का) मलयोपकण्ठसरितामेणाक्षि रोधोभुवामापन्नासमितेतवं मन्मथ प्रायो मनोजन्मनः । याभु श्यामनिशासु पीततमसो मुग्धाननीयन्निय पीयन्ते विरहोर्मयश्च विषमाः कष्टं चकोराङ्गना ॥' चक्रवाकमिथुनस्य निशि भिन्नत यावर्ण यथा—'संक्षिपता यामवतीरुदतिनीनां तनयतापयपूरम् । र(म)नु वरुणा इवयया(शां) किं पोपकृतं निशापेन ॥' समुद्रेष्वेव मकरा यथा—'मेघाम्बरा(?) ममतो ग्रहते सजनामभुग्राहिवमम्बुपतिम् । तापास्वपर्णेषु परिस्फुरत्सु वंशूनकेषो मकरस्य यस्य ॥' ताम्रपर्ण्यामेव मौक्तिकानि यथा—'चमं मधन्तु सरितो भुवि सुप्रतिष्ठाः स्वादूनि सन्तु सलिलानि च शुक्तयश्च । एतां विहाय वरवर्णिनि ताम्रपर्णीं नान्य(न्या)त्र संभवति मौक्तिककामधेनुः ॥' मलय एव चन्दनस्थानं यथा—तापापहारचतुरो नापाचास सुरभिव । नान्यत्र मलयादद्रेरीक्ष्यते चन्दनद्रुमः ॥' हिमवानेव भूर्जोत्पत्तिपदं यथा—'यत्राकरा भासुरतेन यत्र भूर्जत्वच कुञ्जरबिन्दुशोणाः । व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रियवोपयोगम् ॥' मागिक्यानां च शोणतैव यथा—'संसाभिर्किरविरचोपहृतानि कूटः श्यामासु तीरवनराजिषु संभृतानि । रत्नानि ते ददति कश्चिदिहावतापि मेर्वापरोहितविमानविपरिम्बभञ्जम् ॥' पुष्पाणां शुक्लतैव यथा—'पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् । ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥' मेघानां कृष्णतैव यथा—'मेघश्यामेन रामेण पुत्रेषमिविभिन्नराट् । मध्ये महेन्द्रनीलेन रत्नराशिरिवाबभौ ॥' कोकिलरुतं वसन्त एव । यथा—वसन्ते मीतमीतन कोकिलेन वने रुतम् । अन्तर्जलगता पद्मा भोक्तुकामा इवास्थिता ॥ मयूराणामपीव वर्षास्वेव यथा—'मत्तमयूरस वर्हिणि कण्ठैर्मधुरमीतिभि । कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥' कृष्णनीलयोरैक्यं यथा—वयं तूण कर्णोऽप्यनुमतपुलिना यामिन्यमावामामि समुत्तीर्य यस्य कुसुमपल्लवम वक्षामीरतात । तत्र समयोर्व्य वसतिमलिनितो भाति नीलः स यस्मा प्रियसमाये पीने तम्सि इव घन केशपाश सुकेश्या ॥' कृष्णहरितयोरैक्यं यथा—'मरकतसदृशं च यामुनं स्फटिकशिलाविमलं च जाह्नवम् । तदुभयमधुरं

१ रक्तानां' मूलपाठ. समीचीन 'सामान्योपादाने' इत्युपलभ्यात्,

काव्यस्य हेतुमुक्त्वा स्वरूपमाह—

अदोषौ सगुणौ सालंकारौ च शब्दार्थौ काव्यम्।

चकारो निरलंकारयोरपि शब्दार्थयोः क्वचित्काव्यत्वख्यापनार्थः।

यथा—

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

गुणदोषयोः सामान्येन लक्षणमाह—

रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः।

रसो वक्ष्यमाणस्वरूपस्तस्योत्कर्षहेतवो गुणाः, अपकर्षहेतवस्तु दोषाः। ते च रसस्यैव धर्मा उपचारेण तु तदुपकारिणोः शब्दार्थयोरुच्यन्ते। रसाश्रयत्वं च गुणदोषयोरन्वयव्यतिरेकानुविधानात्। तथा हि यत्रैव दोषास्तत्रैव गुणाः, रसविशेषे च दोषाः न तु शब्दार्थयोः। यदि हि तयोः स्युस्तर्हि बीभत्सादौ कष्टत्वादयो गुणा न भवेयुर्हास्यादौ चाश्लीलत्वादयः। अनित्याश्चैते दोषाः। यतो यस्मान्निरस्ते दोषास्तदभावे न दोषास्तद्भावे तु दोषा इत्यन्वयव्यतिरेकाभ्यां गुणदोषयो रस एवाश्रयः ॥

---

स्तुवर्णं भवतः पुमान् ॥ अमरस्य मूर्तत्वं यथा—'अयं स भुवनत्रयप्रथितसंयमः शंकरो बिभर्ति वपुषाधुना विरहकातरः कामिनीम्। अनेन किल निर्जिता वयमिति प्रियायाः करं करेण परिताडयञ्जयति जातहासः स्मरः ॥' अमूर्तत्वं यथा—'चतुर्मोक्षमार्गी इतरक्लिष्टं जनयमयमनो भय धर्मप्रभवश्च इमे पञ्च विशिखाः। इयमन्तु यस्य त्रिभुवनमनाक्ष विमन स च स्मरः स्मराग्निस्तु रचितायाः वसति ॥' निरलंकारयोरपीति। अनेन काव्ये गुणानामवश्यंभावमाह—तथा हि अनलंकृतमपि गुणवत्(मधुरं) काव्यम्। यथोदाहरिष्यमाणं 'शून्यं वासगृहम्—' इत्यादि। अलंकृतमपि निर्गुणं न काव्यम्। यथा—'स्तनकर्परयुगस्था कामिनी जरत्सर्प। विलोलमम्भसा पयः सन्दुग्धमिव तं पिबा ॥' इति। उपचारे णेति। यथा 'भास्वर एवास घट—' इति धार्मिकमुपचा[रवशा]दयमित्यात्मके शरीरे

अलङ्काराणां सामान्यलक्षणमाह—

अङ्गाश्रिता अलंकाराः ।

रसस्याङ्गिनो यदङ्गं शब्दार्थौ तदाश्रिता अलङ्काराः । तेषां च रसस्य सतः कश्चिदुपकारिणः कश्चिदनुपकारिणः । रसाभावे तु वाच्यवाचकवैचित्र्यमात्रपर्यवसिता भवन्ति ॥

तत्र रसोपकारप्रकारानाह—

तत्परत्वे काले ग्रहत्यागयोर्नातिनिर्वाहे निर्वाहेऽप्यङ्गत्वे रसोपकारिणः ।

अलङ्कारा इति वर्तते । तत्परत्वं रसोपकारकत्वेनालंकारस्य प्रवेशः, न बाधकत्वेन, नापि ताटस्थ्येन ॥

---

अवस्थितं । तथा शब्दार्थयोर्माधुर्यादय इत्यर्थः ॥ अङ्गाश्रिता इति । ये त्वङ्गिनि रसे भवन्ति ते गुणाः । एष एव गुणालंकारविवेकः ॥ एतावता— 'शौर्यादिवद्गुणाः केयूरादिवदलंकाराः' इति विवेकमुक्त्वा संयोगसमवायाभ्यां शौर्यादीनामस्ति भेदः । इह तूभयेषां समवायेन स्थितिरित्यभिप्राय 'तस्माद्गड्डरिकाप्रवाहेण गुणालंकारभेदः' इति भामहविवरणे भट्टोद्भटोऽभ्यधात्, तन्निरस्तम् । तथा हि । कवितारः संदर्भेष्वलंकारान्व्यस्यन्ति न्यस्यन्ति च न गुणान् । न चालंकृतीनामपेक्षाहाराहाराभ्यां काव्यं दुष्यति पुष्यति वा । तत्र शब्दालंकारापोद्धरणं यथा— अलंकृतजयपाल चारुचन्द्रमरीचिभिः । मृणालीवलयैरार्ये ममासक्तः परमे परम् ॥' अत्र च—'आलंकृतजयपाल तरलेन्दुमरीचिभिः' इति । अर्थालंकारापोद्धरणं यथा—'श्यामां सितासितसरोजदृशं करोर्मिरिम्यो विभूषयति वाष्पसुधाकणैस्ते । भारे गिरे रचयितुं प्रतिकर्म नार्यः कर्णापि भावतरलोऽवसरे सजन्ति ॥' यथा च— 'श्यामां सितासितसरोजदृशं करोर्मिरिम्या विभूषयति केलिवनेऽरविन्दैः' इति । अर्थालंकाराहरणं यथा—मीनध्वजरश्मीति । यथा च—'मीनध्वजरश्मिपटलानि महेभकुम्भस्थलशीकरविलासि मृगाक्षिसानि' इति । गुणानामपेक्षाहारौ तु न संभवत इति । तथा 'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलंकाराः' इति वामनेन यो विवेकः कृतः सोऽपि व्यभिचारी । तथा हि— यतोऽस्तमर्को मातीन्दुर्यान्ति वासाय पक्षिणः' इत्यादौ प्रसादश्लेषसमतामाधुर्यौजःसुकुमारतौदार्यवतीनां गुणानां सद्भावेऽपि काव्यव्यवहाराप्रवृत्तेः । अपि काचित्कृता वार्ता तथाभिमन्यमानैः । इतीव प्रभुमभावे तथा वर्णयन्तमीक्षते ॥ इत्युत्प्रेक्षालंकारमात्रादभिमतचित्रवद्गुणात्मकाव्यव्यवहारदर्शनात् । तस्माद्यथोक्त एव गुणालंकारविवेकः श्रेयानिति । गुणाश्च प्रथ

यथा—

'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकगत ।
करौ व्याधुन्वत्या पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥'

अत्र भ्रमरस्वभावोक्तिरलंकारो रसपरत्वेनोपनिबद्धो रसोपकारी ॥

बाधकत्वेन यथा—

'सद्य: सन्दामशोभां त्यजति विरचितामाकुल: केशपाश:
क्षीबाया नूपुरौ च द्विगुणतरमिमौ क्रन्दत: पादलग्नौ ।
व्यस्त: कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्या:
क्रीडन्त्या: पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम् ॥'

अत्र पीडयेवेत्युत्प्रेक्षालंकारोऽङ्गी संस्तदनुग्राहकत्वार्थश्लेषं करुणो-चितान् विभावानुभावान् सपादयन् बाधकत्वेन भातीति न शृङ्गाररसो-पकारी ॥

ताटस्थ्येन यथा—

'लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं न ।
मानसमुपैति केयं चित्रगता राजहंसीव ॥'

---

एवमिति गुणवर्णनात्पाये विवेचयितुमाह ॥ चलापाङ्गामिति । मधुकरस्यावलोकने अनिवार्यमिच्छतः शुम्भन्तश्चेदोक्तिरियम् । किमियमकाममास्थितेव न वा अततथा परतया वा इति तत्त्वान्वेषणपरतया बलमर्थास्तत्तत्त्वप्रागमा प्रतिहतामिच्छया संप्रति मधुकर त्वमेव पूर्वोपार्जितपुण्यसंभारो यदस्यां वामगदन्तमाचरसि । तथा हि । चास्मै वि-स्मयवशात्तरलचपाङ्गं पर्यन्तस्पर्शां चपलात्वां दृष्टिं त्वत्स्पर्शनसंत्रासविधुरितनिजशि-क्षितमनवरतं कम्पवतीं तथा मुग्धतया शोभातिशयशालिनीं प्रत्ययकम्पितलीलोत्प-लभिया स्पृशतीत्यमाकर्णमिमपरत: परिचुम्बनमत्ततमो तदञ्चनयनप्रान्तपरिचुम्बन-ममकसम्पर्शविधानमुचितसमनन्यतामुचितमिति । कथमिव न सुकृती भवान् । तथा लोचनकुसुमस्पर्शपरामुख: नमाविधमुचितप्रयत्नोपनिषन्नमान्यातयशस्वीन्दु रागप्रपञ्चामिमत्सेन तनिकटवर्ती मधुप्रियवरि मधुरं स्वनसि विविधमास्वनोपि तदिन्दुमकाकनयनप्रान्तचुम्बनाभिमुखीकृतमन्यावर्जनाभिविधितमनाश्चतदवपे

पुलककलितसागरिकाप्रतिबिम्बदर्शनाभिजाताभिलाषस्य वत्सराजस्येयमुक्तिरवसरस्यैव कविनोपरचितेति श्लेषानुगृहीतोपमालङ्कारभावान्येन प्रस्तुतो रसो गुणीकृतोऽपरिस्थिषटिपथा ॥

अङ्गत्वेऽपि कालेऽवसरे ग्रहणं यथा—

'उद्दामोत्कलिकां विपाण्डुररुचं प्रारम्भजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥'

अत्रोपमा तदनुग्राहकश्च श्लेष ईर्ष्याविप्रलम्भस्य भाविनश्चर्वणाभिमुख्यं कुर्वन्नवसरे रसस्य प्रमुखीभावदशायामुपनिबद्ध उपकारी ॥

न त्वेवम् । यथा—

'वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥'

---

भिलाषमित्यभिप्रायनिवेदनपरतया रत्नावलीव्याख्यानप्रसिद्धमनुचितं भवतीति भयानेव मुक्ती । तथा गमनस्पर्शकम्पोपान्तसमनन्तरप्रवृत्तोऽस्मद्भृतोपकम्पमुपकम्पमुत्तानि श्वासा मोपकारकत्वपानमित्येवाधमसरिर्दपानमगाधिभूनितपामिपानामाकृष्टमनापूर्वकमथ पेपविधे रतिविषये सुरतोपभोगसमयरसाभावधारतया सर्वसमयरसपानमनुम गधीसमस्तसंप्रयनायनमेव सुकवी । किञ्च रत्नावलीव्याख्यानेमाद्यीषरितमुरतर यथा प्रथममपरसुरस्तपानमस्माभिर्विधेयमिति ॥ उद्दामोत्कलिकामिति । यास पस्तनपरिगृहीता नवमालिकालता संप्रति न प्रफुल्ल मासवी कथा तु मत्परिगृहीता प्रफुल्लेति तत्संगमोपवरेन विपाटलद्युति मुखमहं देव्याः करिष्यामीति वत्सराजोक्तिरि यम् । उद्दामा बहुप उद्गता कलिका यस्याः । उत्कलिकाश्च रतरङ्गिका । प्रारब्धमि नेयासरे प्रारब्धा जम्भा विकासो यथा क्षमा सम्भवत्योऽवसरे । श्वसनोद्गमैर्वसन्त

१ 'संभोगशृङ्गारकम्' इत्यर्थ. २ 'ईर्ष्याविप्रलम्भकस्य इत्यर्थ' ३ प्रारम्भ इत्यर्थ. ४ 'भीत इवमिति प्रकारान्तरे इत्यर्थः

१ – 'जृम्भा' पाठ.

अत्र वाताहारत्वं पश्चाद्वाच्यमप्यादावुक्तमित्यतिशयोक्तिरनवसरे गृहीता । तथा हि प्रथमत एव प्रथमपादे हेतूत्प्रेक्षया यदतिशयोक्तेरुपादानं न तत्प्रकृतस्य दम्भप्रकर्षप्रभावतिरस्कृतगुणगणानुशोचनमयस्य निर्वेदस्याङ्गतामेति । न हि वाताहारत्वादधिको दम्भस्तोयकणभत नापि ततोऽधिकं दम्भनस्य मृगाजिनवसनमिति ॥

गृहीतस्याप्यवसरे त्यागो यथा—

'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः ॥'

अत्र प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानोऽपि विप्रलम्भोपकारी ॥

न त्वेवम् । यथा—

'नाशा शक्रदिशामभिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ॥'

अत्र न रावण इत्यस्यावेव त्यागो युक्तः । तथा हि रावण इत्येतज्जगदाक्रन्दकारित्वापर्यायान्तरं प्रतिपादयञ्जनकस्य धर्मवीरं प्रत्यनुमानतां प्रतिपाद्यते । ऐश्वर्यं पाण्डित्यं परमेश्वरभक्तिर्वंशविशेषोऽभिजन इत्येतत्सर्वं लोकमपवाधमानस्याधर्मपरस्य नार्थक्रियाकारकमिति तावतोऽर्थस्य तिरस्कारकत्वेनैव रावणचेष्टितं निर्वाहणीयम् । यत्त्वन्यदुपात्तं क्व नु पुनरिति

---

व्यस्तोऽप्यशैरपरमतो ... अवसरस्यापाद्यमप्यासनमस्योक्ता यत्र तत्तत्त्वतीं नि:श्वासपरम्परामिव्यात्मनः भावार्थं इत्यवसितं चैतावमात्मवती प्रत्यक्षीकुर्वाणाम् । तद मत्स्वरूपेण हयमित्येन मदनेन धमन च । पुष्पमय भावोऽपर्यावसायदानजीवितमिति ॥ रक्तस्त्वमिति । शोकविशेषोऽन्येनदर्शितस्त्वमवश्यस्य तावदपेक्षितमुक्ति । रक्तो लोहितः अहमपि रक्तः प्रयुक्तस्तदाम । तत्र च प्रयोगशा विभागः पद्मराग

यद्यपि ससंदेहत्वेन योऽभ्यतेऽवाक्षेपस्येनापि नेदृगवरो लभ्यते इत्यर्था-न्तरन्यासत्वेन तथापि प्रकृतस्य धर्मवीरस्य न कश्चिन्निर्वाहः ।

नात्यन्त निर्वाहो यथा—

'कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥'

अत्र रूपकमारब्धमनिर्व्यूढं च रसोपकारम् ।

न त्वेवं यथा—

'सद्यिषपक्ष्मकपाटं नयनद्वारं स्वरूपताडेन ।
उद्घाट्य मे प्रविष्टा देहगृहं सा हृदयचौरी ॥'

अत्र नयनद्वारमित्येतावदेव सुन्दरं शृङ्गारानुगुणं न त्वन्यद्रूपणम् ।

निर्वाहेऽप्यङ्गत्वं यथा—

'श्यामास्वङ्गं चकितहरिणीप्रेक्षिते दृष्टिपाता
न्गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासा
न्हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥'

---

इति मन्तव्यम् । एवं प्रतिपाद्यमानोऽर्थो विभावत्वेन व्याख्येयः ॥ सखीनां पुर इति । भयमोऽनवरतं कुरुते नायमेव करोति उत्पश्यन्निवद्यानीमिति भावः । स्वाक्रन्दी कोपावेशेन कथं च मधुरा गीर्यस्या । तथा गीरित्याह—भूयो नैवमि त्येवंरूपम् । एवमिति भयुक्तं तत्किमित्याह—दुश्चेष्टितं मयापराद्धं । संसू(सू)च्य च कृत्वा निर्देशेन । हन्यत एवेति । ननु यथास्थितोऽनुगमोऽनुस्रवते । यतोऽसौ हनने निमित्तीकृतः निह्नुतिपरः प्रियतमस्य तदीयं व्यलीकं च पोढुं समर्थेति ॥ मनिर्व्यूढं चेति । बाहुलतिकयाः पाशत्वेन यदि रूपणं निर्वाहयेदित्थं व्याप्य पूर्वरूपं परम्परारूपादीति । तदा रसभङ्ग स्यादिति ॥ श्यामास्विति । प्रग न्धिप्रियङ्गुलतासु पाण्डिम्ना(?)तमिमा कान्तिकृतत्वेन च योग्यत्वं । शशिनीति । पाण्डुरत्वात् । उत्पश्यामीति । मनोरोत्प्रेक्षे । जीवितसंधारणायेत्यर्थः । हन्तेति । कष्टमेकस्थस्यासामर्थे हि सोऽप्ययमनोऽर्थः सर्वत्र स्थितो न कुत्रचिदेकत्र इति कष्टे इति भवः । भीर्विति । यो हि कातरहृदयो भवति नासौ सर्वमेकत्वं धारयति

अत्र श्लेषायामुत्प्रेक्षायामप्यारोपरूपाया अनुप्राणकं सादृश्यं यथोपक्रान्तं तथा निर्वाहितमपि विप्रलम्भरसोपकाराय ॥

न त्वेवं यथा—

'न्यञ्चत्कुञ्चितमुत्सुकं हसितवत्साकूतमाकेकरं
व्यावृत्तं प्रसरत्प्रसादि मुकुलं सप्रेम कम्पं स्थिरम् ।
उद्भ्रु भ्रान्तमपाङ्गवृत्ति विकचं मज्जत्तरङ्गोत्तरं
चक्षुः साश्रु च वर्तते रसवशादेकैकमन्यक्रियम् ॥'

अत्र रावणस्य दृग्विंशतौ वैचित्र्येण समासोक्तिर्निर्वाहितापि रसस्याङ्गत्वेन न योजितेति ॥

शब्दार्थयोः स्वरूपमाह—

मुख्यगौणलक्ष्यव्यङ्ग्यार्थभेदान्मुख्यगौणलक्षकव्यञ्जकाः शब्दाः ।

मुख्यार्थविषयो मुख्यो गौणार्थविषयो गौणो लक्ष्यार्थविषयो लक्षको व्यङ्ग्यार्थविषयो व्यञ्जकः शब्दः, विषयभेदाच्छब्दस्य भेदो न स्वाभाविक इत्यर्थः ॥

मुख्यमर्थं लक्षयति—

साक्षात्संकेतविषयो मुख्यः ।

अव्यवधानेन यत्र संकेतः क्रियते स मुखमिव हस्ताद्यवयवेभ्योऽर्थान्तरेभ्यः प्रथमं प्रतीयत इति मुख्यः, स च जातिगुणक्रियाद्रव्यरूपस्तद्वि

---

यर्थः ॥ न योजितेति । रसवशादेकैकमन्यक्रियमिति हेतुकर्मात्रेऽप्युक्ते तत्तद्वस्थाभिव्यक्तिभेदोपनिपाताय वैभावाद्यसामर्थ्यसंभवाय च । किंचिद्विभाववैचित्र्यं वक्तव्यं यथा—'समाधौ तावत्सा नरपतिचैत्रे रक्षिते समन्याशोणसमृङ्गु परितामेकलता । चरणकमलयुग्मान्नरपतेः केशनिचयान् कम्पसीत्केन भ्रुकुटिविषयो बाष्पविसरः ॥' अत्र हि भ्रुकुटिः क्रोधस्यानुभावो बाष्पश्च शोकस्य कोपस्येवयोग योपपत्त्याद्भावो वा विभाववस्थापितम् । सा हि तादृशी शोकस्य विभावो दुःखा यस्य तथाभूतस्य क्रोधस्य तथ विभावत्वं संभवति पुरः पतितस्यानुभाववैचित्र्य मावस्ते इति युक्तं विभावस्यापि सतममवचनमेव रसपुष्टिहेतुत्वम् । 'न्यञ्चत्कुञ्चितम्' इत्यादौ तु तत्कृत्याद्यनुभावप्रतिपादनं कविना साधर्म्यतया न कृत

यत्र शब्दो मुख्यो वाचक इति चोच्यते । यथा—गौः, शुक्लः, चलति, देवदत्त इति । यदाह महाभाष्यकारः—'चतुष्टयी शब्दानां प्रवृत्तिः' इति । जात्यादिस्वरूपं च प्रकृतानुपयोगान्नेह वितन्यते । जातिरेव संकेतविषय इत्येके । तद्वानित्यपरे । अपोह इत्यन्ये ॥

मिति । चतुष्टयीति । जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्च । तथा हि । सर्वेषां शब्दानां स्वार्थाभिधानाय प्रवर्तमानानामुपाध्युपदर्शितविषयविशे[ष]कत्वादुपाधिनिबन्धना प्रवृत्तिः । उपाधिश्च द्विविधः । वक्तृयदृच्छासंनिवेशितो वस्तुधर्मश्च । तत्र यो वक्त्र(क्त्रा) यदृच्छया तत्तत्संज्ञिविषयसंज्ञाप्रत्यायनद्वारेण तस्मिंस्तस्मिन् संज्ञिनि निवेश्यते स वक्तृयदृच्छासंनिवेशितः । यथा डित्थादीनां शब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपम् । तदन्तु तां तामभिधानक्रियामभिव्यञ्जयता वक्त्रा यदृच्छया तस्मिं-स्तस्मिन् संज्ञिन्युपाधित्वया संनिवेश्यते अतस्तन्निबन्धनाद्यदृच्छाशब्दा डित्थादयः ॥ येषामपि च [प्र]त्यवमर्शाद्वर्णव्यतिरिक्तसंहृतक्रमस्याभावान्न डित्थादिशब्दस्वरूपं संहृतक्रमसंज्ञिव्यक्तम् इति तेषामपि वक्तृयदृच्छाभिव्यज्यमानसंज्ञिनिवेशानुसारेण अन्त्य-बुद्धिसमुपारूढस्य डित्थादेः शब्दस्य तत्संज्ञाभिधानाय प्रवर्तमानत्वाद् यदृच्छाशब्दत्वं डित्थादीनामुपपन्नमेव ॥ वस्तुधर्मस्य च द्वैविध्यम् । सिद्धसाध्यत्वभेदात् । तत्र साध्यो-पाधिनिबन्धना क्रियाशब्दाः । यथा—पचतीति । सिद्धस्य तु पुनर्द्वैविध्यम् । जातिगुणभे-दात् । तत्र पदार्थप्राणप्रद उपाधिर्जातिः । न हि कश्चित्पदार्थो जातिसंबन्धमन्तरेण स्वरूपं प्रतिलभते । यदुक्तं वाक्यपदीये—'गौः स्वरूपेण न गौर्नाप्यगौर्गोत्वाभिसंबन्धात्तु गौः' इति ॥ लब्धस्वरूपस्य च वस्तुनो विशेषाधानहेतुर्गुणः । न हि शुक्लादेर्गुणस्य पदार्थस्वरूप-प्रतिलम्भनिबन्धनत्वम् । जातिमन्तरेणैव तस्य वस्तुनः प्रतिलब्धस्वरूपत्वात् ॥ जाति रेवेति । तथा हि—गुणशब्दानां तावत्कुङ्कुमादीनां पयःशङ्खबलाकाद्याश्रयसमवेता ये शुक्लादिलक्षणा गुणास्तत्समवेतसामान्यवाचिनः । एवं क्रियाशब्दानामपि गुडतण्डुलतन्तु-प्रभृतिव्यापृता ये पाकादयोऽन्योन्यमत्यन्तविलक्षणाः क्रियाविशेषास्तत्समवेतं सामा-न्यमेव वाच्यम् । यदृच्छाशब्दानां तु डित्थादीनां शुकसारिकामनुष्यप्रभृतिभिरुदीरितेषु डित्थ-विशेषेषु समवेतं डित्थत्वादिकं सामान्यमेव प्रवृत्तौ संज्ञिप्रत्यायनायाभिधेयम् । यदि चोपचयापचययोगितया डित्थादौ संज्ञिनि प्रतिक्षणं भिद्यमानेऽप्यभिन्नाकारो यन्महिमा डित्थो डित्थ इत्येवमादिरन्वयेनाभिधानप्रत्ययो प्रवर्तते तज्जातेः संज्ञान्वये तत्तत्कायमूर्त-डित्थविशेषात्मकवस्तुसमवेतमेव डित्थत्वादिसामान्यमभिधेयम् । तच्च डित्थादिशब्दैर-भिधीयते । इति गुणक्रियायदृच्छाशब्दानामपि जातिशब्दत्वाज्जातिरेव शब्दार्थ इति । तद्वानिति । जातेरर्थक्रियायामनुपयोगाद्विफलः संकेत । यदाह—जातिर्विशेषकारणात्

1 'स्वरूप' इति स्यात्.

1 'वाचिका' इति भवेत्.

गौणं लक्षयति—

मुख्यार्थबाधे निमित्ते प्रयोजने च भेदाभेदाभ्यामारोपितो गौणः ।

गौर्वाहीको गौरेवायमित्यादौ मुख्यस्यार्थस्य साक्षादिमत्त्वादेः प्रत्यक्षा विना प्रमाणेन बाधे निमित्ते च सादृश्यसंबन्धादौ प्रयोजने ताद्रूप्यप्रतिपत्तिरूपे सत्यारोप्यारोपविषययोर्भेदेनाभेदेन च समारोपितोऽत्यथाभूतोऽपि तथात्वेनाध्यवसितो गुणेभ्य आयातत्वाद्गौणः तद्विषयः शब्दोऽपि गौणः, उपचरित इति चोच्यते । तत्र सादृश्ये निमित्ते भेदेनारोपितो यथा—'गौर्वाहीकः' । इदं वक्ष्यमाणरूपकालंकारस्य बीजम्[1] । अभेदेन यथा—'गौरेवायम्' इति । इदमतिशयोक्तिप्रथममेदस्य ॥

अत्र स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने निमित्तत्वमुपयान्तीति केचित् ॥

स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते, न तु परार्थोऽभिधीयते इत्यन्ये ॥

साधारणगुणाश्रयेण परार्थ एव लक्ष्यते इत्यपरे ॥

संबन्धे कार्यकारणभावे आयुर्घृतम्, आयुरेवेदम् । अत्रान्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि प्रयोजनम् । तादर्थ्ये—इन्द्रार्था स्थूणा इन्द्रः । स्वस्वामिभावे—राजकीयः पुरुषो राजा ग्रामस्वामी ग्रामः । अवयवावयविभावे—अग्रहस्त इत्यग्रमात्रेऽवयवे हस्तः । मानमेयभावे—आढको व्रीहिः । संयोगे—रक्तद्रव्यसंयोगाद्रक्तः पटः । तात्कर्म्ये—अतक्षा तक्षा । वैपरीत्ये—अभद्रमुखे भद्रमुखः ॥

लक्ष्यमर्थं लक्षयति—

मुख्यार्थसंबद्धत्वेन लक्ष्यमाणो लक्ष्यः ।

प्रमुख्यत इति । अत्रैवार्थक्रियाकारित्वेऽप्यानन्त्यव्यभिचाराभ्यां न संकेतः कर्तुं शक्यत इति जात्युपहिता व्यक्तिः शब्दार्थ इति । जातिव्यक्तियोगजातिमद्व्यपोहाः शब्दार्थाः-त्वमनुपपन्नमस्मात्प्रतिबिम्बानामयोगात्तदाकारपरिच्छिन्ना बुद्धिप्रतिबिम्बकं सर्वेषां वाच्यार्थस्पर्शस्य शब्दोपोहकत्वाद्वाच्यं शब्दार्थ इति ॥ मुख्या इति । इदमत्र हि शब्दानां मुख्यानां मुख्यत्वं यत्साक्षात्संकेतविषयत्वम् । संकेते च स्वीरैव कारणम् ।

[1] 'बीजम्' इति क्वचित्.

मुख्यार्थो गङ्गादिशब्दानां स्रोतःप्रभृतिस्तेन सम्बद्धस्तटादिरर्थस्तत्त्वे नाभेदेन लक्ष्यमाणो लक्ष्यः । तत्त्वेन लक्ष्यमाण इति वचनाद्भेदमेवाम्यारोपित इति न वर्तते, शेषं तु गौणलक्षणमनुवर्तत एव । तद्विषयः शब्दो लक्षकः । यथा—'गङ्गायां घोषः, कुन्ताः प्रविशन्ति' । अत्र गङ्गाया घोषाधिकरणत्वस्य कुन्तानां प्रवेशस्य वा संभवान्मुख्यार्थबाधः, सामीप्यं साहचर्यं च निमित्तम्, गङ्गातट इति कुन्तवन्त इति च प्रयोगाद्येषां न तथा प्रतिपत्तिस्तेषां पावनत्वरौद्रत्वादीनां धर्माणां तथा प्रतिपादनं प्रयोजनम् ।

गौरनुबन्ध्य इति तु नोदाहरणीयम् । अत्र हि श्रुतिनोदितमनुबन्धनं जातौ न संभवतीति जात्यविनाभावित्वाद्व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते ।

'विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे ।'

इति न्यायात् । न चात्र प्रयोजनमस्ति । अविनाभावादाक्षेपे च यदि लक्ष्यत्वमिष्यते तदा क्रियतामित्यत्र कर्तुः, कुरु इत्यत्र कर्मणः, प्रविश पिण्डीम् इत्यादौ गृहं भक्षयेत्यादेश्च लक्ष्यत्वं स्यात् । 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादौ न पीनत्वेन रात्रिभोजनं लक्ष्यते, अपि तु अर्थापत्त्या आक्षिप्यते इति ॥ इह च यत्र वस्त्वन्तरे वस्त्वन्तरमुपचर्यते स गौणोऽर्थः, यत्र न तथा स लक्ष्य इति विवेकः । कुशलद्विरेफद्विकादयस्तु साक्षात्संकेतविषयत्वान्मुख्या एवेति न रूढिर्लक्ष्यमाणार्थस्य हेतुत्वेनास्मामिरुक्ता ॥

व्यङ्ग्यं लक्षयति—

मुख्याद्यतिरिक्तः प्रतीयमानो व्यङ्ग्यो ध्वनिः ।

---

ततो यदि रूढिमपेक्ष्य लक्षणा प्रवर्तेत तदातिप्रसङ्गः स्यादिति ॥ अस्माभिरिति । न तु मम्मटभट्टादिभिः । तैर्हि रूढिमपि प्रयोजनतया सपक्षस्य लक्षणतया प्रवर्तिता ।

१ 'अनुसरणीयो हन्तव्यो वा' टिप्पणी २ अत्र परे रूढिसञ्ज्ञा सानेन प्रकारेण मता टिप्पणी

मुख्यगौणलक्ष्यार्थव्यतिरिक्त प्रतीतिविषयो व्यङ्ग्योऽर्थः । स च ध्वन्यते द्योत्यते इति ध्वनिरिति पूर्वाचार्यैः संज्ञितः । अयं च वस्त्वलंकाररसादिभेदात्त्रिधा । तथा वाच्यस्तावत्प्रभेदो मुख्यादिभ्योऽत्यन्तं भिन्नः ॥

स हि वाच्ये विधिरूपे प्रतिषेधरूपो यथा—

'भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ तेण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥'

अत्र विस्रब्धो भ्रमेति विधिवाक्ये तत्र निकुञ्जे सिंहस्तिष्ठति त्वं च शुनोऽपि बिभेषि तस्मात्त्वयास्मिन्न गन्तव्यमिति निषेधः प्रतीयते ॥

---

यथाहुः—'रूढेः प्रयोजनाद्वापि व्यवहारेऽनयोऽन्यते' इति ॥ मुख्यगौणलक्ष्यार्थव्यतिरिक्त इति । अयं भावः—यदतो व्यतिरेकेणावभासते तदतोऽन्यदिति व्यवहर्तव्यम् । नीलमिव पीताद्वाच्याविभ्यतिरिक्तश्च व्यङ्ग्योऽर्थोऽवभासत इति ॥ प्रतीतिविषय इति । अनेन सर्वपरसिद्धतामाह । तथा च श्रीमदानन्दवर्धनः—

'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥' वस्त्वलंकाररसेति । इह लौकिकालौकिकभेदेनार्थो द्विधा । लौकिकश्च शब्दाभिधाने योग्योऽविचित्रविचित्रस्वभावतया द्विधा । तत्राविचित्रो वस्तुमात्रम्, विचित्रस्त्वलंकाररूपात्मा । यद्यपि व्यङ्ग्यतायां(?) प्राधान्ये च विचित्रस्यालंकार्यत्वम्, तथापि ब्राह्मणश्रमणन्यायेन तथालंकारव्यपदेशः । अनयोश्च वस्त्वलंकारयोर्व्यङ्ग्यतायां यद्यपि न वाच्यत्वम्, तथापि तयोर्विभावादिरूपत्वात् कथम वाच्यतामयतीति लौकिकत्वम् । अलौकिकस्तु स्वप्नेऽपि वाच्यत्वस्पर्शाक्षमो रसादिरिति ॥ भ्रम धम्मिअ इति । कश्चिद्विनयवधूर्गोदावरीकूललतागहने प्रच्छन्नकामसुखेन सह व्यवहरन्ती कयाचिदन्यया व्याजेन गृहादिविधया सदा रममाणा धार्मिकं पुष्पोच्चयनव्यापारविक्षेपकारिणा विप्रभूतं संमावयन्ती निरन्धानपि मुग्धेन वक्ति । सत्यमास्माकं प्रविश्यतो भयमकरोच्छ्वा निर्विचारः । अस्मत्सौभाग्ययोगेन तेन लोकप्रसिद्धेन सिंहेन कृपापात्रमपि श्वानमपश्यता सिंहेनाप्रतिघरयोग्येन मारित एवमधिता । न तु बुद्धिपूर्वकं हत । विप्रेरकश्चतेरगौणविषयायोष्पात् । न चात्र सिंहस्ते भयकारणम् । यतो भीरुभावत्वा यदा न तु त्वरतारितसुपेक्ष्ये देशे

1 भारिचाम्यादात्ततमास्य इसाख्यो प्रवन्धे' टिप्पणी
2 'भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥ [गाथा २।७५]

---

1 'रसेन' मपेयु.

मत्स्यकं तत्र । न तु ततो दूरे व्यापद्गते दुर्गमागोचरे स्थाने वसति धवलगृहवास्तव्य-त्वेन निर्भयमितस्ततो भिक्षार्थं [स] चरेति । एवमादौ च विषये यद्यपि रसादिरर्थो व्याप्योऽस्ति तथापि महाराजसम्बन्धव्यपदेशविवाहकरमप्राप्तविषयानुयायिराजवत् प्रधानमेव गृह्यते । व्यापकमसमर्थमेवमभिधीयते इति व्याख्याने असमर्थोऽसमर्थो भवतात प्रयोजनाभावे व्यापृते निषेधो व्यापृत इति न संबन्धमास्कन्दते । इह वासिनेति चाभिधेय स्यात् । न चात्र निषेधस्य वाच्यत्वं वक्तुं शक्यम् । तथाहि । अगृहीतसंके-तस्यार्थप्रतिपत्तेरकरणाद्गृहीतसंकेत एषशब्दोऽर्थप्रतिपादकः । संकेतश्चानन्त्याद्व्यभिचा-राच्च वाक्यार्थ इव वाक्यस्य विशेषरूपे पदार्थे पदस्य कर्तुं न पार्यत इति सामान्य-रूपाणां आकाङ्क्षायोग्यतासंनिधिवशात्पदार्थानां सामान्यभूतानां समन्वय इति । सामा-न्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि' इति । विशेषरूप—'विशेषं नाभिधा गच्छे-त्क्षीणशक्तिर्विशेषणे' इत्यपदार्थोऽपि वाक्यार्थं समेति । विशेषश्च यत्राप्रस्ता-वेन तत्र वस्त्वन्तरस्येव निषेधस्य वाच्यत्वमिति च कथमभिहितान्वयवादे तावत् विधिवदेव निषेधस्य व्यापृतता । येऽप्याहुः—'अनन्वितार्थे पदमप्रयोज्यम्' इति प्रयोगयोग्यं वाक्यमेव तत्र च संकेतो गृह्यत इत्यपरपदार्थान्वित एव पदार्थे संके-तः ॥ यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वित पदार्थे संकेतग्रहः तथापि सामान्याव-च्छिन्नो विशेषरूप एवासौ प्रतिपद्यते । व्यतिषक्तानां पदार्थानां तथाभूतत्वाद्विशे-षितमभिधानवये वाक्यार्थो न पदार्थ' इति तन्मतेऽपि सामान्यविशेषरूपः पदार्थः संकेतविषय इत्यतिविशेषभूतो वाक्यार्थान्तर्गतोऽसंकेतितत्वादवाच्य एव । यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतनिषेधस्य वार्ता । अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तर-मात्रेणान्वितस्तु अन्विताभिधाने अन्वितविशेषस्त्ववाच्य एवेत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः ॥ यदप्युच्यते—'नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्ते' इति । तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा । शब्दस्य प्रकाशकत्वान्न कारकत्वं ज्ञापकत्वं त्वज्ञातस्य कथम् । ज्ञातत्वं च संकेतेनैव स चान्वितमात्रे । एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति नैमित्तिकार्थानुसारेण निमित्तानि कल्प्य-न्त इत्यविचारिताभिधानम् ॥ ये त्वभिदधति—'सोऽयमिषोरिव दीर्घदीर्घो[1] व्यापारः' इति यत्परः शब्दः स शब्दार्थ इति च प्रतिषेधाय वाच्य इति । एतदतात्पर्यज्ञत्वं तात्पर्यवाचोयुक्तेर्देवानां प्रियाणाम् । तथा हि । भूतभव्यसमुच्चारणे भूतं भव्यायोप-दिश्यत इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभि-संबन्धात्साध्यायमानतां प्राप्नुवन्ति । ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते । यथा 'रक्तं पटं वय' इत्यादावेकविधिर्द्वित्रिविधिर्वा । ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यम् । न तु प्रतीतमात्रे । एवं हि 'पूर्वो धावति'

---

१ 'दीर्घदीर्घतरो' काव्यप्रकाशे

इत्याद्यपदार्थेऽपि कश्चित्तात्पर्यं स्यात्॥ ननु—'विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्था' इत्यत्र एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थ इत्युच्यते। तत्र च-कार एकवाक्यतासूचनार्थः। न चात्र वाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणस्य कुतश्चित्कस्यचिदङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुङ्क्था इत्युपात्तवाक्यार्थ एव तात्पर्यम्॥ यदि च शब्दश्रुतेरनन्तरं यावानर्थोऽवगम्यते तावति शब्दस्याभिधैव व्यापारः तत्कथं 'ब्राह्मण पुत्रस्ते जातो ब्राह्मण कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम्। कस्माच्च लक्षणा। किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थान[स]माख्यानां पूर्वपूर्वबलीयस्त्वमित्यभिधानपदेऽपि निषेधस्य सिद्धं व्यङ्ग्यत्वम्॥ किं च कुरुरुचिमिति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम्। न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वित इत्यनभिधेय एवैषोऽर्थः एवमादेरपरिहार्यं स्यात्॥ यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदासाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात्। न चानुपपन्नं सर्वस्यैव विभक्ततया प्रतिभासनात्। वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयेण तु व्यङ्ग्यस्य बहुविधत्वात्क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था। 'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः।'[1] इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां[2] काव्यानुगुणत्वम्॥ अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रत्येकरूप एवेति नियतोऽसौ न हि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति। प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते। तथा च 'गतोऽस्तमर्कः' इत्यतः 'सपत्नं प्रत्यवस्कन्दनावसर' इति 'अभिसरणमुपक्रम्यताम्' इति 'प्राप्तप्रायस्ते प्रेयान्' इति 'कर्मकरणान्निवर्तामहे' इति 'सान्ध्यो विधिरुपक्रम्यताम्' इति 'दूरं मा गाः' इति 'सुरभयो गृहं प्रवेश्यन्ताम्' इति 'संतापोऽधुना न भवति' इति 'विक्रेयवस्तूनि संह्रियन्ताम्' इति 'नागतोऽद्य प्रेयान्' इत्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभाति। वाच्यव्यङ्ग्ययोः 'निःशेष—' इत्यादौ निषेधविध्यात्मना 'मात्सर्यमुत्सार्य विचार्य कार्यम्' इत्यादौ संशये शान्तशृङ्गारान्यतरगतनिश्चयरूपेण 'कथमवनिप दर्पो यन्निशातासिधाराविदलितगजकुम्भीसङ्गिता विद्विषां स्त्रीकृता श्रीः। ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः' इत्यादौ निन्दास्तुतिवपुषा 'हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः। तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशोभारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥' इत्यादौ स्तुतिनिन्दात्मना स्वरूपस्यापूर्वपश्चाद्भावेन प्रतीतेः। कालस्य शब्दाश्रयत्वेन तदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन चाश्रयस्य शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तत्र चावगम इति निमित्तस्य बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचमत्कारयोः कारणकार्यस्य

1 'विपरीते' काव्यप्रकाशे 2. 'कपालादीनां' काव्यप्रकाशे

'गतोऽस्तमर्कः' इत्यादौ प्रदर्शितनयेन संख्यामा 'कस्स व-' इत्यादौ सखीतिरस्कारा-
भिगठत्वेन विषयस्य च भेदोऽपि यथोक्तं तत्रापि नीलानीलयोः भेदो न स्यात् ।
उक्तं हि— अयमेव भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति । वाचकाना-
मर्थापेक्षा व्यञ्जकानां तु न तदपेक्षत्वमपीति न वाचकत्वमेव व्यञ्जकत्वम् । किं च ।
'वाणीरकुडङ्ग-' इत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूप एव यत्र विश्राम्यति
तत्र गुणीभूतव्यङ्ग्यभेदे तात्पर्यशक्तोऽप्यर्थः स्वरूपेणाभिधेय । प्रतीतिप्रथमपदरत्वस्य
व्यापारस्य विषयत्वमवलम्ब्यताम् ॥ ननु 'रामोऽस्मि सर्वं सहे' इति रामेण प्रियजी-
वितेन तु कृतं प्रेम्णः प्रिये नोचितम्' इति । 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः
प्रसिद्धिं पराम्' इत्यादौ ध्वनीयोऽर्थो नानात्वं भजते विशेषव्यपदेशहेतुश्च भवति
तदवश्यमेव शब्दार्थयोः प्रकरणादिसव्यपेक्षत्वेति कोऽयं नूतनः प्रतीयमानो नाम ।
उच्यते— ध्वनीयमानार्थस्य नानात्वेऽप्यनेकार्थशब्दाभिधेयवदनियतत्वमेव न यत्र
मुख्येनार्थेनाभिमतसंबन्धो व्यवस्थापयितुं शक्यते अपि तु प्रकरणादिविशेषवशेन नियत-
संबन्धोऽनियतसंबन्धः संबन्धसंबन्धश्च द्योत्यते । न च 'भम धम्मिअ' इत्यादौ
अर्थापत्तिमूले व्याप्ते मुख्यार्थबाधकत्वमत्र लक्षणायामपि लक्षणमवश्यमभ्युपेयम् ।
यथा च समयसव्यपेक्षाभिधा । तथा मुख्यार्थबाधादित्रयसमयसव्यपेक्षा लक्षणा ।
अत एव अभिधापुच्छभूता सा इत्याहुः । न च लक्षणात्मकमेव ध्वननं तदनुगमेन
तस्य दर्शनात् । न च तदनुगतमेव । अभिधाव्यभिचारेणापि तस्य भावात् । न च गौणला-
क्षणिकव्यापारानुसारेणापि तस्य दृष्टेः । न च शब्दानुसारेण अशाब्दस्यप्यनेन
विभावादिरूपेऽनाक्षिप्तेनापि तस्य सिद्धेः । इत्यभिधातात्पर्यलक्षणात्मकव्यापारत्रया-
तिवर्ती ध्वननव्यापारोऽपरिहार्य एवेति सिद्धमेव विषयस्य व्याप्यत्वम् । तत्र 'भम
धम्म-' इत्यादौ नियतसंबन्धः । 'कस्स व ण होइ रोसो-' इत्यादावनियतसंबन्धः ।
'विवरीअरए लच्छी बम्हं दट्ठूण णाहिकमलत्थम् । हरिणो दाहिणणअणं रसाउला झत्ति
ढक्केइ ॥'[1] इत्यादौ संबन्धसंबन्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मता व्यज्यते ।
तन्निमीलनेन सूर्यास्तमयस्तेन पद्मस्य संकोचः ततो ब्रह्मणः स्थगनं तत्र सति
गोप्याङ्गस्यादर्शनेऽनिवारितं निधुवनविलसितम् । येऽप्याहुः— 'अखण्डबुद्धिनिर्ग्राह्यं वा-
क्यमेव च वाचकम् । वाक्यार्थ एव वाच्यः-' इति तैरप्यविद्यापदपतितैः पदपदार्थ-
कल्पना कर्तव्यैवेति । तत्पक्षेऽप्यवश्यमेव विषयस्य व्याप्यत्वम् । अन्ये तु— वाच्या-
र्थसंबद्धं तावत् प्रतीयते । यतः कुतश्चित्तस्य कस्मिन्नर्थस्य प्रतीतौ प्रसङ्गात् । एवं च
संबन्धाद्व्यङ्ग्यव्यञ्जकभावोऽस्य प्रतिबन्धे न भवतीति त्रिरूपलिङ्गतोरेव लिङ्गधर्मि-
णिरूपेण प्रतीतिः । तथा च 'भीरुभ्रम(ण)स्य कारणं भयकारणाभावलङ्घितं च भय-
कारणम् सिंहाद्युपलब्ध्यतामस्तेऽभ्रमणमनुमीयत' इति विद्यादायामपि काव्ये सिद्ध

---

१ विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥' [इति च्छाया]

क्वचिन्निषेधे विधिर्यथा—

'अत्ता इत्थ णु मज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ सेज्जाए महं णु मज्जिहिसि ॥'

अत्रावयोः शय्यायां मा निपतसीति निषेधवाक्ये—इयं श्वश्रूशय्या इयं मच्छय्येति दिवाप्युपलक्ष्य रात्रौ त्वयेहागन्तव्यमिति विधिः प्रतीयते ॥

क्वचिद्विधौ विध्यन्तरं यथा—

'गेहल्लमा हअराई अज्ज पउत्थो पई घरं सुण्णम् ।
तह जग्गिज्ज सअज्झिअ न जहा अम्हे मुसिज्जामो ॥'

अत्र यथा वयं न मुष्यामहे तथा त्वं जागृहीति विध्यभिधाने रात्रिरत्यन्धकारा, पतिः प्रोषितः, गृहं शून्यम्, अतस्त्वमस्मदर्थमागच्छेति विध्यन्तरं प्रतीयते ॥

क्वचिन्निषेधे निषेधान्तरं यथा—

'णिासाइयं अणाएण मेघीयं सत्तिएण बंधदिहिं ।
उरमसुगसहइन्हिं रत्तिलज्जइ गहवईछित्तम् ॥'

---

सत्रावादि निषेधादेरनुमापकम् । न तु व्यञ्जकमपि इति [ये] वदन्ति । तेऽपि न पुष्पवाचिनः । तथा हि । भ्रमणाद्भूतवाक्यप्रत्येयः सिंह इति संदिग्धासिद्धो हेतुः । स्वाम्यादेशेनानुरागेण लोभेनान्येन वा केनचिद्विशेषेण हेतुना भीरोरपि भयकारणसद्भावेऽपि भवति भ्रमणमित्यनैकान्तिकः । शुनः कपापात्रत्वात्प्रतीयमानत्वेन विभर्ति । सिंहे तेजस्विनि तु पराक्रम इति विरुद्धः । तत्कथमनुमानम् । एवंविधादर्थादेवं विधोऽर्थ उपपद्यमानोऽस्त्वेव प्रकाशत इति ॥ व्यक्तिवादिनस्तु तदनुपपन्नम् ॥ अत्तेति । अपूरवधिष्णुर्न तु मता । तेन(?) शुश्रमभिप्राय पोषणीयः । न च सर्वदा मयपेक्षसाद— अत्रेति । दूरे । सा च सेते न जागर्ति । अत्र त्वमार्पणिकटे महत्सुपभोगपोत्था

---

१   श्वश्रूरत्र तु भवति अत्राहं दिवसकं प्रलोकय ।
    मा पथिक रात्र्यन्धक शय्यायामावयोर्नु मङ्क्ष्यसि ॥' [गाथा ७।६७]
२.  गृहस्थमा हतरात्रिरद्य प्रोषितः पतिर्गृहं शून्यम् ।
    तथा जागृहि प्रतिवेशिनि यथा वयं मुष्यामहे ॥' [गाथा ४।३५]
३ 'जग्गसु समज्झिअ' इति गाथासप्तशत्यां (४।३५) पाठः
४   ''        ''       ।
                              गृहपतिपौत्रम् ॥' [इति च्छाया]

अत्र गृहपतिक्षेत्रे दुग्धमृगवारणापरे निषेधवाक्ये उपपतिवारणं निषेधान्तरं प्रतीयते ॥

क्वचिदविधिनिषेधे विधिर्यथा—

'मेहुएहिं किं व पन्थिअ जइ हरसि णियंसणं णियम्बाओ ।
साहेमि कस्स रत्ते गामो दूरे अहं एक्का ॥'

इति । अत्र विधिनिषेधयोरनभिधाने अहमेकाकिनी ग्रामो दूरे इति विविक्तोपदेशात्कितम्बवासोऽपि मे हरेति विधिः प्रतीयते ॥

क्वचिदविधिनिषेधे निषेधो यथा—

'जीविताशा बलवती धनाशा दुर्बला मम ।
गच्छ वा तिष्ठ वा पान्थ स्वावस्था तु निवेदिता ॥'

अत्र गच्छ वा तिष्ठ वेति अविधिनिषेधे 'जीविताशा बलवती धनाशा दुर्बला मम' इति वचनात् त्वया विनाहं जीवितुं न शक्नोमीत्युपक्षेपेण गमननिषेधः प्रतीयते ॥

क्वचिद्विधिनिषेधयोर्विध्यन्तरं यथा—

'णिब्भवइअदंसणुसिय पहिय अन्नेण वच्चसु पहेण ।
गहवइधूया दुल्लङ्घवाउरा इह हयग्गामे ॥'

अत्रान्येन पथा व्रजेति विधिनिषेधयोरभिधाने हे स्वकान्तामिरूपता

---

धीमत्वं नितम्बधारीति कुत्सितं निवसनम् तस्मात्संप्रति निरीक्षस्व । एहि परस्परावलोकनसुखमनुभवाव । पथिकेति । नैसिते(?) तव न शोभावहमिति न नेतव्यम् । ग्रामविषमत्वात्प्रेमपरस्य सम्पातिभापानमिह ग्राम्यायां मा शङ्किष्ठाः अपि तु मयि । मम मातापित्रोः, अपि तु मैत्रेण । मा शङ्किष्ठा अपि तु महत्पदुत्वमपि निपुणत्वेन क्रीडा । मह इति निपातोऽत्रानेकार्थवृत्तिः । न तु ममेति । एवं हि विशेषवचनमेवाप्रयुक्तमपि मयैवेति प्रत्यक्षमनुपपन्नो न स्यात् । विधिरिति । कश्चित्प्रोषितपतिका तरुणीम-

---

१ ·· ···पथि हरसि नितम्बवासः ।
ग्रामो दूरे अहमेकाकिनी ॥' [इति च्छाया]

२ निर्भरदर्शनोत्सुक ·· पथिकान्येन व्रज पथा ।
गृहपतिसुता दुर्लङ्घ्यवागुरेह हतग्रामे ॥' [इति च्छाया]

---

१ 'मनिभ्रमतीन' पाठ.

विकस्थनपान्थाभिरूपक इह ग्रामे भवतो गृहपतिसुता द्रष्टव्यरूपेति विध्यन्तरं प्रतीयते ॥

क्वचिद्विधिनिषेधयोर्निषेधान्तरं यथा—

'उच्चिणसु पडिय कुसुमं मा धुण सेहालिअं हलिअसुन्हे ।
एस अवसाणविरसो ससुरेण सुओ वलअसद्दो ॥'

अत्र पतित कुसुममुच्चिनु मा धुनीहि शेफालिकामिति विधिनिषेधयोरभिधाने सति श्वशुरेण प्रसक्ते वलयशब्दो न कर्तव्य इति निषेधान्तरं प्रतीयते ॥

क्वचिद्विधावनुभयं यथा—

'सिणियं वच्च किसोयरि पएण यत्तेण ठविसु महिवट्ठे ।
भज्जिहि सिविच्छियच्छणि विहिणा दुरेकण्णनिम्मविया ॥'

अत्र शनैर्व्रजेति विध्यभिधाने न विधिर्नापि निषेध, अपि तु वर्णनामात्र प्रतीयते ॥

क्वचिन्निषेधेऽनुभयं यथा—

'हे आ पसिय नियत्तसु मुहससिजोण्हाविलुत्ततमनिवहे ।
अहिसारियाणं विग्घं करेसि अन्नाणं वि हयासे ॥'

---

वलयेन मधुरमद्याकुर' संपन्न' पान्थोऽनेन निषेधद्वारेण तथाभ्युपगत इति मिषेभासमो विधिर्न तु निमन्त्रणस्योऽप्रवृत्तप्रवर्तनात्मभाव । शीमागन्धाभिमननमभिमाय-भेदात् ॥ हे मा इति । कश्चिदभिसर्तुं प्रयता एतावन्तं प्रियतममनमेनव समं निवृत्यभिमतेन येनैवमुच्यते । हे इति निपात: प्रार्थनायाम्। मा इति तावच्छ-

---

१ उच्चिनु पतितानि कुसुमानि मा धुनीहि शेफालिकां हालिकस्नुषे ।
एषोऽवसानविरस: श्वशुरेण श्रुतो वलयशब्द ॥ [इति च्छाया]

२ 'अह हे विसमविराओ' इति ध्वन्यालोक.

३ 'शनैर्व्रज कृशोदरि पदेन यत्नेन तिष्ठ महीपृष्ठे ।
॥ [इति च्छाया]

४ 'प्रार्थये तावत्प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥ [इति च्छाया]

अत्र निवर्तस्वेति निषेधाभिधाने न निषेधो नापि विधिरपि तु मुखेन्दु कान्तिवर्णनामात्र प्रतीयते ॥

क्वचिद्विधिनिषेधयोरनुभय यथा—

'वच्च मह व्विअ एक्काए हुन्तु निस्सासरोइयव्वाइं ।
मा तुज्झ वि तीइ विणा दक्खिण्णहयस्स जायन्तु ॥'

अत्र ममैव निःश्वासरोदितव्यानि भवन्तु मा तवापि तां विना तानि जायन्तामिति विधिनिषेधयोरभिधाने न विधिर्नापि निषेधोऽपि तु कृतव्यलीकप्रियसमोपालम्भमात्र प्रतीयते ॥

क्वचिदविधिनिषेधेऽनुभयं यथा—

'णहमुहपसाहिअंगो निद्दाघुम्मन्तलोअणो न तहा ।
जह निव्वणाहरोसाम भमसि घुमेसि मह हिययम् ॥'

विगतमत्सरायाः मम न तथा नखपदादिचिह्नैः भवदङ्गसन्निवेशादर्शः य मार्गनिष्पन्नसंभोगतयाधरदशनासंपत्तिरितीर्ष्याकोपगोपनमुपभोगोद्वेगेन कृत माध्योऽर्थ । तद्व्यक्तमुक्तस्तु सहृदयोपेक्षितोऽत्यन्तचारुम्भान्मुखतु

---

व्रजेति । प्रार्थये प्रसीद तावन्निवर्तस्व किमेतत्कथाचित्प्रभवति भवद् भामध्यनमि तस्मादुप- मसुपम । एतच्च जानाति चल्कल्पपसे तदुचितवेषात्मा निजवदनकमलसा कुरुपर्व करोमीति न केवलमात्मना चित्तं करोषि यावदन्यासामपि आत्मानम् । इसीति । सन्तानितमयस्तवया किमत इति परममितमयज्ञाहतो मन्यते इति ॥ वच्चेति । कश्चिदन्यस्त्रीप्रार्थितो निं भवन् इवचित कस्याचिदेवमुच्यते । मम इह हि ते कल्प- कानामुपरि स्थितिः । ममैव न तु तव तस्या वा एकस्या नाम्ना हि मत्समा भवति । भवन्तु दुःखान्यपि सन्तु । निःश्वासरोदितव्यानि न तु सुखानि । मा तथापि दाक्षिण्यमात्रेणैव स्थितोऽसि तवस्त्वपि स्थितेऽपि मम च निवर्तन्ते निःश्वासादीनि तवयोर्मे मूल हेतु । तथा विना न तु मत्स्नेपात् । दाक्षिण्येन हृदयमन्यरक्तमात्र

१ 'व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत ॥ [इति च्छाया]
२. नखमुखप्रसाधिताङ्गो निद्रोन्मीलितलोचनो न तथा ।
यथा नि···                दूनयसि मम हृदयम् ॥ [इति च्छाया]

---

१ 'स्मो' स्वाप, २. 'मुहसीति' स्वाप,

ध्यानपर एव तस्यास्त्वं यत्त्वदधरखण्डनावसरोऽस्या वराक्या न जात इति न केवलं तस्या भवानतिवल्लभो यावद्भवतोऽपि सा सुतरां रोचते इति मम मिदानीं त्वत्प्रेमनिराशा सञाता इति नायिकाभिप्रायो व्यङ्ग्यः ॥

क्वचिद्वाच्याद्भिन्नविषयत्वेन व्यवस्थापितो यथा—

'कस्स व न होइ रोसो दट्ठू(ट्ठू)ण पियाइ सव्वण अहरम् ।
सभमरपउमग्घाइरि वारिअवामे सहसु इन्हिम् ॥'

अत्र वाच्यं सखीविषयम्, व्यङ्ग्यं तु तत्कान्तोपपत्त्यादिविषयम् ॥
एवमलंकारभेदा रसादिभेदाश्च व्यङ्ग्या मुख्यादिभ्योऽतिरिक्ता ज्ञेयाः ।
तद्विषयो व्यञ्जकः शब्दः ॥

मुख्याद्यास्तच्छक्तयः ।

मुख्या गौणीलक्षणाव्यञ्जकत्वरूपाः शक्तयो व्यापारा मुख्यादीनां शब्दानाम् । तत्र समयापेक्षवाच्यावगमनशक्तिर्मुख्याभिधा चोच्यते । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्गौणी लक्षणा च । तच्छक्त्युपजनितार्थावगमपवित्रितप्रतिपत्तृप्रतिभासहायार्थद्योतनशक्तिर्व्यञ्जकत्वम् ॥

---

कारणेन हतस्य निर्भर्त्सितस्याभिनिवर्तेरि । कस्स वेति । कस्य वानीष्यालोरपि । न भवति रोषो दृष्ट्वान्यस्यापि कृतविरेधापूर्वेतया प्रियायाः सव्रणमधरं विशेषेण । सभ्रमरपद्माघ्राणशीले शीलं हि कस्यचिदपि वारयितुं न शक्यम् । वारिते वारणायां हे वामे तदनङ्गीकारिणि सहस्वेदानीमुपालम्भपरम्परामिमाम् । एतत्कोऽपि विदग्धनरमध्येन वञ्चितापरां विदितमिव प्रकाशयन्ती तत्प्रत्यायनाय सखी वक्ति । सहस्वेदानीमिति वाच्यमविनयवतीविषयं व्यङ्ग्यम् । भर्तृविषयं तु तव मुग्धस्येऽपराधो नास्तीति । वैरूप्ये तु भयेत्थं पर्यस्तमत' प्रियेयमिति हत्वा सहस्वेति व्यङ्ग्यम् । तस्यां प्रियेण एवमुपालभ्यमानायां तत्पक्षीकृतागूढप्रातिवेश्मिकलोकविषयं चातिनयप्रच्छादनेन प्रकाशनं व्यङ्ग्यम् । तत्सपत्न्यां च तदुपालम्भतदविनयप्रख्यापनाभ्यां सौभाग्यातिशय ख्यापनं प्रियाया इति वाच्यमस्मिति सपत्नीविषयं व्यङ्ग्यम् । सपत्नीमध्ये इयती खली

---

१ 'कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥' [इति च्छाया]

---

१ क्वचिदविनीता कृतविलसितापरा तत्सविधसंनिधाने भर्तरि तमनवलोक्य नयेन कयाचिद्विदग्धसख्या तद्वाच्यतापरिहारार्थमुच्यते' इति लघ्वालोकेऽप्युक्तं

अभिधानन्तरं च यद्यप्यन्वयप्रतिपत्तिनिमित्त तात्पर्यशक्तिरप्यस्ति तद्विषयस्तात्पर्यलक्षणार्थोऽपि, तथापि तौ वाक्यविषयावेवेति नात्रोक्तौ ॥

वक्त्रादिवैशिष्ट्यादर्थस्यापि व्यञ्जकत्वम् ।

वक्तृप्रतिपाद्यकाकुवाक्यवाच्यान्यासत्तिप्रस्तावदेशकालचेष्टादिविशेषवशादर्थस्यापि मुख्यामुख्यव्यङ्ग्यात्मनो व्यञ्जकत्वम् ॥

वक्तृविशेषाद्यथा—

'दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायो नास्य शिशोः पिताद्य विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्राः पुनरालिखन्तु जरठच्छेदा नलग्रन्थयः ॥'

अत्र चौर्यरतगोपनं गम्यते ।

प्रतिपाद्यविशेषाद्यथा—

'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमा
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥'

---

स्यासीति अत्यन्तमात्मनि प्रवृत्तं न युक्तम् । प्रस्तुतार्थं मन्युप्रभो यतो रोषे कुपिता पादपतनादि क्षमस्व इति । सहस्व योगस्येशानीमिति सखीविषयं सामान्यस्यापनं व्याख्यम् । अधैर्यं तव प्रच्छन्नानुरागिणी हृदयवल्लभा इत्थं रक्षिता । पुनः प्रच्छन्नधन कामसंपादनविधिरत्र न युक्त इति तथार्थं काम्मुकविषयं संबोधनं व्याख्यम् । इत्थं मयत रपतुतमिति सखीरहस्यस्थापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यमिति ॥ तावित्ति । या च घ्र च ता । अत्रेति । सन्निमन्येऽर्थमध्ये च ॥ दृष्टिं हे प्रतिवेशिनीति । अपितु यतिः परपुरुषसंभोगानुमर्थेप्सया संकेतस्थानं गच्छन्ती तत्प्रातिप्रयोजनं वि विरुद्धसंकेतस्थानागारं परपुरुषसंभोगस्मर्भ तथा संभोगचिह्नानि नखरदपक्षतानि यत्र संभवतया चतुर्गमानादिर्भवानि यथाक्रमं भर्तृपिपासाशमयादेवसरसपानीयानयनेन विरचितमन्मथनिपुणपुरुषसंभोगप्रान्तजनिष्यमाणेन च यात्रमतविकारविशेषेणेक्रमेणापहु वामिपरो । तस्यमासाद्यीरगेऽन्यत व्याङ्ग्यप्रतीतिरिति ॥ निःशेषेति । च्युतं चन्दनं न तु क्षालितम् । संमृष्टो न तु किंचिन्मृष्टः । दूरमञ्जने निकटे तु साञ्जने ।

अत्र वृत्यासक्तमुकोपमोगो व्यज्यते ॥

काकुर्ध्वनिविकारस्तद्विशेषाद्यथा—

'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥'

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते ॥

वाक्यविशेषाद्यथा—

'मासश्रीरेव कस्मात्पुनरपि मयि तं मन्मथखेदं विदध्या
निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥'

अत्र नारायणरूपता गम्यते ॥

वाच्यविशेषाद्यथा—

'उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किं चैतस्मिन्सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥'

अत्र रसार्थं प्रविशेति व्यज्यते ॥

अन्यासत्तेर्यथा—

'णोल्लेइ अणोल्लमणा अत्ता म घरभरम्मि सअलम्मि ।
खणमित्तं जइ संझाइ होइ न व होइ वीसामो ॥'

---

पुनरपि त्वमीति योग्यं विशेषमिति । नारायणस्वरूपतेति । सर्वविद्योत्प्रेक्षाया संकरेऽयमर्थः । न च संदेहोत्प्रेक्षानुपपत्तिरध्युपगमाक्षेपो नेव वाच्यार्थारोपस्य

---

१ 'नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्रामः ॥' [इति च्छाया]

अत्र सन्ध्या सङ्केतकाल इति तटस्थं प्रति कयापि द्योत्यते ॥

प्रस्तावाद्यथा—

'सुव्वइ समागमिस्सइ तुज्झ पिओ अज्ज पहरमित्तेण ।
एमेय किंति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥'

अत्रोपपतिं प्रत्यभिसर्तुं न युक्तमिति व्यज्यते ॥

देशविशेषाद्यथा—

'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिः ॥'

अत्र 'विविक्तोऽयं देशः, प्रच्छन्नकामुकस्त्वया विसर्ज्य' इति विश्वस्तां प्रति कयाचिन्निवेद्यते ।

कालविशेषाद्यथा—

'गुरुयणपरवस प्पिय किं भणामि तुह मन्दभाइणी अहमम् ।
अज्ज पवासं वच्चसि वच्च सयं जेव्व सुणसि करणिज्जम् ॥'

अत्र मधुसमये यदि व्रजसि तदहं तावत् न भवामि तव तु न जानामि गतिमिति व्यज्यते ॥

चेष्टाया यथा—

'द्वारोपान्तनिरन्तरे मयि तया सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समापादितम् ।
आनीतं पुरतः शिरोंशुकमधः क्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं संकोचिते दोर्लते ॥'

---

एष्य व्यास भवेत् । बो धोऽसंप्राप्तस्यमीक्षे मिथ्याजिगीषामन्त' घ स मो

---

१ 'श्वः किल समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥ [इति छाया]

२ गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम् ॥ [इति छाया]

---

१ मो मः संप्राप्त' स्वम्मात्मोपमोपन

अत्र चेष्टाया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते ॥

एवं वक्त्रादीनां द्विकादियोगेऽपि व्यञ्जकत्वमवसेयम्। तत्र—

वक्तृबोध्ययोगे यथा—'अत्ता इत्थ' इत्यादि। अत्र वक्तृबोध्यपर्यालोचनमाश्रित्येति विधिरूपव्यङ्ग्यार्थप्रतीतिः॥

एवं द्विकयोगान्तरे त्रिकादियोगान्तरे च स्वयमभ्यूह्यम्। एषु मुख्यार्थस्य व्यञ्जकत्वमुदाहृतम्॥

अमुख्यस्य यथा—

'साहेंती सहि सुहयं खणे खणे दूमियासि मज्झ कए।
सब्भावनेहकरणिज्जसरिसय दाव विरइय तुमए॥'[1]

अत्र मत्प्रिय रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम्। तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम्॥

व्यङ्ग्यस्य यथा—

'वाणियय हत्थिदन्ता कुत्तो अम्हाण वग्घकित्तीओ।
जाव लुलियालयमुही घरम्मि परिसक्कए सुण्हा॥'[2]

अत्र विलुलितालकमुखीत्वेनानवरतक्रीडासक्तिस्तया च सततसम्भोगक्षामता ध्वन्यते॥

व्यङ्ग्यस्य भेदानाह—

**व्यङ्ग्यः शब्दार्थशक्तिमूलः।**

शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति व्यङ्ग्यो द्विधा। उभयशक्तिमूलस्तु शब्दशक्तिमूलान्नातिरिच्यते, शब्दस्यैव प्राधान्येन व्यञ्जकत्वात्॥

---

मभीनासिक्मापर्यर्थसमाम्नात्। न च पुनरपीति पूर्णामिति मूल इति च सम्भीरतमस्य ग्रोऽर्थ। पुनरर्थस्य मूलोऽर्थस्य च कर्तृभेदेऽपि सम्बन्धमात्रेणानुपपत्ते। यथा पृथ्वी एव कार्तवीर्येण जिता पुनर्रामभरम्येनेति। पूर्णा च निग्रा रामपुत्रस्य परस्यानाम

---

१ साधयन्ति सखि सुभगं क्षणे क्षणे दूनासि मत्कृते।
सद्भावस्नेहकरणीयसदृशं तावद्विरचितं त्वया॥ [इति च्छाया]

२ वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।
यावल्लुलितालकमुखी गृहे परिसर्पति स्नुषा॥ [इति च्छाया]

तत्र शब्दशक्तिमूलमाह—

नानार्थस्य मुख्यस्य शब्दस्य संसर्गादिभिरमुख्यस्य च मुख्यार्थबाधादिभिर्नियमिते व्यापारे वस्त्वलङ्कारयोर्वस्तुनश्च व्यञ्जकत्वे शब्दशक्तिमूलः पदवाक्ययोः ।

अनेकार्थस्य मुख्यस्य शब्दस्याभिधालक्षणे व्यापारे संसर्गादिभिर्नियमिते ऽमुख्यस्य च गौणलाक्षणिकरूपस्य शब्दस्य मुख्यार्थबाधनिमित्तप्रयोजनैर्गौणीलक्षणारूपे व्यापारे नियमिते मुख्यस्य शब्दस्य वस्त्वलङ्कारव्यञ्जकत्वेऽमुख्यस्य च वस्तुव्यञ्जकत्वे सति शब्दशक्तिमूलो व्यङ्ग्यः ॥

स च प्रत्येकं द्विधा । पदे वाक्ये च ॥

संसर्गादयश्चेमे भर्तृहरिणा प्रोक्ताः —

'संसर्गो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'

यथा—

'वनमिदमभयमिदानीं यत्रास्ते लक्ष्मणान्वितो रामः' इति । 'विना सीतां राम प्रविशति महामोहसरणिम्' इति । संसर्गाद्विप्रयोगाच्च दाशरथौ ।

'भुजो भीमश्च तस्योदरैरनुकूलत्वमागतौ' इति साहचर्याद्वदविशेषे ।

'रामार्जुनव्यतिकरः सांप्रतं वर्तते तयोः' इति विरोधाद्भार्गवकार्तवीर्ययोः ।

'सैन्धवमानय, मृगयां चरिष्यामि' इत्यर्थात्प्रयोजनादश्वे ।

'भवसङ्गाग्यविपर्ययाचदि परं देवो न जानाति तम्' इति प्रकरणात्प्रभवत्वे । प्रकरणमशब्दमर्थस्तु शब्दवानित्यनयोर्भेदः ।

'कोदण्डं यस्य गाण्डीवं सर्पसे कस्तमर्जुनम्' इति लिङ्गाच्चिह्नात्पार्थे ।

'किं साक्षादुपदेशयष्टिरथ वा देवस्य शृङ्गारिणः' इति शब्दान्तरसंनिधानात्काम ।

'कूजति मधुना मत्तमेवोदर मिमकोकिलः' इति सामर्थ्याद्वसन्ते ।

'तन्व्या यत्सुरतान्ततान्तनयनं वक्त्रं रतव्यत्यये तत्त्वां पातु चिराय' इत्यौचित्यात्प्रसादसांमुख्यपालने ।

'अहो महेश्वरस्यास्य कापि चक्रन्ति' इति राजधानीरूपादेशाद्ब्राह्मणि।

'चित्रभानुर्विभात्यह्नि' इति कालविशेषाद्रवौ।

'मित्र हन्तितरां क्षम परिकरं धन्य दृशौ मादृशाम्' इति व्यक्तिविशेषात्सुहृदि च मतीति।

स्वरास्तु विशेषप्रतिपत्तिः काव्यमार्गेऽनुपयोगिनीति नोदाह्रियते।

'ममामि कौरवशतं समरे न कोपात्' इति काकुरूपात्स्वरान्नञस्त्वर्थविक्षेपप्रतिपत्तिः।

आदिग्रहणादभिनयोपदेशनिर्देशसंज्ञेङ्गिताकारा गृह्यन्ते।

अभिनयो यथा—

> 'एद्दहमित्तत्थणिया एद्दहमित्तेहिँ अच्छिवत्तेहिँ।
> एआवत्थं पत्ता एत्तिअमित्तेहिँ दिअहेहिँ॥'

अपदेशो यथा—

> 'इत स दैत्य प्राप्तश्रीर्नेत एवार्हति क्षयम्।
> विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्॥'

निर्देशो यथा—'भर्तृदारिके, दिष्ट्या वर्धामहे यदत्रैव कोऽपि कस्यापि तिष्ठतीति मामङ्गुलीविलासेनाख्यातवत्यः।'

संज्ञा यथा—

> 'अप्यवस्तुनि कथामवृत्तये प्रश्नतत्परमनङ्गशासनम्।
> वीक्षितेन परिगृह्य पार्वती मूर्धकम्पमयमुत्तरं ददौ॥'

इङ्गितं यथा—

> 'कदा नौ संगमो भावीत्याकीर्णे वक्तुमक्षमम्।
> अवेक्ष्य कान्तमबला लीलापद्मं न्यमीलयत्॥'

आकारो यथा—

> 'निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते।
> न विद्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम्॥'

---

१ 'एद्दहमेत्तत्थणिया' इति काव्यप्रकाशे

२. एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम्।
एतावदवस्थां प्राप्ता एतावन्मात्रैर्दिवसैः॥

तदेवं संसर्गादिभिर्नियमितायामभिधायां यार्थान्तरप्रतीतिः सा व्यञ्जनव्यापारादेव । प्रयुक्तेऽपि शब्दे मुख्यार्थबाधादिनियमिते प्रयोजनप्रतिपत्तिर्व्यञ्जनव्यापारादेव । तथा हि तत्र संकेताभावान्नाभिधा नापि गौणी लक्षणा वा मुख्यार्थबाधादिलक्षणाभावात् न हि लक्ष्यं मुख्यम्, नापि तस्य बाधः, न च किंचिन्निमित्तमस्ति, नापि तत्र शब्दः स्खलद्गतिः । न च किंचित्प्रयोजनमस्ति । अथ प्रयोजनेऽपि लक्ष्ये प्रयोजनान्तरमाकाङ्क्ष्यते तर्हि तत्रापि प्रयोजनान्तराकाङ्क्षायामनवस्था स्यात् । तथा च क्षाममिच्छतो मूलक्षतिः । न च प्रयोजनसहितमेव लक्ष्यं लक्षणाया विषय इति वक्तुं शक्यम् । विषयप्रयोजनयोरत्यन्तभेदात् । प्रत्यक्षादेरपि प्रमाणस्य विषयो घटादिः प्रयोजनं स्वार्थाधिगतिः प्राकट्यं संवित्तिर्वा । तदेवं प्रयोजनविशिष्टस्य लक्ष्यस्य गौणीलक्षणयोरविषयत्वात्प्रयोजने व्यञ्जनमेव व्यापार ॥

तत्र मुख्यशब्दशक्तिव्यङ्ग्यं वस्तु पदे यथा—

'भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥'

काचित्संकेतदायिनमेवं मुख्यया वृत्त्या शंसतीति सदागमपदेन प्रकाश्यते । अत्रार्थयोर्वैसदृश्यान्नोपमा ॥

वाक्ये यथा—

'पन्थिय न एत्थ सत्थरमत्थि मण पत्थरत्थले गामे ।
उन्नयपओहरं पिक्खिऊण जइ वससि ता वससु ॥'[1]

---

पीति स्थितं लक्षणाभिधेयमर्थम् । स च वाक्यपर्यालोचनयावसीयत इति ॥ स्वार्थाधिगतिरिति । मैत्रादिप्रमातॄणां प्राकट्यं मन्यते धर्मिति प्राभाकरे ॥ भुक्तीति । भुक्तिरमेयव्यापारादपि । भुक्तिः कान्तोपभोगेऽपि । एकान्तः संकेतस्थानमपीति । सत्थरः सुन्दरास्पदमस्म, शोभन आस्पदम् ॥ उन्नतपयोधरमिति । उन्नतं मेघं प्रेक्ष्य

---

१ पथिक नात्र स्रस्तरमस्ति मनाक्प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥ [इति च्छाया ।]

---

१ मिति' लोचने

अत्र मदुरवचतुष्टयमप्युपभोगेन मेह निद्रां कर्तुं लभ्यते । सर्वे यत्रापि रुग्णा । सदुन्नतपयोधरां मामुपभोक्तुं यदि वससि तदास्स्वेति व्यज्यते । वाच्य भावेन व्यङ्ग्यस्य स्थितत्वात् । तयोर्नोपमानोपमेयभाव इति नालंकारो व्यङ्ग्यः ॥

यथा च—

'खनिरवनिश्च समुद्रैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥'

अत्र विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः इति व्यत्ययेन व्यज्यते ॥

मुख्यशब्दशक्तिमूलयोऽलंकारः पदे यथा—

'रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघ ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप भीम ॥'

अत्र भीषणीयस्य भीमसेन उपमानम् ।

वाक्ये यथा—

'उन्नत प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तस्याः कं न चक्रेऽभिलाषिणम् ॥'

अत्र वाक्यस्यासंबद्धार्थत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयो रुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालंकारो व्यङ्ग्यः ॥

यथा वा—

'अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति कम् ॥'

अत्र शब्दशक्त्या रात्रियोषितोरुपमा व्यङ्ग्या । यद्यपि समुद्दीपितेति सानन्दमिति चार्थो व्यञ्जकस्तथापि न शब्दशक्तिं विनार्थशक्तिरुन्मीलति इति शब्दशक्तिरेव व्यञ्जिका ॥

अर्थः । उन्नतमित्युन्नतमपि । भद्रपरोऽनुपपरोऽपि । प्रोल्लसन् हारो यस्य प्रोल्लसन्तश्च धारा यस्य । तस्याः कामिन्याः प्रावृषश्च । चक्रेऽभिलाषिणम्, उदयेति । चन्द्र कर्पूर मपि । समुल्लसितं । तारकान्वा कनीनिकान्वामपि । श्यामा रात्रिः कान्ता च ॥

---

१ 'भवतीति' पाठ.

यथा वा—'मातङ्गगामिन्यः शीलवत्यश्च, गौर्यो विभवरताश्च, श्यामाः पद्मरागिण्यश्च, धवलद्विजशुचिवदना मदिरामोदिश्वसनाश्च प्रमदाः ।' अत्र विरोधालंकारो व्यङ्ग्यः ॥

यथा वा—

'ते येऽभ्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमधिक्षिप्ताब्जभासश्च ये ।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रिये सन्तु वः ॥'

अत्र व्यतिरेकः ॥ एवमलंकारान्तरेऽप्युदाहार्यम् ॥

गौणलक्षणामूलशक्तिव्यङ्ग्यं वस्तु पदे यथा—

'रविसंक्रान्तसौभाग्यस्तुषाराविलमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥'

अत्रोपसंहृतदृष्टिवृत्तिरन्धशब्दो बाधितमुख्यार्थः पदार्थप्रकाशनासमर्थत्वं नष्टदृष्टिगतं निमित्तीकृत्यादर्शे वर्तमानोऽसाधारणविच्छायित्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्ति ॥

वाक्ये यथा—

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥'

---

मातङ्गो हस्ती चण्डालश्च । गौर्यो गौराङ्ग्योऽपि । विभवे रता विगतं भवे रतं यासां ताश्च । पद्मरागा मणिविशेषाः पद्मश्च रागो विद्यते यासाम् । द्विजा दन्ताः विप्राश्च ॥ मदिरा मद्यं न मद्यं च । क्षितिभृतो राजानोऽपि । उभये रश्मिचरणरूपाः ॥ एवमिति । यथा—'सरसं मठसहायं विमलगुणं मित्तसंकल्पोल्लसितम् । कमलं गहणं कुर्वन्तोऽसारनमोदे ॥'[1] एतत्केनचित्कमपि उद्दिश्योच्यते । कमलप्रकरस्य महापुरुषस्य प्रियं नाधिवसन्तं कंचन श्रीहर्षं प्रति अप्रस्तुतप्रशंसा व्यङ्ग्येति । निःश्वासान्ध इति । हेमन्तवर्णने पञ्चवट्यां रामसौमित्रिवचनम् ॥ या निशेति । सर्वेषां प्राणिस्थावरजङ्गमानां चतुर्दशानामपि भुवनानां या निशारूपा मोहजननी तत्त्वदृष्टिः तस्यां संयमी जागर्ति कथं प्राप्नोति । न तु विषयवर्जनमात्रेण संयमीति

१ अस्य संस्कृतच्छाया न पुरा

अत्र निशायां जागरितव्यमन्यत्र रात्रिवदासितव्यमिति न कश्चिदुपदेश्यं प्रत्युपदेशः सिध्यतीति बाधितस्वार्थमेतद्वाक्यं संयमिनो लोकोत्तरत्वलक्षणेन निमित्तेन तत्त्वदृष्ट्यवधानं मिथ्यादृष्टौ तु पराङ्मुखत्वं ध्वनतीति ॥

अर्थान्तरसंक्रमितवाच्यं वस्तु पदे यथा—

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥'

---

जाग्रत् । यदि वा सर्वभूतनिशायां मोहरूपां मिथ्यादृष्टौ जागर्ति कथमियं हेयेति । यस्यां तु मिथ्यादृष्टौ सर्वभूतानि जाग्रति प्रतिपदमेव सुप्रबुद्धरूपाणि सा तस्य रात्रिरप्रबोधविषयः । तस्यां हि चेष्टायां नासौ प्रबुद्धः । एवमेव च लोकोत्तराचारव्यवस्थित पश्यति च मन्यते च तत्त्वैकान्तदर्शिजनप्रतिपत्तिवर्तिता । अन्यस्तु न पश्यति न मन्यते इति तदवहितपरेण भाव्यमिति तात्पर्यम् ॥ स्निग्धेति । स्निग्धया जलसंबन्धसरसया श्यामलया द्रविडवनितोचिततापिच्छवर्णया कान्त्या चाकचिक्येन लिप्तमाच्छुरितं वियन्नभो यैः । वेल्लन्त्यो रम्यमाल्यवत्तया चलन्त्यः परभागवशात् प्रहर्षवशाच्च बलाकाः सितपक्षिविशेषा येषु तादृशा ये एवंविधा मेघाः । एवं नभस्तावदुद्दीपकं वर्तते । दिशोऽपि दुःसहाः । यतः सूक्ष्मजलोद्गारिणो वाताः इति मन्दमन्दत्वमेषामभिधतापगमत्वं च बहुवचनेन सूचितम् । तर्हि गुहाद्यनुप्रविश्यास्यताम्, अत आह—पयोदानां ये सुहृदस्तेषु च सत्सु शोभनहृदया मयूरास्तेषामानन्देन हर्षेण कला मधुरास्फुटा शब्दविशेषाः । ताश्च सर्वं पयोदवृत्तान्तं स्मारयन्ति कथं च दुःसहा इति भावः । एवमुद्दीपनविभावोद्बोधितविप्रलम्भः । परस्परानुप्रवेशमते । विभावानां च साधारण्यमभिमन्यमान इव एष भवति प्रियतमा हृदये विभावैव तात्पर्यतामन्तं रामः आह—कामं सन्त्विति । दृढमिति सातिशयम् । कठोरहृदय इति । रामशब्दार्थ्यमाकथ्य विशेषावकाशदानाय कठोरहृदयपदम् । यत—त्वामहमित्युक्तेऽपि गतमितीति । अन्यथा रामपदं दशरथकुलोद्भवत्वकौसल्यासुतत्वाद्युपजातत्वासाधारणाचरितं आचरितमाहिपर्यन्तरपरिणतमर्थं कथं नाम सहेत् । अस्मीति । स एवाहं यथाभीष्टम् । भविष्यतीति क्रियासामान्यम् । तेन किं करिष्यतीत्यर्थः । अत एव च सवन्ने वाक्य पर्यवसानमिति । एवंप्रकारेण हृदयनिहितां प्रियां स्वकण्ठगतामिवोद्दीपनविभावानां साधारणत्वापादनभिया स्मरणेन वैदेहीति सम्बोधनेन कथं भविष्यतीति

तत्र वस्तुनो वस्तुव्यञ्जकत्वं पदे यथा—

'त ताण सिरिसहोयररयणाहरणम्मि हिययमिक्करसम् ।
बिम्बाहरे पियाणं निवेसियं कुसुमबाणेन ॥'[1]

अत्र कुसुमबाणेनेति पदं कामदेवस्य सुवृपायसौन्दर्यं प्रकाशयति ॥

वाक्ये यथा—

'तापी नेय नियतमय या तानि नैतानि नून
तीराण्यस्या सविभविचक्रीषिवाचालितानि ।
अन्यो वाहं किमम न हि तद्वारिवेलद्रुलाकं
यदस्यस्त्रीपतिवुहितरि स्नातुमभ्यागतायाम् ॥'

अत्र वाक्यार्थेन वस्तुमात्ररूपेणाभिलपणीयवनकृतमेव भावानां द्रुपत्वं स्वत इत्येतद्वस्तु व्यज्यते ॥

वस्तुनोऽलङ्कारव्यञ्जकत्वं पदे यथा—

'वीराण रमइ घुसिणारुणम्मि न तहा पियाथणुच्छङ्गे ।
दिट्ठी रिउगयकुम्भत्थलम्मि जह बहलसिन्दूरे ॥'[2]

अत्र वी(वी)राणामिति पदार्थो वस्तुमात्ररूपः कुचयो: कुम्भस्थलस्य चोपमालङ्कारं ध्वनति ॥

---

न हि मेरुपरिकम्पने बिम्बव्यामोह एव संपद्यत इत्यर्थः ॥ तं तापयेति । तेषाम-
रामां पत्राश्चर्यासितां पि पुनः पुनरभिविमर्दयापि किं किं न कृतम् तस्मादमिति
म्मत्तस्मोऽप्यतिशुचकरेभ्योऽप्यकम्पनीयमवधानम् । तत्र श्रीसहोदरसमत एवाभि
र्यौत्कर्ष्यमित्यर्थः । तेषां रत्नानामाधमन्ताद्रूपे एकरसं तत्परम् मदूषयं तदु-
कुसुमबाणेन सुकुमारतरोपकरणसंभारेणापि प्रियाणां बिम्बाधरे निवेशितम् । तदप-
मेवनपरिकुम्भवर्णमात्रकृतमत्तमिमानयोगितेन कामदेवेन कृतम् तेषां हृदयं
नमनस्यविविधिपीयान्मनआगमनसमागममृतिरिति भावः ॥ वस्तुनोऽलङ्कारव्यञ्जक
त्वमिति । बहुधा उपमादिरलङ्कारो व्यज्यत इत्यर्थः । तत्रोपमाध्वनिं वीराण—'

---

१ 'तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥' [इति च्छाया]

२ 'वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे ।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥' [इति च्छाया]

इवाभिमतं दर्शितं । अर्थान्तरन्यासध्वनिः पदे यथा—'हिअअट्ठिअमण्णुं अवरुण्णमुहं पि मं पसाअन्त। अवरद्धस्स वि ण हु दे बहुजाणअ रोसिउं सक्कम् ॥' इत्यत्र स्थितो न तु बहिः प्रकटितो मन्युर्यया । अत एवाप्रदर्शितरोषमुखीमपि मां प्रसादयन् । हे बहुज्ञ अपराद्धस्यापि तव खलु न रोषकरणं शक्यम् । अत्र बहुज्ञेत्यामन्त्रणार्थो विधिविषये पर्यवसितः । अनन्तरं तु तदर्थपर्यालोचनवशलब्धसामान्यरूपे समर्थके प्रतीयते तदेव चमत्कारकारि । तथा हि । खण्डिता सखी वैदग्ध्यानुमीता तं प्रसादेन दर्शयन्ती इत्यमाह । यः कश्चिद्बहुज्ञो धूर्तः स एवं सापराधोऽपि सापराधावकाश-मनवकाशयतीति मा त्वमात्मनि बहुमानं मिथ्या ग्रहीरिति । उत्प्रेक्षाध्वनिर्यथा—'चन्दनासक्तभुजगनिःश्वासानिलमूर्छितः । मूर्छयत्येष पथिकान्मधौ मलयमारुतः ॥' अत्र हि मधौ मलयमारुतस्य पथिकमूर्छाकारित्वं मन्मथोन्माददायित्वेनैव । तत्तु च न्दनासक्तभुजगनिःश्वासानिलमूर्छितत्वेनोत्प्रेक्षितमित्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसा-मर्थ्यादवसीयते । न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणासंबद्धतैवेति शक्यं वक्तुम्, गमकत्वात् । अन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात् । यथा—'ईसाकलुसस्स वि तुह मुहस्स णनु एस पुण्णिमाअन्दो । अज्ज सरिसत्तणं पाविऊण अङ्गे च्चिअ ण माइ ॥' ईर्ष्याकलुषितस्यापि त्वदास्यस्य स्वाधीनस्य । यदि हि प्रसन्नस्य मुखस्य सादृ-श्यमुद्दिश्येत्यर्थः तर्हि कुर्यात् त्वन्मुखं तु चन्द्रोऽमृतवदिति मनोरथानाममप्यपथमिदम-तिशयमस्याभिप्रायः । अङ्गे न काये न माति इव निजं पूरयति यतोऽयंवत्या सकेन एवं वैलक्षण्यात्मनिर्गमनम् । अत्र पूर्णचन्द्रेण शिरो पूरणं सरसवितर्कमेवमुत्प्रे-क्ष्यते । यदि च वस्तुमात्रेण वितर्कमुत्प्रेक्षामव्यापकत्वेनापेक्ष्यता पराक्रमेति संमन्यते तदेवमत्रोदाहरणं यथा—'त्रासाकुलः परिपतन्परितो निकेतान्पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि । तस्थौ तथापि न मृगः क्वचिदङ्गनाभिराकर्णपूर्णनयनेषुहतेक्ष-णश्रीः ॥' परितः सर्वतो निकेतान्परिपतन्नपि न कैश्चिदपि धनुर्धारिभिरसौ मृगोऽनु-बद्धस्तथापि न क्वचित्तस्थौ त्रासचापल्योपात्. कामाविष्टदेव तत्र चोत्प्रेक्षा धन्यते । अङ्गनाभिराकर्णपूर्णैर्नयनैरीक्षणानि सर्वतः प्रहतो यतः अतो न तस्थौ । मन्ये तथ्यसंबन्धमस्तु । न । व्यवहारे प्रसिद्धिरेव प्रमाणम् ॥ दीपकध्वनि-र्यथा—'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा । वज्रमिन्द्रकरविप्रमुक्तं

1 'हृदयस्थापितमन्युमपरोषमुखीमपि मां प्रसादयन् ।
अपराद्धस्यापि न खलु ते बहुज्ञ रोषितुं शक्यम् ॥' [इति च्छाया]

२. हिअअट्ठिअमण्णुं अवरुण्णमुहं लघ्वालोके पाठः. ३ 'पि' लघ्वालोके.
४ 'सामर्थ्य' लोचने ५. 'न हि' लोचने

६ 'ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः ।
अद्य सदृशत्वं प्राप्याङ्ग इव न माति ॥' [इति च्छाया]

७ त्वदन्त' लोचने

अत्रापप्रामियमसमर्पितमपि विरोधालङ्कारेण वाच्येन मधुमासप्रौढिमनि भाविनि किं भविष्यतीत्येवंभूतं वस्तु व्यज्यते ॥

वाक्ये यथा—

'गाढालिङ्गणरहसुज्जयम्मि दइए लहु समोसरइ ।
माणंसिणीण माणो पीलणभीय व्व हिययाओ ॥'[1]

अत्रोत्प्रेक्षया प्रत्यालिङ्गनादि । तत्र जृम्भत इति वस्तु व्यज्यते ॥

अलङ्कारेणालङ्कारः पदे यथा—

'तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो ।
इय नववहुया सोऊण कुणई वयणं महीसमुहम् ॥'[2]

अत्र मिलाणकमलदलमिति रूपकेण म्लानत्वान्यथानुपपत्त्या त्वयास्य मुहुर्मुहुः परिचुम्बनं कृतमिति अनुमानं व्यज्यते ॥

वाक्ये यथा—

'स वक्तुमखिलाञ्छक्तो हयग्रीवाश्रितान्गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञक्तः कर्तुं महोदधेः ॥'

अत्र निदर्शनेन हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपोऽसाधारणतद्विशेषप्रकाशनपर आक्षेपो व्यज्यते ॥

प्रबन्धेऽर्थशक्तिमूलो व्यङ्ग्यो यथा गृध्रगोमायुसंवादे—

तथा च—

'अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।
न चेह जीवितः कश्चित्कालधर्ममुपागतः ॥'

इति दिवाप्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम् ।

'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥'

---

१ 'गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विन्या मानः पीडनभीत इव हृदयात् ॥'

२ 'तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् ।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥'

'अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात्कथं बालास्त्यक्ष्यथैनमविशङ्किताः ॥'

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्तननिष्ठं चेति प्रबन्धप्रतिपाद्येनार्थेन गृध्रगोमाय्वोर्लक्षणमिमायो व्यज्यते ॥ एवं मधुमथनविजये पाञ्चजन्योक्तिषु, विषमबाणलीलायां कामदेवस्य सहचरसमागमेऽर्थव्यञ्जकत्वमुदाहार्यम् ॥ एवं च वस्तुनोऽलंकारव्यञ्जकत्वे भेदत्रयमुल्लेख्यम् ॥

रसादिश्च।

रसभावतदाभासभावशान्तिभावोदयभावस्थितिभावसंधिभावशबलत्वाख्यसर्वेऽपि शक्तिमूलानि व्यङ्ग्यानि । चकारः पदवाक्यप्रबन्धानुकर्षणार्थः । पृथग्योगो रसादयो व्यङ्ग्या एव भवन्ति, न तु कदाचिद्वाच्यतामपि सहन्ते इति रसादीनां प्राधान्यस्यापनार्थः । वस्त्वलंकारौ हि वाच्यावपि भवतः ॥

---

सुमधुरेण मधुमासलक्ष्म्या मुखमारम्भो वर्षं च । तत्र सुरभोद्युक्तं भवति ॥ पाञ्चजन्योक्तिष्विति । श्रीमद्वासुदेवधवलहिमभवनस्य मिम भव । श्रीस मुभाचरणं विजृम्भमदभ्रात् आईपि ॥ पाञ्चजन्योक्तयो रुक्मिणीविप्रलम्भवासुदेवाद्यप्रतिभेदाभिप्रायमभिव्यञ्जन्ति ॥ सहचरेति । कामदेवस्य सहचरा मधुयौवनमलयानिलादयस्तेषां समागमे । तदुक्तिभिरर्थः । यथा—'हुमि अवहत्थिअरेहो णिरङ्कुसो अहविवेअरहिओ वि। सिविणेवि तुम्ह समये पत्तिअ भत्तिं ण पव्वसिमि ॥' इत्यादयो धीरयोजनातं निजसमर्थं भवन्ति ॥ रसभावेति । यद्यपि रसेनैव सर्वं काव्यं जीवति तथापि तस्य रसस्य एकघनचमत्कारात्मनोऽपि कुतश्चिदंशात्प्रयोजकीभूतादवशिष्टोऽसौ चमत्कारो भवति । तत्र यदा कश्चिदुद्रिक्तावस्थां प्रतिपन्नो व्यभिचारी चर्व्यमाणोदयाभिमर्शेन चमत्कारातिशये प्रयोजको भवति तदा भावध्वनिः । यदा तु विभावानुभावसमुचितविभावैरनुभवन्ति ...दयतया विभावानुभावप्राधान्यमात्र इति रसध्वनिः । एवं भावाभासोऽपि । एवं रसध्वनेरेवामी भावध्वनिप्रभृतयो निःस्यन्दाः । आस्वादे प्रधाने प्रयोजकमंशं विभज्य व्यपदिश्यते । यथा—गन्धयुक्तिज्ञैः(?)रेकधूपमूर्छितमोदोपभोगेऽपि सुपरिच्छन्नमांसादिप्रयुक्तमिदं चीरमभिहितं । रसध्वनिस्तु स एव यत्र मुख्यतया विभावानुभावव्यभि

---

१ 'पाञ्चजन्योक्तिषु' विवेके.

---

१ 'पाञ्चजन्योक्तिषु' मूल० २ ३ व्यतो-व्यमास्फुरा.

तत्रार्थशक्तिमूलो व्यङ्ग्यो रसः पदे यथा—

'उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने परिमृशं कुपिते वहन्ती ।
तीक्ष्णेन दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि ॥'

अत्र ते इति पदेन स्मारितानामनुभवैकगोचराणां सातिशयविभ्रमाणां शोकव्यञ्जकत्वम् ॥

---

चारिसंयोजनोचितस्यापिप्रतिपत्तिकस्य प्रतिपत्तुः स्वाम्यंशपर्वतप्रमुख एवास्वादप्रकर्ष इति । उदाहरन्त्यपि पैतामहस्वप्रकाशे दर्पविम्बन्वे ॥ उत्कम्पिनीति । अत्र हि ते इति पदं रसमस्तेन स्फुरमेवासमायते सहृदयानाम् । तथा हि—वासवदत्तादाहाकर्णनप्रभुसुयोगनिर्भरस्य वत्सराजस्येदं परिदेवितवचनम् । तत्र च शोको नामेष्टजनविनाशप्रभव इति तस्यास जनस्य ये भूषेपनव्यायादयः पूर्वं रतिविभावतामवलम्बन्ते स त एवास्तन्तविनाशः सन्त इदानीं स्मृतिगोचरतया निरपेक्षत्वभावप्रभावं करुणमुद्दीपयन्तीति स्थिते । ते लोचने इति तच्छब्दसमोऽपगतसर्वसंवेदनापरिस्पन्दतदुभयमुक्तरसाकारयोतको रसप्राधान्यनिमित्ततां प्राप्तः । तेन बालैर्विघोतितं परिहृतं च तस्मिन्नेव । तथा हि । चोद्यम्—अनन्तपरामर्शकस्य तच्छब्दस्य कथमिव व्यापारः । उत्तरम्—रसाविष्टोऽत्र वक्तृत्वेति । तदुभयमनुत्था[प]नोपहतम् । अत्र तु इत्यमाचर्मस्तरसातिशययोगधर्मयोगित्वं वक्तुमो तच्छब्देनाभिधाय तदुभिसमर्थान्तरसातिशयं तच्छब्देन निर्वाप्यते । तत्र पूर्वप्रक्रान्तपरामर्शकत्वं तच्छब्दस्य । अत्र तु निमित्तोपगतस्मरणविशेषाकारसूचकत्वं स च रसादौ तत्र च परामर्शकमेति ॥ उत्कम्पिनीत्यादिना तदीयमनुभावोत्प्रेक्षणं मया भविष्यति प्रतीकारमिति शोकवैवस्य विभावयेति सातिशयविभ्रमैकायतनमपि लोचने विधुरे कातरीकृततया निर्वक्ष्ये क्षिपन्ती क्व याता कासी भार्यपुत्र इति तयोर्वाच्ययोर्व्यापारी वाचकस्येति सुतरां शोकोद्दीपनम् । तीक्ष्णेनेति । तस्यार्थं भावाव एव किं कृत्वा तथापि च धूमेनान्धीकृतो धूमसमर्थ इति च तु सविवेकस्येदृशानुचितकारित्वं संभाव्यत इति अपेक्षार्थं तदीयं सौन्दर्यमिदानीं सातिशयशोकावेशविभावतां प्राप्त इति तेनास्ये सति *रसोऽभवनयें निर्मूढ । यथा वा—'सपदि क्लमविधे तत्र हे कुरङ्गे रसविक-*

---

१ 'निरपेक्षभावत्वप्राप्तं' लोचने २. 'स्थितम्' स्यात्. ३ 'केनचित्' लोचने

त्याद्यन्ते यथा—

'मा पन्थं रुन्धीओ अवेहि बालअ अहोसि अहिरीओ ।
अम्हे अणिरिक्काओ सुण्णघरं रक्खिअव्वं णो ॥'

अत्रापेहीति त्याद्यन्तत्वं तावदप्रौढो लोकमध्ये भवेयं अवकाशयसि अस्ति तु संकेतस्थानं शून्यं गृहं तत्रैवागन्तव्यमिति ध्वनति ॥

पदैकदेशोऽपि पदं यथा—

'तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ।'

अत्र तालैरिति बहुवचनमनेकप्रकारमभिनयवैदग्ध्यं स्थापयद्विप्रलम्भमुद्दीपयति ॥

'लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहारा सख्यः सततरुदितोच्छूननयना ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥'

अत्र न लिखतीत्यपि तु प्रसादपर्यन्तमास्ते इति न त्वासित इति । भूमिमिति न तु भूमाविति । न हि बुद्धिपूर्वकं किंचिल्लिखतीति त्यादि स्यादिविभक्तीनां व्यञ्जकत्वम् ॥

'अस्स(ण्ण)त्थ वच्च बालअ ण्हाअन्ति किस मं कीस पलोअसि एअम् ॥
हो जाआभीरुआण तीर्थं चिय न होई ॥'

अत्र आयातो ये नीरक्षेपामेतत्स्थानमिति दूरापेतः सम्बन्ध इत्यनेन

शिलास्ते रविपादाः प्रियापादाः । पवनविक्षिप्ताभ्रमुत्पतन्ती पद्मकमलमिव किरन्त्यः कम्पमाना वहन्ति ॥ इति ॥ अणिरिक्काओ इति । परवत्या इति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके प्रथमोऽध्यायः ।

१ 'मा पन्थानं रुध अपेहि बालक अहो असि अहीकः ।
वयं परतन्त्राः शून्यगृहं रक्षणीयमस्माकम् ॥

२ अन्यत्र व्रज बालक स्नान्तीं किं मां प्रलोकयस्येतत् ।
भो जायाभीरुकाणां तीर्थमेव न भवति ॥'

अत्र चैतैरेव धर्मातिशयः प्रच्छन्नकामिन्याभिव्यक्तः । ग्रामीणकाणामित्यत्र तद्धितस्यापि व्यञ्जकत्वम् । ये धीरसत्त्वा धर्मपत्नीषु प्रेमपरतन्त्रास्तेभ्यः कोऽन्यो जगति कुत्सितः स्यादिति कप्रत्ययोऽत्यन्तातिशयद्योतकः ॥

'अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥'

अत्र चकारौ निपातावेवमाहतुः । गण्डस्योपरि स्फोटैवद्विप्रयोगस्य वर्षासमयस्य समुपनतमेतद्युगमर्कं प्राणहरणायेति । अत एव रम्यत्वेन सुतरामुद्दीपनविभावत्वमुक्तम् ॥

'प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः' अत्र प्र इत्युपसर्ग इङ्गुदीफलानां सरसत्वमाचक्षाण आश्रमस्य सौन्दर्यातिशयं ध्वनति॥

अनेकस्य निपातस्योपसर्गस्य चैकत्र पदे यः प्रयोगः सोऽपि रसस्य व्यञ्जकः । यदाह—'अहो बतासि स्पृहणीयवीर्य' अत्राहो बतेत्यनेन श्लाघातिशयो ध्वन्यते ॥

'मनुष्यवृत्त्या समुपाचरन्तं स्वबुद्धिसामान्यकृतानुमानाः ।
योगीश्वरैरप्यसुबोधमीश त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः ॥'

अत्र सम्यग्भूतमुपांशु कृत्वा आसमन्ताच्चरन्तमित्यनेन लोकानुग्रहातिशयस्तदाचरतः परमेश्वरस्य ध्वन्यते ॥

'रमणीय क्षत्रियकुमार आसीत्' इति । अत्र शङ्करधनुर्भङ्गमवधार्य कुपितस्य भार्गवस्योक्त्या आसीदित्यतीतकालनिर्देशादात्मरवे कथाशेषत्वं व्यज्यते ॥

यथा च प्रत्ययांशस्य द्योतकत्वं तथा प्रकृत्यंशस्यापि यथा—

'तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषितां
आश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं परां प्रापितः ॥'

---

१ 'ये हि रसज्ञा' क्वचिदादर्शे. २ 'स्फोट इति यत्तद्वियोगस्याहूर्तो' इत्यादर्शे

अत्र दिवसार्थेनात्यन्तार्तमाव्यमानतालार्थस्य ध्वन्यते । सविति प्र कृत्यसहयात्र नतमित्यौल्येतत्प्रकृत्यसहाय समस्तामङ्गल्यभूतां मूषिकाधा कीर्णतां ध्वनति । एव सा धेनुरित्यादावपि योज्यम् ॥

तथा—

'रइकेलिहिअनिअसणकरकिसलअरुद्धनयणजुअलस्स ।
रुद्दस्स तइयनयण पव्वइपरिचुम्बिअं जयइ ॥'[1]

अत्र जयतीति न तु शोभते इत्यादि । समानेऽपि हि स्थगनव्यापारे लोकोऽन्तरेणैव रूपेणास्य पिधानमिति सर्वोत्कृष्टमिति व्यज्यते ॥

भावादीनां पदमकाशत्वेऽधिक न वैचित्र्यमिति न तदुदाह्रियते । वाक्यस्य रसादिव्यञ्जकत्व रसादिलक्षणे पदोदाहरिष्यते । प्रबन्धे च नाटकादावर्थशक्तिमूला रसव्यक्ति प्रतीतैव । वर्णरचनयोस्तु साक्षा न्माधुर्यादिगुणव्यञ्जकत्वमेव । तद्द्वारेण तु रसे उपयोग इति गुणप्रकरणे एव वक्ष्यते इतीह नोक्ते ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञकोपज्ञ-
काव्यानुशासनवृत्तौ प्रथमोऽध्याय ।

## द्वितीयोऽध्याय ।

रसलक्षणमाह—

**विभावानुभावव्यभिचारिभिरभिव्यक्त स्थायी भावो रसः ।**

वागाद्यभिनयसहिता स्थायिव्यभिचारिलक्षणचित्तवृत्त्यो विभाव्यन्ते विशिष्टतया ज्ञायन्ते यैस्तैर्विभावैः काव्यनाट्यशास्त्रप्रसिद्धैरालम्बनोद्दीपन- रूपैर्ललनोद्यानादिभि, स्थायिव्यभिचारिलक्षणं चित्तवृत्तिविशेषं सामा जिकजनोऽनुभवन्ननुमाप्यते साक्षात्कार्यते यैस्तैरनुभावैः कटाक्षभुजाक्षेप

विभावैरिति । यदाह मुनि—बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः । अनेन यस्मात्तेनायं विभाव इति संज्ञित ॥ अनुभावैरिति । 'वागङ्गसत्त्वाभिनयैर्यं

१ रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

पादिभि ,विविधमाभिमुख्येन चरणशीलैर्व्यभिचारिभिर्धृतिस्मृतिमतिभि,
स्थायिभावानुमापकत्वेन लोके कारणकार्यसहचारिशब्दव्यपदेश्यैर्ममैवैते
परस्यैवैते न ममैते न परस्यैते इति सम्बन्धविशेषस्वीकारपरिहारनियमान
ध्यवसायात्साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनारूपेण स्थित
स्थायी रत्यादिको भावो नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायब
लात् सहृदयहृदयसंवादभाजा साधारण्येन गोचरीक्रियमाणश्चर्व्यमाणतै
कप्राणो विभावादिभावनाद्यभिरलौकिकचमत्कारकारितया परब्रह्मास्वाद
सोदरो निमीलितनयनै कविसहृदयै रस्यमान स्वसंवेदनसिद्धो रस ॥

---

व्यापार्यो विभाव्यते । वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृत ॥ रस इति । तथा च
भरतमुनि—'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति' इति । तत्र भट्टलो
ल्लटप्रभृतयस्तावदेवं व्याचख्यु—विभावादिभि संयोगोऽर्थात्स्थायिन ततो रसनिष्पत्ति ।
तत्र विभावश्चित्तवृत्तेः स्थाय्यात्मिकाया उत्पत्तौ कारणम् । अनुभावाश्च न रसजन्या
अत्र विवक्षिता तेषां रसकारणत्वेन गणनानर्हत्वात् अपि तु भावानामेव । (ये तु भा
वानामेव) येऽनुभावा व्यभिचारिणश्च [ते] चित्तवृत्तिरूपत्वात् यद्यपि न सहभाविनः
स्थायिना तथापि वासनात्मतेह विवक्षिता । तेन स्थाय्येव विभावानुभावादिभिरुप
चितो रसः । स्थायी त्वनुपचितः । स चोभयोरपि मुख्यया वृत्त्या रामादावनुकार्येऽनु
कर्तरि च नटे रामादिरूपतानुसंधानबलादिति ॥ तथा चाह दण्डी—'रति शृङ्गारतां
गता रूपबाहुल्ययोगत । अधिरूढा परां कोटिं कोपो रौद्रात्मतां गत ॥' अत्र भाव —
विभावैर्जनितोऽनुभावै प्रतीतिपदं नीतो व्यभिचारिभिरुपचितो मुख्यरामाद्यनुकरणीये
रामे तद्रूपतानुसंधानादनुकर्तरि प्रतीयमान स्थायी रस इति ॥ एतन्नेति शङ्कुकः ।
यतो हि—विभावाद्ययोगे स्थायिनोऽवगमो नोपपद्यते अवगमकस्याभावात् । न हि
धूमं विना पावकस्तत्त्वतो बहिरवगम्यते । अपि च यदा स्वसमुत्पादिता विभावै
सूचिताश्चानुभावै पोषमुपनीताश्च व्यभिचारिभि संयोगात्प्रतीभवन्ति स्थायिनः ।
तदा स्थायिनामेव भावानामुत्कर्षो लक्षणं वाच्यमिति युक्तं स कस्मान्न कृतम् ।
भावा हि रसानामुत्पत्तये अभिहिते कस्माच्च रसानां विभावानुभावाद्योक्ता तानेव
स्थायिनां पुनराह ॥ तथा हि रसप्रतिपदं भरतमुनिर्दर्शयति—'अथ वीरो नामो-
त्तमप्रकृतिरुत्साहात्मकः । स चासंमोहाध्यवसायनयविनयबलपराक्रमशक्तिप्रतापप्रभावा-
दिभिर्विभावैरुत्पद्यते' इति । पुनश्च स्थायिभावानुवादे तु—'उत्साहो नामोत्तमप्रकृति ।
स चाविषादशक्तिधैर्यशौर्यादिभिर्विभावैरुत्पद्यते' इति । एवमभिधानौ दृश्येते । विभावा

---

१ प्रमादलिखितं भवेत्.

रसलक्षणे विस्तरत उक्ता' भावाध्याये लेशत प्रदर्शिता' । न चोत्पत्तौ पदार्थानां कारणमभिधाय पुष्यतो पुनरप्युत्पत्तिकारणमभिधातव्यम्, वैयर्थ्यापत्ते' । किं च— अनुपचितावस्थ' स्थायी भाव' उपचितावस्थो रस इत्युच्यमाने एकैकस्य स्थायिनो मन्दतममन्दतरमन्दमध्येत्यादिविशेषापेक्षया आनन्त्यापत्तिः । एवं रसस्यापि तीव्र-तीव्रतरतीव्रतमादिभिरसंख्यत्वं प्रपद्यते । अथोपचयपराकाष्ठां प्राप्त एव रस उच्यते तर्हि 'स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम्' इति षोढात्वं हा-स्यरसस्य कथं भवेत् । अन्यच्च उत्तरोत्तरप्रकर्षतारतम्यवशेन 'प्रथमे त्वभिलाषः स्याद्द्वितीये त्वर्थचिन्तनम् । अनुस्मृतिस्तृतीये च चतुर्थे गुणकीर्तनम् ॥ उद्वेग' पञ्चमे ज्ञेयो विलाप' षष्ठ उच्यते । उन्माद' सप्तमे ज्ञेयो भवेद्व्याधिरथाष्टमे । नवमे जडता प्रोक्ता दशमे मरणं भवेत् ॥ इति दशावस्थ' कामोऽभिहित । तत्रापि प्रथमस्यानु त्तरोत्तरप्रकर्षतारतम्यदर्शनात्कामभावत्वात्तु दशमदशवाता' शृङ्गाररतिभावत्वम: प्रस ज्येत । अपरं च प्राप्यस्याभाव' स्थायी रतीभवति तु क्रमेणोपचित रसत्रापि वि-पर्ययो दृश्यते । यतः—इष्टजनवियोगसमुत्पन्नो महान् शोकः क्रमेणोपशाम्यति । न तु वार्धकमुपैति । क्रोधोत्साहरतीनां च निजनिजकारणवशसमुद्भूतानामपि क्रमेण चामर्षस्थैर्यसेवाविपर्ययेऽपचयोऽप्युपेक्ष्यते । तस्मान्न भावपूर्वकत्वं रसस्य । अपि तु तद्विपर्यय एव । उक्तं हि मुनिना—'रसपूर्वकत्वं भावानाम्, भावपूर्वकत्वं रसस्य विषयविशेषापेक्षया प्रयोगे प्रवर्तते रसाभावकारणतामनुभवे भावप्रतीतिरुत्पद्यते इति । प्रथमपक्षस्योत्थानम् । लोके तु भावदर्शनात्तत्कर्मरसनिष्पत्तिरिति । तस्मादन्यथा व्याख्यायते हेतुभिर्विभावाख्यैः कार्यैश्चानुभावात्मभि' सहचारिरूपैश्च व्यभिचारिभि' प्रयत्नार्जिततया कृत्रिमैरपि तथाभिमन्यमानै' संयोगाद्व्यङ्ग्यव्यञ्जकभावस्यानुमीयमा-नोऽपि वस्तुसौन्दर्यबलात्कार्यकारणपरम्परापर्यालोचनमनपेक्ष्यैवानन्यथा रस नीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावो मध्ये ऽसन्नपि प्रतीयमानोऽपि सामाजिकानामास्वाद्यमानो मुख्यरामादिगतस्थाय्यनुकरण-रूपोऽनुकरणरूपत्वादेव च नामान्तरेण व्यपदिष्टो रस । तेन भरतेषु शृङ्गारस्य सुपूरकपूरवृक्षादि दृष्टो । मनोरथभीमसेनः सदीर्मिथी प्रावेशरी लोकगोचरं कृता ॥ 'दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च । अविरलविलोलजलदः कालः समुपागतश्चायम् ॥' इत्यादौ हि विभावाः काव्यबलादनुसंधेया अनुभावा शिखादयः, व्यभिचारिण कृत्रिमनिजानुभावार्जनबलात् । स्थायी तु काव्यबलादपि नानुसंधेय' ॥ रतिः शोक इत्यादयो हि शब्दा रत्यादिकमभिधेयीकुर्वन्त्यभिधानत्वेन न तु वाचिकाभिनयरूपतयावगमयन्ति । न हि वागेव वाचिकमपि तु तया निर्वर्त्यं चेष्टादिकम् । तत्र— सिद्धोऽस्मात्प्रगल्भोऽपि दुरन्तोऽपि महानपि । वाक्येनैव जन्मवि योगः शोकेन पीयते ॥' इति । तथा— शोकेन कृतरूपा स्थितो येन कर्म' । इत

---

१ स्थैर्य' भवेत्. २. पूर्वार्धे त्रुटितं प्रतीयते

नस्फुरन्नमवार्तैराशिशुमभ्यर्थ्यते सचिवैः ॥' इत्येवमादौ न शोकोऽभिनेयोऽपि त्वभिनेयः । 'मात्रि पतितो किंतस्माद्वसा धाम्नाम्बुसीकरकणाः । स्वेदोद्गम इव करतलसंस्पर्शादिव मे वपुषि ॥' इत्यनेन तु वाक्येन कार्यमभिदधता उदकपात सुखास्मारयितासिमायोऽभिनीयते न तूच्यते । अवगमनशक्तिर्ह्यभिनयनं वाचकत्वादन्या । अत एव स्थायि (विषयं) (?) पदं सूत्रे भिन्नविभक्तिकमपि मुनिना नोपात्तम् । तेन रतिरनुक्रियमाणः शृङ्गार इति । अर्थक्रियापि मिथ्याज्ञानादृष्टा । यथोच्यते—'मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतो । मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥' इति । न चात्र नर्तक एव सुखीति प्रतिपत्तिः नाप्ययमेव राम इति न चाप्ययं न सुखीति नापि रामः स्यादा न वायमिति न चापि तत्सदृश इति । किं तु सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणा चित्रतुरगादिन्यायेन यः सुखी रामः असावयमिति प्रतीतिरस्तीति ॥ यदाह— प्रतिभाति न संदेहो न तत्त्वं न विपर्ययः । धीरसावयमित्यस्ति नासावेवायमित्यपि ॥ विरुद्धबुद्धिसंभेदादविवेचितसंप्लवः । युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया ॥' इति तदिदमप्यन्तस्तत्त्वशून्यं विमर्दक्षममिति भट्टतोतः । तथा हि—अनुकरणरूपो रस इति यदुच्यते तत्किं सामाजिकप्रतीत्यभिप्रायेण, उत नटाभिप्रायेण किं वा वस्तुवृत्तविवेचकव्याख्यातृबुद्धिसंश्रयणेन । यथाहुर्व्याख्यातारः खल्वेवं विवेचयन्तीति । अथ भरतमुनिवचनानुसारेण तत्त्वाय यत्नोऽयं मतः । किंचिद् प्रमाणेनोपलब्धं तदनुकरणमिति सम्यग् वक्तुम् । यथा—एवमसौ सुरां पिबतीति सुरापानानुकरणत्वेन पयःपानं प्रत्यक्षावलोकितं प्रतिभाति । इह च नटगतं किं तदुपलब्धं स्वं यद्रत्यनुकरणतया भातीति चिन्त्यम् । तच्छरीरं तद्गतं प्रतिशीर्षकधारणरोमाञ्चगद्गदिकाभुजाक्षेपवलनप्रवर्तितभ्रूक्षेपकटाक्षादिकं च न रतेश्चित्तवृत्तिरूपाया अनुकारत्वेन कस्यचित्प्रतिभाति । जडत्वेन भिन्नेन्द्रियग्राह्यत्वेन भिन्नाधिकरणत्वेन ततोऽतिवैलक्षण्यात् । मुख्यावलोकने च तदनुकरणप्रतिभासो न च रामरतिमुपलब्धपूर्विणः कस्यचित् ॥ एतेन रामानुकारी नट इत्यपि निरस्तं प्रत्युक्तम् ॥ अथ नटगता चित्तवृत्तिरेव प्रतिपन्ना सती रत्यनुकारः शृङ्गार इत्युच्यते । तत्रापि किमाकारत्वेन सा प्रतीयते इति चिन्त्यम् ॥ ननु प्रमदादिभिः कारणैः कटाक्षादिभिः कार्यैर्धृत्यादिभिश्च सहचारिभिर्लिङ्गभूतैर्या अनुमिता कार्यरूपा कारणस्य सहचारिणश्च चित्तवृत्तिः प्रतीतियोग्या तदात्मकत्वेन सा नटचित्तवृत्तिः प्रतिभाति । तर्हि रत्याकारत्वेन सा प्रतिपन्नेति दूरे रत्यनुकरणव्याख्यायुक्तिः ॥ ननु ते विभावादयोऽनुकार्ये पारमार्थिका इह त्वनुकर्तरि न तथेति विशेषः । अस्त्वेवम्, किं तु ते विभावादयोऽनन्तकारणानन्तकार्यानन्तसहचररूपा अपि काव्यशिक्षाभ्यासोपकल्पिता कृत्रिमाः सन्तः किं कृत्रिमत्वेन सामाजिकैर्गृह्यन्ते न वा । यदि गृह्यन्ते तदा तैः कथं रत्यवगतिः । अस्मात् एव प्रतीयमानं रत्यनुकरणं युक्तमुदे॰ कारणान्तरप्रभवे हि

---

१ प्रमाणपतितं भवेत्. २. 'शीर्षक' स्यात्.

कार्ये सुविविक्तेन तथा ज्ञाते वस्त्वन्तरस्यानुमानं तावदुक्तम् । अविविक्तेन तु तस्यैव प्रसिद्धस्य कारणस्य यथा वृश्चिकविशेषाद्गोमयस्यैवानुमानं वृश्चिकस्यैव वा तत्परं मिथ्या ज्ञानम् । प्रसिद्धा इति अप्रसिद्धकारणस्य इत्यनुकरणं नाम कारणान्तरं तत्प्रभवाश्चेत्तु भावाः स्युः[1] । तत्र च विशेषभेदा यदि ज्ञायेरंस्तदा रसानुकरणस्यानुमानस्य वस्त्वन्तर स्यानुमानं समञ्जसं स्यात् । न चैवं तत्क्षणमिव रसानुकरणप्रतीतिः । अविशेषविदा च तथाविधानुभावदर्शने रतिरेवानुमीयते तच्च मिथ्याज्ञानमेवेति । यत्रापि कि[illegible] मिथ्या तत्रापि तदाभासानुमानमयुक्तम् । न हि बाष्पधूमत्वेन ज्ञायमानादनुकारानुमानं तदनुकारत्वेन प्रतिभासमानादपि कि[illegible] तदनुकारानुमानं युक्तं धूमानुकारत्वेन हि ज्ञायमानान्नीहारादग्न्यनुकारत्वप्रतीतिर्दृष्टा ॥ नन्वनुकर्तोऽपि नटः कुत्र इव भाति । सत्यम्, कुन्दन सदृशः सादृश्य च मुक्ताफलादिभिर्गौरिव गवयेन मुक्ताफलादिभिरिति नैतावता मुख्यः कश्चित् । न चापि सामाजिकानां सादृश्यमवीरति । सामाजिकानां च न मा मयुक्ता नर्तके प्रतिपत्तिरित्युच्यते । अत्र च तदनुकारप्रतिभास इति रिक्ता वाचो- युक्तिः । यथोक्तं रामोऽयमित्यस्ति प्रतिपत्तिः तदपि यदि तदन्ये मिथ्येति तदुत्तरका- लभाविबाधकप्रत्ययाभावे कथं न तत्त्वज्ञानं स्यात् । बाधकसद्भावे वा कथं न मिथ्या- ज्ञानम् । वास्तवेन च वृत्तेन बाधकानुदयेऽपि मिथ्याज्ञानमेव स्यात् । तेन विरुद्ध बुद्धसंभेदादिरसत् । नर्तकान्तरेऽपि रामोऽयमिति प्रतिपत्तिरस्ति । ततश्च रामत्वं सामान्यरूपमित्यायातम् ॥ यथोच्यते—विभावाः काव्यादनुसंधीयन्ते । तदपि न विद्मः । न हि ममेयं सीता काचिदिति आत्मीयत्वेन प्रतिपत्तिर्नटस्य ॥ अथ सामा- जिकस्य तथा प्रतीतियोग्याः क्रियन्ते इत्येतावदेवानुसंधानमुच्यते तर्हि, स्थायिनि सुतरामनुसंधानं स्यात् । तस्यैव हि मुख्यत्वेन अस्मिन्नयमिति सामाजिकानां प्रति- पत्तिः ॥ तस्मात्सामाजिकप्रतीत्यनुसारेण स्थाय्यनुकरणं रस इत्यसत् । न चापि नट- स्यैत्थं प्रतिपत्तिः रामं तच्चित्तवृत्तिं वा अनुकरोमीति । सदृशकरणं हि तावदनुकरण- मनुपलब्धप्रकृतिना न शक्यं कर्तुम् ॥ अथ पश्चात्करणमनुकरणम् तामेवेऽप्यनुकर- णरसतातिप्रसक्ता ॥ अथ न नियतस्य कस्यचिदनुकारोऽपि तच्च स्पष्टत्वे शोकम- नुकरोमीति । तत्रापि कस्योत्तमर्हि(?)केनेति चिन्त्यम् । न तावच्छोकेन तस्य तद- भावात् । न चाश्रुपातादिना शोकस्यानुकारः तद्व्यतिरिक्तत्वादित्युक्तम् । इयत्तु स्यात्तु तमप्रकृतेर्यं शोकमनुभावाख्यानानुकरोमीति । तत्रापि कस्योत्तमप्रकृतेः यस्य कस्यचि- दिति चेत्, सोऽपि विशेषतां विना कथं बुद्धावारोपयितुं शक्यः । न एवं रोदिमीति चेत्, तस्यापि मध्ये नटस्यानुप्रविष्ट इति यस्मिन्नोऽनुकार्यानुकर्तृभाव । किं च— नटः शिक्षावशात्स्वविभावस्मरणाच्चित्तवृत्तिसाधारणीभावेन हृदयसंवादात्केवलमनुभावा- न्प्रदर्शयन्काव्यमुपचितकाकुप्रभृत्युपस्कारेण पठन्नेव इत्येतावन्मात्रस्य प्रतीतेः स्वनुकारं वेदयते । अन्तर्वत्यनुकरणमिदं न रामचरितस्यानुकारः । यापि यच्छायातदनुसारेण

---

१ 'भावास्तु' स्यात्.

तदनुकरणरूपत्वम् असंवेद्यमात्रस्य वस्तुतस्तत्रानुपपत्तेः । न च मुनिवचनमेवंविधमस्ति
स्थायिनोऽनुकरणं रस इति ॥ यदोच्यते—वर्णकैर्हरितालादिभिः संयुज्यमान एव
गौरित्यादि, तत्र यथाभिव्यज्यमान इत्ययमोऽभिप्रेतः । तदसत् । न हि सिन्दूरादिभिः
पारमार्थिको गौरभिव्यज्यते प्रदीपादिभिरिव । किं तु तत्सदृशः समूहविशेषो निर्वर्त्यते ।
त एव हि सिन्दूरादयो गवावयवसंनिवेशसदृशेन संनिवेशविशेषेणावस्थिता गोस-
दृशमिति प्रतिभासस्य विषयो नैवं विभावादिसमूहो रत्यादिसदृशतां प्रतिपद्यते । तस्मा-
दनुकरणं रस इत्यसत् ॥ येन त्वन्यथापि मुख्यमुख्यत्वकल्पनया विषयसामग्री
वर्णयन्ति सोऽयमपि मुख्यमुख्यभावात् रसः । तस्यां सामग्र्यां रसस्थानीया विभावाः
संस्कारतो ह्यनुभावव्यभिचारिणः स्थायिनस्तु तत्सामग्रीजन्या नान्तरा मुख्यमुख्य-
भावा इति । तेन स्थायिभावान् रसत्वमुपनयाम इत्यादावुपचारमाश्रित्य अन्य-
विरोधे स्वयमेव मुख्यमानेन दृष्टाभिप्रायमपौर्वापर्यक्रमास्थायिमनः परिरक्षित इति
किमन्योऽन्यत्र यत्नान्तरप्रतीतिविरम्यप्रवहामि तस्मिन्नश्नोत्युत ॥ भट्टनायकस्त्वा-
ह—'रसो न प्रतीयते नोत्पद्यते नाभिव्यज्यते । स्वगतत्वेन हि प्रतीतौ करुणे
दुःखित्वं स्यात् । न च सा प्रतीतिर्युक्ता सीतादेरविभावत्वात् । स्वकान्तास्मृत्यसंवेद-
नात् । देवतादौ साधारणीकरणायोग्यत्वात् । समुद्रोल्लङ्घनादेरसाधारण्यात् । न च
तद्वतो रामस्य स्मृतिरनुपलब्धत्वात् । न च शब्दानुमानादिभ्यस्तत्प्रतीतौ ताटस्थ्यमेव
मयैतत्प्रतीतिरनुभवस्मृत्यादिरूपा रसस्य युक्ता ॥ उत्पत्तावपि तुल्यमेतद् दूषणम् ।
अभिव्यक्तौ तु पूर्वं स्थितस्य पश्चादभिव्यक्तौ विषयार्जनतारतम्यापत्तिः । स्वगतपरगत-
त्वादि च पूर्ववद्विकल्प्यम् । तस्मात्काव्ये दोषाभावगुणालंकारमयत्वलक्षणेन नाट्ये चतु-
र्विधाभिनयरूपेण निबिडनिजमोहसंकटतानिवारणकारिणा विभावादिसाधारणीकरणात्म-
नाभिधातो द्वितीयेनांशेन भावकत्वव्यापारेण भाव्यमानो रसोऽनुभवस्मृत्यादिविलक्षणेन
रजस्तमोऽनुवेधवैचित्र्यबलात् द्रुतिविस्तरविकासलक्षणेन सत्त्वोद्रेकप्रकाशानन्दमयनिज-
संविद्विश्रान्तिलक्षणेन परब्रह्मास्वादसविधेन भोगेन परं भुज्यते' इति ॥ यस्त-
याह— अभिधा भावना चान्या तद्भोगीकृतमेव च । अभिधाधामतां याते शब्दार्था-
लंकृती ततः ॥ भावनाभाव्य एषोऽपि शृङ्गारादिगणो मतः । तद्भोगीकृतरूपेण व्याप्यते
सिद्धिमान् नरः ॥ इति ॥ तत्र पूर्वपक्षोऽयं भट्टलोल्लटपक्षवदनुपपन्न इति । तद्रसस्य-
त्वानोपपन्नमेव । प्रतीत्यादिव्यतिरिक्तश्च संसारे को भोग इति न विद्मः । रसनेति चेत् ।
सापि प्रतिपत्तिरेव । केवलमुपायवैलक्षण्यान्नामान्तरं प्रतिपद्यतां दर्शनानुमितिश्रुत्युप-
मितिप्रतिभानादिनामान्तरवत् । निष्पादनाभिव्यक्तिद्वयानभ्युपगमे च नित्यो वा असन्
वा रस इति न तृतीया गतिः स्यात् । न चाप्रतीतं वस्त्वस्ति व्यवहारयोग्यम् ॥ अथो-
च्यते—प्रतीतिरस्य भोगीकरणम् । तच्च रसादिस्वरूपं तदस्तु तथापि न तावन्मात्रम् ।
यावन्तो हि रसास्तावन्त एव रसात्मानः प्रतीतयो भोगीकरणस्वभावाः सत्त्वादिगु

---

१ 'भोगार्थी' स्यात्.

येनाहृदयोऽपि हृदयवैमल्यप्राप्त्या सहृदयीक्रियते । किं च प्रतीत्युपायानामभावे कथं प्रतीतिमात्र । असकृत्प्रतीतिविश्रान्त्यलक्षणसंभवेऽपि न प्रतीतिर्विश्राम्यति स्फुट प्रतीतिरूप प्रत्यक्षोचितप्रत्ययसाकाङ्क्षत्वात् । यथाहुः—सर्वा चेयं प्रमितिः प्रत्यक्षपरा इति । तत्साक्षात्कृते चागमानुमानघटितेऽप्यनन्यथाभावस्य स्वसंवेदनात् । अतस्तत्साक्षी साक्षात्कारान्तरेणैव बलवता तदभिमतपदार्थावीति लौकिकरसावरणं क्रमः । तस्मा-त्तदुभयविघ्नविघातेऽभिनयाख्यलोकधर्मीवृत्तिप्रवृत्त्युपस्कृता समभिषिच्यन्ते । अभिनयने हि सम्यक्प्रतीतिग्रन्थापारसत्त्वमेव प्रत्यक्षव्यापारकल्पमिति । अप्रधाने च वस्तुनि[2] संवित्कस्य विश्राम्यति । तस्यैव प्रधानस्य प्रधानान्तरं प्रत्यनुधावत स्वात्मन्यवि-श्रान्तत्वात् । अतोऽप्रधानत्वं जडे विभावानुभावचये व्यभिचारिनिचये च संविदा-त्मकेऽपि नियमेन स्थाय्युपरक्षिणि संभवतीति तदतिरिक्तः स्थाय्येव चर्वणापात्रम् । तत्र पुरुषार्थनिष्ठाः काश्चित्संविद इति प्रधानम् । तद्यथा—रतिः कामतदनुषङ्गिधर्मा-र्थनिष्ठा क्रोधस्तत्प्रधानेष्वर्थनिष्ठः कामधर्मपर्यवसितोऽप्युत्साहः समस्तधर्मादिपर्यवसित शमश्च मोक्षोपाय इति तावत्तेषां प्राधान्यम् । यद्यपि चैषामन्योन्यं गुणभावोऽस्ति तथापि तत्तत्प्रधाने रूपके तत्प्राधान्यं भवतीति रूपकभेदपर्यायेण सर्वेषां प्राधान्यमवो-च्यते । महत्प्राणमभिनिविष्टतया स्वैकस्मिन्नपि रूपके[1] एकप्राधान्यम् । तत्र सर्वेऽमी सुखप्रधानाः स्वसंविच्चर्वणरूपस्य एकघनस्य प्रकाशस्यानन्दसारत्वात् । तथा हि एकघनशोकसंविच्चर्वणेऽपि लोके स्त्रीलोकस्य हृदयविश्रान्तिरन्तरायशून्यविश्रान्ति-शरीरत्वात् । शरीरत्वात् (?) अविश्रान्तिरूपतैव च दुःखम् । तत एव कापिलैर्दुःखस्य चाञ्चल्यमेव प्राणत्वेनोक्तं रजोवृत्तितां वदद्भिरित्यानन्दरूपता सर्वरसानाम् । किंतु उपरञ्जकविषयवशात्तेषामपि कटुकिमास्पर्शोऽस्ति वीरस्येव । स हि क्लेशसहिष्णुतादि-प्राण एव । एवं रत्यादीनां प्राधान्यम् । हासादीनां तु स्वातिशयं सकललोकसुलभ-विभावतयोपरञ्जकत्वमिति प्राधान्यम् । अत एवानुत्तमप्रकृतिषु बहुधा न हासादयो भवन्ति । पामरप्राय सर्वोऽपि हसति शोचति बिभेति परनिन्दामाद्रियते । अल्प-सुभाषितत्वेन न सर्वत्र विस्मयते । रत्याद्युत्पत्त्या तु पुमर्थोपयोगित्वमपि स्यात् स्थायित्वं चैतावतामेव । एकप्रधानत्वनिरास । स्थायिनिरूपणया स्थायिभावम् सर्वं नेष्यते । इत्यनया सामान्यलक्षणरूपेण सूत्रया विशेषलक्षणमिदमपि च सूचित-रूप । तथानुभावानां विभावानां व्यभिचारिणां च पृथक् स्थायिनि नियमो नास्ति बाष्पादेरानन्दाक्षिरोगादिजत्वदर्शनात् । व्याघ्रादेश्च क्रोधभयादिहेतुत्वात् । श्रमचि-न्तादेरुत्साहभयाद्यनेकसहचरत्वावलोकनात् । सामग्री या तु न व्यभिचारिणी । तथा हि । बन्धुविनाशो यत्र विभावः परिदेवितादिरनुभावश्चिन्तादैन्यादिर्व्य-भिचारी सोऽवश्यं शोक एवेत्येवं संयोगोऽत्र स्थायिसमवायि संयोग उपात्तः । तत्र लोकव्यवहारे कार्यकारणसहचारात्मकलिङ्गदर्शनजस्थाय्यात्मपरचित्तवृत्त्यनुमानाभ्यासा

---

१ 'रूपक' पाठः. २ 'वस्तुनि' पाठः.

एव यस्मादधुना तैरेवोपायव्यवधानविभिर्लौकिकी अवस्थत्वादिगुणमविकार्यैर्वि-
मर्वेभातुमपेयासमप्ररकस्तमात्रप्राणैरत एवालौकिकविभावादिव्यपदेशभाग्भिः प्राच्य
कारणादिरूपसंस्कारोपजीवनख्यापनाय विभावादिनामधेयव्यपदेशैर्गुणप्रधानतापर्यायेण
सामाजिकधियि सम्यग्योगं संबन्धमैकाग्र्यं चाधिगतवद्भिरलौकिकनिर्विघ्नसंवेदनात्म-
कचर्वणागोचरतां नीतोऽर्थश्चर्व्यमाणतैकसारो न तु सिद्धस्वभावस्तात्कालिक एव न
तु चर्वणातिरिक्तकालावलम्बी स्थायिविलक्षण एव रसः । न तु[1] यथा शङ्कुकादिभिर-
भ्यधीयत—स्थाय्येव विभावादिप्रत्यायितानुमितो रस्यमानत्वाद्रस उच्यते ॥ एवं हि
लोकेऽपि किं न रसः अयत्नतोऽपि हि यत्र रसनीयता तत्र वस्तुतः कथं न
भविष्यति । तेन स्थायिप्रतीतिरनुमितिरूपा बाध्या न रसः । अत एव सूत्रे मुनिना
स्थायिग्रहणं न कृतम् । तत्प्रत्युत शल्यभूतं स्यात् । केवलमौचित्यादेवमुच्यते—'स्थायी
रसीभूत' इति । औचित्यं तु तत्स्थायिगतत्वेन कारणादितया प्रसिद्धानामधुना चर्वणो-
पयोगितया विभावादित्वा(दि)वलम्बनात् । तथा हि । लौकिकचित्तवृत्त्यनुमाने का रसता
तदलौकिकरूपचर्वणात्मा रसास्वादः स्मृत्यनुमानलौकिकस्वसंवेदनविलक्षण एव । तथा
हि । लौकिकेनानुमानेन संस्कृतः प्रमदादिर्न ताटस्थ्येन प्रतिपद्यते अपि तु हृदयसं-
वादात्मकसहृदयत्वबलात्पूर्णीभविष्यद्रसास्वादाङ्कुरीभावेनानुमानस्मृत्यादिसोपानमनारुह्यैव
तन्मयीभावोचितचर्वणाप्राणतया । न च सा चर्वणा प्रमाणान्तरात् येनाधुना स्मृतिः
स्यात् । न चात्र लौकिकप्रत्यक्षादिप्रमाणव्यापारः किं त्वलौकिकविभावादिसंयोगबलो-
पनतैवेयं चर्वणा । सा च प्रत्यक्षानुमानागमोपमानादिलौकिकप्रमाणजनितरत्याद्यवबोध-
तस्तथा योगिप्रत्यक्षजतटस्थपरसंवित्तिज्ञानात्सकलवैषयिकोपरागशून्यशुद्धपरयोगिगत-
स्वानन्दैकघनानुभवाच्च विशिष्यते । एतेषां यथायोगमर्जनादिविघ्नान्तरोदयेन ताटस्थ्य-
हेतुकस्फुटत्वेन विषयावेशवैवश्येन च सौन्दर्यविरहात् । अत्र तु व्यामिश्रप्रमातृनियमा-
संभवात् विषयावेशवैवश्यम् आत्मानुप्रवेशात्परम्परानियमाभावाच्च ताटस्थ्यस्फुट-
त्वम् । तद्विभावादिसाधारण्यवशसंप्रबुद्धोचितनिजरत्यादिवासनावेशवशाच्च न विघ्नान्त-
राणां संभवः । अत एव विभावादयो न निष्पत्तिहेतवो रसस्य तद्बोधापगमेऽपि
रससंभवप्रसङ्गात् । नापि ज्ञप्तिहेतवः येन प्रमाणमध्ये पतेयुः । सिद्धस्य कस्यचित्प्रमे-
यभूतस्य रसस्याभावात् । तर्हि किमेतद्विभावादय इति । अलौकिक एवायं चर्वणोपयोगी
विभावादिव्यवहारः । कोऽन्यत्रैत्थं[2] दृष्टमिति चेद्भूषणमेतदलौकिकत्वसिद्धौ । पान-
कास्वादोऽपि किं गुडमरिचादिषु दृष्ट इति समानमेतत् ॥ न त्वेवं[3] रसोऽप्रमेय
स्यात् । एवं युक्तं भवितुमर्हति रसनैकप्राणो ह्यसौ न प्रमेयादिस्वभावः । तर्हि सूत्रे
निष्पत्तिरिति कथं नायं[4] रसः(?) स्यात् अपि तु तद्विषया रसना । तन्निष्पत्त्या
तु यदि तदेकायत्तजीवितस्य रसस्य निष्पत्तिरुच्यते । तत्र कश्चिन्न दोषः । सा च

---

१ यतु स्यात्. २ 'कोऽन्यत्रैत्थं' स्यात्. ३ 'चर्वणैवं' स्यात्. ४ 'नाम रसस्य स्यात्' स्यात्.

१

स च न विभावादे कार्य, तद्विनाशेऽपि रससंभवप्रसङ्गात्। नापि ज्ञाप्य, सिद्धस्य तस्याभावात्॥ कारकज्ञापकाभ्यामन्यत् क दृष्टमिति चेत्, न क्वचिद्दृष्टमित्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम्। विभावादीनां च समस्तानामभिव्यञ्जकत्वम्, न व्यस्तानां व्यभिचारात्। व्याघ्रादयो हि विभावा भयानकस्येव वीराद्भुतरौद्राणाम्। अश्रुपातादयोऽनुभावा करुणस्येव शृङ्गारभयानकयो। चिन्तादयो व्यभिचारिण करुणस्येव शृङ्गारवीरभयानकानाम्॥

यत्राप्येकैकस्योपादानम्, यथा—

'केलीकन्दलितस्य विभ्रममधो धुर्यं वपुस्ते दृशौ
भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः।
आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्मासव
सत्य सुन्दरि वेधसस्त्रिजगतीसार त्वमेकाकृतिः॥'

अत्र विभावानाम्,

---

रसना च प्रमाणव्यापारो न कारकव्यापारः स्वयं तु नाप्रामाणिकी स्वसंवेदनसिद्धत्वात्। रसना च बोधरूपैव किं तु बोधान्तरेभ्यो लौकिकेभ्यो विलक्षणैव उपायानां विभावादीनां लौकिकवैलक्षण्यात्। तेन विभावादिसंयोगाद्रसना यतो निष्पद्यते ततस्तथाविधरसनागोचरो लोकोत्तरोऽर्थो रस इति तात्पर्यम्। सूत्रस्याप्यत्र संक्षेपः। मुकुन्दप्रविभक्तिवैचित्र्यविना तावदनुद्धिरसत्वमपदे। गाढप्राक्तनसंस्कारस्मरणात्त यस्याप्यमनीयमानापि न तत्र रामधीर्विभाव्यति। तत एवोक्तमपेक्षाकाङ्क्षाग। रोमाञ्चादयश्च भूयसा रतिप्रतीतिकारिणस्तथा प्रत्यक्षप्रापकलौकिका देशकालनियमेन रतिं गमयन्ति। यस्यां कालेऽपि तद्वासनावत्त्वात्तुप्रविष्टः। अत एव तटस्थतया रसनागम। न च नियत कारणतया कैनार्जनाभिव्यङ्ग्यविशेषमापन्ना। न च नियतपरात्मगततया येन दुःखद्वेष सुखरागेण साधारणीभूता संतानवृत्तेरेकस्या एव वा संविदो गोचरीभूता रतिः शृङ्गारः। साधारणीभावश्च विभावादिभिरिति श्रीमदभिनवगुप्ताचार्यः॥ एतन्मतमेव चास्माभिरुपजीवितं वेदितव्यम्॥ तत्र विभावप्राधान्ये व्यभिचारिणां प्राधान्यं यथा—आतताततमविभ्रान्तमुद्धितं भ्रमरा समरसाङ्गिनी अहो। जनस्य बालमणीरमोघना मोचनप्रवित्तचीरस्मिनिकृतम्॥ इत्यत्र सुकुमारमुग्धभ्रमरराजपभूषणभूतस्य वितर्कत्रासप्रमुखः प्राधान्यम्। तद्विभावानां सौन्दर्यातिशयवत्त्वात् प्राधान्यात्। आतभिसार्भि-

---

१ 'मा यतो' स्यात्.

'यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत् ।
दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥'

अत्रानुभावानाम्,

'दूरादुत्सुकमागते विचलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किंचाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥'

अत्रौत्सुक्यव्रीडाहर्षकोपासूयाप्रसादानां व्यभिचारिणाम्, तत्राप्येतेषामौचित्यादन्यतमद्वयाक्षेपकत्वमिति न व्यभिचारः ॥

रसभेदानाह—

**शृङ्गारहास्यकरुणा रौद्रवीरभयानका बीभत्साद्भुतशान्ता नव रसाः ।**

तत्र कामस्य सकलजातिसुलभतयात्यन्तपरिचितत्वेन सर्वान्प्रति हृद्येति पूर्वं शृङ्गारः । तदनुगामी च हास्यः । निरपेक्षभावत्वात्तद्विपरीतस्ततः करुणः । ततस्तन्निमित्तमर्थप्रधानो रौद्रः । ततः कामार्थयोर्धर्ममूल-

---

तदनुभावधर्मस्तु तदनुयायी । अनुभावप्राधान्ये च तेषां प्राधान्यं दूरादित्यादिना तथा दर्श्यते । अन्यतमेति । विभावापेक्षयानुभावव्यभिचारिणाम्, अनुभावापेक्षया विभावव्यभिचारिणाम्, व्यभिचार्यपेक्षया विभावानुभावानामन्यतमत्वम् । तथा हि । केलीकन्दलितेत्यादौ विभावभूतस्य सौन्दर्यस्यानुगतत्वेन भ्रूविभ्रममधुरनर्मादि-व्यभिचार्यनुभावधर्मो मतिभ्रमविस्मयादिव्यभिचारिणश्च प्रतिभाति । यद्विश्रम्येत्यादौ विभावितव्यस्तव्यभिचारिविलोकनैर्विभावमात्रं गमयता रसस्य पुष्कलै-र्धर्मैरनुभावस्यानुगतत्वेन विभ्रमोऽपि चतुष्ट इति प्रतिभिन्नमिति पदसमर्पितोऽभिलाष-चिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिव्यभिचारिगणः । कृष्ण इत्यादि पदार्पितस्तु विभावः । दूरादुत्सुकमित्यादौ औत्सुक्यादेर्व्यभिचारिणोऽनुगतत्वेन दूरा-दित्यादिपदार्पितः सहसा प्रसरणादिरूपोऽनुभावः प्रेयसीति विभावश्च प्रकाशत इति । एवं द्वयप्राधान्ये चोदाहार्यम् । किं तु समप्राधान्य एव रसास्वादस्योत्कर्षः । तत्र प्रबन्ध

विषयग्रामसमग्रयो स्थिरानुरागयो समयोगसुखैषिणो कामिनोर्यूनो परस्परविभाविका द्वयोरप्येकरूपा प्रारम्भादिफलपर्यन्तव्यापिनी सुखोत्तरा आस्वादनात्मिका रति स्थायीभावश्चर्वणागोचर गत शृङ्गारो रस । देवमुनिगुरुनृपपुत्रादिविषया तु भाव एव, न पुना रस ॥

देवविषया यथा—

'यै शान्तरागरुचिभि परमाणुभिस्त्वं
निर्मापितस्त्रिभुवनैकललामभूत ।
तावन्त एव खलु तेऽप्यणव पृथिव्या
यत्ते समानमपरं न हि रूपमस्ति ॥'

मुनिविषया यथा—

'गृहाणि नाम तान्येव तपोराशिर्भवादृश ।
संभावयति यान्येव पावनै पादपांशुभि ॥'

अनुभावास्तु संभोगविप्रलम्भयो प्रत्येक वक्ष्यन्ते इति इह नोक्ता ॥

संभोगविप्रलम्भात्मेति संभोगविप्रलम्भावात्मा न त्वात्मानौ यस्य स तथा । तेन(१) शृङ्गाररसेऽमौ भेदौ गोत्वस्येव शाबलेयबाहुलेयौ । अपि तु द्वयोरप्यनुयायिनी या रतिरास्वादनात्मिका तस्या स्वापमानं रूप शृङ्गार । संभोगविप्रलम्भयोस्तु शृङ्गारशब्दो ग्रामैकदेशे ग्रामशब्दवदु पचारात् । तथाहि । विप्रलम्भेऽनवच्छिन्न एव संभोगमनोरथ, निराशत्वे तु करुण एव स्यात् । संभोगेऽपि न चेद्विरहाशङ्का तदा स्वाधीनेऽनुकूले नानादर एव स्यात्, वामत्वान्मनोभुव ।

यदाह मुनि —

'यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।
दुर्लभत्वं च यन्नार्या कामिन सा परा रति ॥'

अत एव तदुभयाद्वयमीलन एव सातिशयश्चमत्कार ।

---

सेकर्ष तस्मात् । १ इत्यपि न विस्पष्टं मन्तव्यम् । प्रारम्भादीति । एतेन अभिलषमात्रधारणा असमाप्तस्यानुवर्तिन्या: व्यभिचारित्वमात्रा रतेर्विप्रलम्भत्वमाह । वामाभिनिवेशित्वमिति । दुष्प्रापमागी हि मदन इति तद्विद । तथा अभिलष्यमाणे

यथा—

> 'एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो
> रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
> दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो
> र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहम् ॥'

सैषा विभावादिसामग्री वस्तुतः प्रबन्ध एव भवति, मुक्तकेषु तु कल्पनीयैव ॥

तत्र संभोगमाह—

**सुखमयधृत्यादिव्यभिचारी रोमाञ्चाद्यनुभावः संभोगः ।**

अन्योन्यैरनिषिद्धान्यपीष्टानि दर्शनादीनि कामिनौ यत्र संभुङ्क्तः स संभोगः । स च सुखमयधृत्यादिव्यभिचारिरोचितो रोमाञ्चस्वेदकम्पाश्रुमेलनास्खलनश्वसितसाध्वसकेशबन्धनवसनसंयमनवस्त्राभरणमाल्यादिसन्नि-वेशनविचित्रे क्षणभङ्गप्रभृतिवाचिककायिकमानसिकव्यापारलक्षणानुभावः परस्परावलोकनालिङ्गनचुम्बनाद्यनन्तभेदः ।

यथा—

> 'दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरा
> देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः ।

---

वस्तु ग्रासं प्रेत्योऽभिलाषः । तेन ग्रासं ग्रासमपहारितमिव गतं गतं ग्रासमिवेषेषु परस्पराकर्षणं वपिप्सुरयं कामः परमां प्रीतिं लभते । न तत्र कण्डूयतामिव निवृत्ति र्नाप्यपि तु भोगावसरे सुखमिति रतिहेतुत्वाद्रतिः काम इत्यर्थः ॥ सैषेति । श्रीपुंस अनुभावाद्यभिप्रायेण च एवेति रसमवस्थाः । अनुभावादीनि विभाव भाव व्यभिचारितया उभयरूपोऽपि समस्तेन शृङ्गारस विभावत्वेन मन्तव्यः । पुर्व वितत् अन्यथा अर्थेन रूपक तदानन्दनुभावादीनां सर्वेषां दर्शनाभेद्ये रसः स्यात् विभावभेदात् ॥ कल्पनिकीति । विभावादिभिर्मम तावत्तत्प्रागुपेयात् कल्पन इत्यर्थः ॥ सुखमयेति । यद्यपि रतिप्रभृतं निवारि संभोगेऽप्यस्ति तथापि न तदा विप्रलम्भापत्त विप्रलम्भे तु तदतिविभावभावपरम्परोचितमेवेति सुखमेवेतत्र सुखमयत्वम् ॥ दृष्ट्वैकासनेति । एका निजस्थव स्थिता । अपरा तत्पत्नी प्रच्छन्ना ।

---

१ 'संभुङ्क्त' इत्यन्य.

ईषद्वक्रितकंधरं सपुलकं प्रेमोल्लसन्मानसा
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥'

विप्रलम्भमाह—

शङ्कादिव्यभिचारी संतापाद्यनुभावोऽभिलाषमानप्रवासरूपो विप्रलम्भः ।

संभोगसुखास्वादलोभेन विशेषेण प्रलभ्यते आत्मात्रेति विप्रलम्भः । स च शङ्कौत्सुक्यमदग्लानिनिद्रासुप्तप्रबोधचिन्तासूयाश्रम(स)निर्वेदमरणोन्मादजडताव्याधिस्वप्नापस्मारादिव्यभिचारी संतापजागरकार्श्यप्रलापक्षामनेत्रवचोपक्रसादीनसचरणानुकारकृतिलेखलेखनवाचनसभाजनिह्नववार्ताप्रश्नोहनिवेदनसात्त्विकानुभवनशीतसेवनमरणोद्यमसंदेशाद्यनुभावस्त्रिधा, अभिलाषमानप्रवासभेदात् ॥ करुणविप्रलम्भस्तु करुण एव ।

यथा—

'हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥'

इत्यादिरतिप्रलापेषु ॥

तत्राभिलाषविप्रलम्भमाह—

दैवपारवश्याभ्यामाद्यो द्वेधा ।

आद्योऽभिलाषविप्रलम्भः ॥

---

कम्पमध्यपि एकसमयसंगतिः । निमीलन्माननयना च न दृश्या । यथा हि प्रियतमे इति कथम् । क्रीडामनुभवति चुम्बननिमीलने तदपरनायिकाचुम्बनाच विहितं तयं येन स । चुम्बनार्थमीषद्वक्रितकंधरो मनाक्चकितमीव । सपुलकः तत्समयसात्त्विकः प्रेमोल्लसन्मानसायां सपत्नीचुम्बनाभिमान एव हेतुः ॥ शङ्केति । दुःखप्राधान्यभिचारीत्यर्थं । मरणमभिरञ्जनप्रस्तापवितमयमत्र विवक्षितम्, येन शोकावस्थानमपि न लभते । यथा—'स्त्रीषे लोकव्यतिकर- इत्यादि । अत एव मुख्यविना वाच्यमर्थेनापि मरणं नाख्यातम् । प्रतीतिविश्रान्तिस्थानकरिहाराय तृतीयपद्येन च विभावानुभावाः दर्शितम् । पुनर्भङ्ग्येन स एवार्थं सुतरां द्योतितः । यस्य वा चेतन्यावस्थैव प्राप्यतापर्युत्ता-

---

१ 'प्रेमोल्ल' स्यात्, २ 'विभावा' स्यात्,

स्त्रिया यथा—

'प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मृत-
त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् ।
नमितशिरसो गङ्गालोके तया चरणाहता-
ववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥'

पुंसो यथा—

'अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षण'
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥'[1]

उभयस्य यथा—

'पणयकुविआण दोण्ह वि अलिअपसुत्ताण माणइत्ताणम् ।
णिच्चलणिरुद्धणीसासदिण्णकण्णाण को मल्लो ॥'[1]

ईर्ष्यामानः स्त्रीणामेव यथा—

'संध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचसे
धत्से यच्च नदीं विलज्ज शिरसा तच्चापि सोढं मया ।
श्रीर्जातामृतमन्थने यदि हरे कस्माद्विषं भक्षितं
मा स्त्रीलम्पट मां स्पृशेत्यभिहितो गौर्या हरः पातु वः ॥'[2]

प्रवासविप्रलम्भमाह—

कार्यशापसंभ्रमैः प्रवासः ।

प्रवासो भिन्नदेशत्वम् ।

तत्र कार्यहेतुकः प्रवासो यथा—

'याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानतां
कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया ।

---

1 'प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः ।
निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः ॥' [इति छाया ।]

२. 'र्जातामृतमन्थने यदि हरेः' इति वाग्भटकाव्यानुशासने पाठः साधुः

1

तद्वीर्तं गुरुणाप्यगद्गदगलत्सारस्वरं रामया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥'

शापहेतुकप्रवासे मेघदूतकाव्यमेवोदाहरणम् ॥

संभ्रमो दिव्यमानुषविद्वरादुत्पातमारुतादिविप्लवात् परचक्रादिविप्लवाद्वा व्याकुलत्वम् ।

यथा मकरन्दयुद्धसाहाय्यं कर्तुं गतस्य माधवस्य—

'हा प्रिये, हा मालति,

किमपि किमपि शङ्के मङ्गलेभ्यो यदन्य-
द्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि ।
कलयसि कलिसोऽहं वल्लभे देहि वाचं
भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥'

हास्यमाह—

विकृतवेषादिविभावो नासास्पन्दनाद्यनुभावो निद्रादिव्यभिचारी हासो हास्यः ।

वेषकाव्ययोर्धर्मवैपरीत्याद्विकृता केशबन्धादयो वेषा, भाविश्रव्याग-र्तनान्यगत्याद्यनुकरणासत्प्रलापभूषणादीनि विभावा यस्य स, तथा नासौष्ठकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणाद्यनुभावो निद्रा वहित्थश्रमालस्यादि व्यभिचारी हास स्थायी चर्वणीयत्वमागतो हास्य ।

स चात्मस्थ परस्थश्च । तत्रात्मस्थमाह—

उत्तममध्यमाधमेषु स्मितविहसितापहसितैः स आत्मस्थस्त्रेधा ।

स इति हास ।

यदुक्तं—

'ईषद्विकसितैर्गण्डै कटाक्षै सौष्ठवान्वितै ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥
आकुञ्चिताक्षिगण्डं यत्सस्वनं मधुरं तथा ।
कालागतं सास्यरागं तद्वै विहसितं भवेत् ॥

१ भरतमुनिना नाट्यवेदेन च तन्नाट्यमभिहिता

अस्थानहसितं यत्तु साश्रुनेत्रं तथैव च ।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥'

परस्थमाह—

एतत्संक्रमणेऽहसितोपहसितातिहसितं परस्थोऽपि ।

एतेषां स्मितादीनां संक्रान्त्या ज्ञातैर्यथासंख्येनोत्तमादिषु ।

यद्भरत'—

'उत्फुल्लाननेत्रं तु गण्डैर्विकसितैरथ ।
किंचिल्लक्षितदन्तं च हसितं तद्विधीयते ॥
उत्फुल्लनासिकं यत्तु जिह्मदृष्टि निरीक्षितम् ।
निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत् ॥
संरब्धसांस्रनेत्रं च विकृष्टस्वरमुद्धतम् ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ॥'

तत्रास्वस्थो हासो यथा—

'पाणौ कङ्कणमुत्फणः फणपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कुटिलकाम्कूटकुटिलो वस्त्रं गजेन्द्राजिनम् ।
गौरीलोचनलोभनाय सुभगो वेषो वरस्यैष मे
गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥'

---

संक्रान्तेऽपि । परं हसन्तं दृष्ट्वा सर्वं विभावमपश्यन्नपि हसंल्लोको दृष्टः । तथा प्रिया-परिदर्शनेऽपि गम्भीरोऽप्युदितहासोऽपि परप्रियहासावलम्बने तत्क्षणं हासविभाव-संपन्न एवेति । यथा अम्लरसविभावितरसास्वादोऽन्यत्रापि दन्तोदकविकाराद्युत्पत्ति-भात् संक्रमणस्वभाव' तथा हासोऽपि संक्रमति मान्ये । यत्तु स्वामिशोकानुसारेण शोकः सोऽन्य एव शोकस्वामिविभावको विभावभेदात् । इह च तद्विभावक एव हासः संक्रमतीत्यर्थः । स्मितं हि मध्यमप्रकृतौ तत्संक्रान्तं हसितं संपद्यते । एवं विहसितं मध्यमप्रकृतौ संक्रान्तमुपहसितम् । अपहसितमधमप्रकृतौ संक्रान्तमतिहसित-मिति स्मितस्य देवतायां अपकर्षायां हसितम्, ततो विशेषेण तदोऽपि परस्परसमीप

---

१ 'साश्रुनं' भरत  २ 'विकुष्ट' भरत

---

१ 'ज्योति' स्वात,  २ 'संक्रान्तं' स्वात,

परस्त्री यथा—

'कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम्।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिप-
न्जयति जनितव्रीडाहासः प्रियाहसितो हरिः॥'

करुणमाह—

इष्टनाशादिविभावो दैवोपालम्भाद्यनुभावो दुःखमयव्यभिचारी शोकः करुणः।

इष्टवियोगानिष्टसंप्रयोगविभावो दैवोपालम्भनिश्वासवानवमुखशोषण स्वरभेदाश्रुपातवैवर्ण्यप्रलयस्तम्भकम्पभूलुठनगात्रसंसाक्रन्दाद्यनुभावो निर्वेद ग्लानिचिन्तौत्सुक्यमोहश्रमत्रासविषाददैन्यव्याधिजडतोन्मादापस्मारालस मरणप्रभृतिदुःखमयव्यभिचारी चित्तवैधुर्यलक्षणः शोकः स्थायीभावश्चर्व णीयतां गतः करुणो रस।

यथा—

'अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम्॥'

इत्यादि रतिप्रलापेषु॥

रौद्रमाह—

दारापहारादिविभावो नयनरागाद्यनुभाव औग्र्यादिव्यभिचारी क्रोधो रौद्रः।

दारापहारदेशजात्यभिजनविद्याकर्मनिन्दासत्यवचनप्रभृत्यासिक्षेपोपहास वाक्पारुष्यद्रोहमात्सर्यादिविभावो नयनरागभ्रुकुटीकरणदन्तौष्ठपीडनगण्ड स्फुरणहस्ताग्रनि[1]ष्पेषताडनपाटनपीडनप्रहरणाहरणशस्त्रसंपातरुधिराकर्षण च्छेदनाद्यनुभाव औग्र्यावेगोत्साहविबोधामर्षचापलादिव्यभिचारी क्रोधः स्थायिभावश्चर्वणीयतां प्राप्तो रौद्रो रस।

---

१. 'निष्पेष' स्यात्.

यथा—

'अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥'

तत्र धर्मवीरो नागानन्दे जीमूतवाहनस्य । दानवीरः परशुरामबलिप्रभृतीनाम् । युद्धवीरो वीरचरिते रामस्य ॥

इह चापलत्कृनिमग्नतां स्वल्पसत्त्वोऽयं मिथ्याज्ञानं चापस्य यस्तत्त्वनिश्चयरूपोऽसमोहाध्यवसायः स एव प्रधानतमोत्साहहेतुः । रौद्रे तु ममताप्राधान्यादवशासितानुचितयुद्धादयपीति मोहविस्मयप्राधान्यमिति विवेकः ।

भयानकमाह—

विकृतस्वरश्रवणादिविभावं करकम्पाद्यनुभावं शङ्कादिव्यभिचारि भयं भयानकः ।

पिशाचादिविकृतस्वरश्रवणतदवलोकनस्वजनवन्धवधादिदर्शनश्रवणशून्यगृहारण्यगमनादिविभावं करकम्पचलदृष्टिनिरीक्षणहृदयपादस्पन्दशुष्कोष्ठकण्ठत्वमुखवैवर्ण्यस्वरभेदाद्यनुभावं शङ्कापस्मारमरणत्रासचापलावेगदैन्यमोहादिव्यभिचारी स्त्रीनीचप्रकृतीनां स्वाभाविकमुत्तमानां कृतकं भयं स्थायिभावश्चर्वणीयत्वमागतं भयानको रसः ।

यथा—

'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥'

ननु च राजादिः किमिति गुर्वादिभ्य कृतकं भयं दर्शयति, दर्शयित्वा किमिति मृदून् करकम्पादीन्दर्शयति, किमिति च भयं एव कृतकत्वमुक्तं

---

यापकस्यैव तु विभावस्यमिति तत्रैवादीरस वैचित्र्यमित्यर्थः । यदाह भरतः—'दानवीरं धर्मवीरं युद्धवीरं तथैव च । रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि ॥' इति । स्त्रीनीचप्रकृतीनामिति । नीचमध्यमप्रकृतीनाम् । कृतकमिति । उत्तमा हि कम्तर्मभावाभेऽपि गुरुभ्यो राजानं भयं दर्शयन्ति । एवं हि गुरवश्चापर्णं

सर्वस्य हि कृतकत्वं समवति, यथा वेश्या धनार्थिनी कृतकां रतिमावर्ज यति ॥ उच्यते—भये हि प्रदर्शिते गुरुर्विनीत स जानाति मृदुचेष्टितत्वया चाधमप्रकृतिमेनं न गणयति । कृतकरसादेशोपदिष्टाच्च काचित्पुरुषार्थ सिद्धिः । यत्र तु राजानः परानुग्रहाय क्रोधविस्रम्भादि दर्शयन्ति, तत्र व्यभिचारित्वैव, न तेषां स्थायितेति ॥

बीभत्समाह—

अहृद्यदर्शनादिविभावाङ्गसंकोचाद्यनुभावापस्मारादिव्यभिचारिणी जुगुप्सा बीभत्सः ।

मद्यपानाशुद्धान्त्रव्रणपूतिकृमिकीटादीनां दर्शनश्रवणादिविभावा अङ्गसंकोचहृल्लासनासामुखविकूणनाच्छादननिष्ठीवनाद्यनुभावापस्मारौग्र्यमोहगदादिव्यभिचारिणी जुगुप्सा स्थायिभावरूपा चर्वणीयतां गता बीभत्सः ।

यथा—

'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा
　न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का
　दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥'

अद्भुतमाह—

दिव्यदर्शनादिविभावो नयनविस्ताराद्यनुभावो हर्षादिव्यभिचारी विस्मयोऽद्भुतः ।

दिव्यदर्शनेप्सितमनोरथावाप्त्युपवनदेवकुलादिगमनसभाविमानमायेन्द्रजालातिशायिशिल्पकर्मादिविभावो नयनविस्तारानिमिषप्रेक्षणरोमाञ्चाश्रुस्वे

---

भवति । प्रभुमत्त्वं वामाक्षाणां यथा सेव्यमपरीक्षत एवास्मीति ॥ दिव्येति । दिव्या मन्वर्षादयस्तेषां दर्शनम् । धनस्यप्राप्तिरेव ईप्सिता, धनस्यप्राप्तिस्तु मनोरथाः, तयोः प्राप्तिः उपवने देवकुलादौ च गमनमद्भुतविभावो येन तत्रत्यं सद. संनिवेशादि च कल्पितम् । सभा एकविशेष । विमानानि व्योमरथाः । माया रूपपरिवर्तनादिका । इन्द्रजालं मन्त्रादिसामर्थ्यात्पुष्पादिनामसद्वस्तुप्रदर्शनम् । शा-

१ 'भक्षय' पाठ. २ 'आर्त' पाठ. ३ 'रङ्क' पाठ.

दसाधुवादवेपनहाहाकारचेलाङ्गुलिभ्रमणाद्यनुभावो हर्षावेगजडतादिव्यभिचारी चित्तविस्तारात्मा विस्मयः स्थायिभावश्चर्वणीयतां गतोऽद्भुतो रसः ।

यथा—

'कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया,
सत्यं कृष्ण, क एवमाह, मुसली, मिथ्याम्ब पश्याननम् ।
व्यादेहीति विकाशिते शिशुमुखे माता समग्रं जग
द्दृष्ट्वा यस्य जगाम विस्मयपदं पायात्स वः केशवः ॥'

शान्तमाह—

वैराग्यादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृत्यादिव्यभिचारी शमः शान्तः ।

वैराग्यसंसारभीरुतातत्त्वज्ञानवीतरागपरिशीलनपरमेश्वरानुग्रहादिविभावो यमनियमाध्यात्मशास्त्रचिन्तनाद्यनुभावो धृतिस्मृतिनिर्वेदमत्यादिव्यभिचारी तृष्णाक्षयरूपः शमः स्थायिभावश्चर्वणां प्राप्तः शान्तो रसः ।

यथा—

'गङ्गातीरे हिमवति शिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।
किं तैर्भाव्यं मम सुदिवसैर्येषु ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः शृङ्गकण्डूं विनेतुम् ॥'

---

निश्चितस्य साधुपदः । दाने यथार्थे । हाहाशब्दस्य करणं हाहाकारः । चेलस्य भ्रमणमिति ॥ यमेति । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ तृष्णाक्षय इति । तृष्णानां विषयाभिलाषाणां क्षये यत्रात्मसमावेशः स शमः । अयमर्थः—कारुण्योपशमप्रशमविभेदरसादिभिरनुसरन्तं यत्नमसारं तदेव विरमेऽपि तदनन्तरपठनीयमात्मभिमतमतर सुन्दरतामात्मरूपं रसादिपूर्वकेषु तथाभावेनापि चङ्क्रमणोऽयमर्थमेति न्यायेन

---

१ 'हाहाहोत्कार' ... २ 'विकाशिते' स्यात्. ३ 'तृष्णाक्षय' इति टीकायां व्याख्यातम्.

---

१ 'भाव' स्यात्. २ 'यत्रो यत्रात्मसमावेशः' स्यात्. ३ 'अक्षिविस्तारात्मा' स्यात्.

मात्यन्तं परोन्मुखतासमस्तकर्तृत्वाभ्यासहीनं परमात्मन्यमर्षविवेकत्वं तथापि महत्त्वसंपादकत्वतो हृदयं विघते ॥ एतेन निर्वेदस्यामङ्गल्यप्रायस्यापि व्यभिचारिषु प्रथममुपादानं कृतं तस्य स्थायिताभिधानार्थमिति यदुक्तम् तत्प्रतिक्षिप्तम् । तथाहि—योऽयं निर्वेदो नाम दारिद्र्यादिप्रभवस्तत्त्वज्ञानप्रभवो वा । तत्राद्यस्य शोकप्रवाहप्रसरस्थितचित्तवृत्तिविशेषस्य व्यभिचारित्वं वक्ष्यते । अथ तत्त्वज्ञानजो निर्वेदः स्थायी तर्हि तत्त्वज्ञानमेवात्र विभावत्वेनोक्तं स्यात् । वैराग्यसंसारभीर्वादि(?)षु कथं विभावः । तदुपायत्वादिति चेत्परम्परयापि विभावता व्यवहारः, स चातिप्रसङ्गावहः । किं च निर्वेदो नाम सर्वत्रानुपादेयता प्रत्ययो वैराग्यलक्षणः । स च तत्त्वज्ञानस्य प्रस्तुतोपायः । विरक्तो हि तथा प्रयतते यथास्य तत्त्वज्ञानमुत्पद्यते । तत्त्वज्ञानाद्धि मोक्षो न तु तत्त्वं ज्ञात्वा निर्विद्यते ॥ ननु तत्त्वज्ञानिनः सर्वत्र स्वतः वैराग्यं दृष्टम् । भवत्येवं तादृशं तु वैराग्यं ज्ञानस्यैव पराकाष्ठेति न निर्वेदः स्थायीति ॥ ननु व्यभिचारिव्याख्यानावसरे 'तथा दुःखोऽभ्युदयम्' इत्यादौ चिरकालविभ्रमविप्रलम्भसोपादेयत्वनिवृत्तये सम्यग्ज्ञानं वक्ष्यते तन्निर्वेदस्य चेतस्यस्य विभावत्वेनेति तस्मात् शम एव स्थायी । न च शमशान्तयोः पर्यायत्वमाशङ्कनीयम् । हासहासयोरिव सिद्धसाध्यतया लौकिकालौकिकतया साधारणासाधारणतया च भेदस्य भावात् । यथा च कामादिषु पुरुषार्थेषु समुचितावसरतयो रत्यादिस्थायिभावाः कविनटव्यापारास्वादयोग्यतामापद्यमानाः तथाविधहृदयसंवादवतः सामाजिकान् प्रति रसत्वं शृङ्गारादितया नीयते तथा मोक्षाभिधानपरमपुरुषार्थोपयिकतापि शमस्य चित्तवृत्ती रसतां नीयत इति । तथा हि तत्त्वज्ञानसमाधस्य शमस्य स्थायिनः समस्तोऽयं लौकिकालौकिकचित्तवृत्तिकलापो व्यभिचारितामभ्येतीति तदनुभावा एव च यमनियमाद्युपकृता अनुभावाः विभावा अपि परमेश्वरानुग्रहप्रभृतयः प्रत्ययोन्मुखस्य रसास्वादो ऽभ्यासावधयः । केवलं यथा विप्रलम्भे औत्सुक्यं संभोगेऽपि वा प्रेमास्वादोत्सव मिति । यथा च रौद्रे वीर्यम्, यथा च करुणवीरभयानकाद्भुतेषु निर्वेदधृतित्रासहर्षा व्यभिचारिणोऽपि प्राधान्येन विभाव्यन्ते तथा शान्ते जुगुप्सादयः सर्वैव रागप्रतिपक्षत्वात् सास्यापि च क्वचित्तस्य परार्थघटनापायमेवोपम इत्युत्साहोऽस्य परोपकारविषयेच्छाप्रधानस्यो दयापरपर्यायोऽन्यविशेषोऽन्तरङ्ग । अत एव केचिद्दयावीरत्वेन व्यपदिशन्त्यस्य धर्मवीरत्वेन ॥ नत्वत्साहोऽयमपरामर्शः शान्तरसस्यातिचारतैर्विस्तारकः । ननु नियतः (?) व्यभिचारित्वं हि विरुद्धस्यापि नायुचितं रत्यादिव निर्वेदः । 'तथा चोक्तम्– इत्यादौ हि परोपकारकरणे तस्योत्साहस्यैव प्रकर्षो भवते चेतःसुखरूपा व्यभिचारव्यवस्था । इच्छाप्रयत्नव्यतिरेकेण पापान्यायपरेः । अत एव च परिचयपरम्परत्वेन शासमौलिकेन कर्तव्यान्तरं व्यपदिश्यते । अत एव शान्तहृदयाणां

१ 'तु' स्यात्. २. निर्विद्यते' स्यात्. ३ 'इत्यस्य' स्यात्. ४ 'स्येऽन्ये' स्यात्. ५. नत्व' स्यात्.

न चास्य विषयजुगुप्सारूपत्वात् बीभत्सेऽन्तर्भावो युक्तः। जुगुप्सा ह्यस्य व्यभिचारिणी भवति, न तु स्थायितामेति। पर्यन्तनिर्वाहे तस्या मूलत एवोच्छेदात्॥ न च धर्मवीरे, तस्याभिमानमयत्वेन व्यवस्थानात्

---

परोपकाराय शरीरसर्वस्वादिदानं न शान्तविरोधि। 'आत्मानं (सो) गोपायेत्' इत्यादिना तत्त्वज्ञप्रमिषयं शरीररक्षणमुपदिश्यते संन्यासिनां तत्त्वाभितत्पर्याभावात्। तथा हि—'धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः। तान्निघ्नता किं न हतं रक्षता किं न रक्षितम्॥' इत्यभिप्रसिद्धचतुर्वर्गसाधकत्वमेव देहरक्षायां निदानं दर्शितम्। कृतप्रेमस्य 'अग्नौ अग्नौ वा पतेत्' इति संन्यासिस्येन श्रवणात्। तथा च कर्मविरचितं शरीरम्, यदि परमार्थमुपपद्यते तत्किमिव न संपादितं भवति। जीमूतवाहनादीनां भवतत्त्वमिति चेत्, किं तेन। तत्त्वज्ञानित्वं तावत्तस्यैव अन्यथा परमार्थे श्लाघ्यतासंभाव्यत्वात्। बुद्धोऽपि हि च वीरस्य देहत्यागयोगमः पैरावणमोदीच्छैव श्रूयते। अपुण्यमाद्यमपि शुभतमदेहान्तरसंपिपादयिषैवाभिविजृम्भते। तत्पराधीनेनैव *परार्थसंपत्त्यै सम्बोधित देहस्यापर्यन्तमुपवेदनस्यापि तत्परस्य व्यासनतत्त्वज्ञानाय* मर्त्यमात्मनेवेति। तेऽपि (?) तत्त्वज्ञानिनां सर्वेष्वाश्रमेषु मुक्तिरिति। स्मार्तश्रुती यथोक्तम्—'विशार्थपरतत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धं कृत्वा ददद्द्रव्यं गृहस्थोऽपि हि मुच्यते॥' इति केवलं परार्थमिपतिपिचादर्भत्पपरोपकारप्रवृत्तेनैवाभिसंहत्य तमुनरपि देहस्य तदुचितस्यैव प्रादुर्भावो बोधिसत्त्वानां तत्त्वज्ञानिनामपि। उत्साहोऽपि विश्रान्तिस्थानः शमावधिभिसात्। यथा रामस्य वीरत्वे पितृवचः परिपाल्यत। एवं शृङ्गारादावपि मन्तव्यम्। अत एव शान्तस्य स्थायित्वेऽप्यभावाभावम्। जीमूतवाहने भिर्वर्त्संपत्तौ समरोगकृतिप्रधानयोः फलत्वात्। तदत्र स्थितं दयावीरोऽस्तु स्थायीह प्रधानम्। अन्ये तु व्यभिचारिण्येव यथायोगं भवन्तीति॥ एवं च धर्मवीरे जीमूतवाहनस्य धीरोदात्तत्वं प्रतिष्ठितं तत्प्रत्युक्तमेव। न च तदीया पर्यन्तावस्था प्रात्तपैदीया येन सर्वचेष्टोपरमात्मानुभावाभावेनाप्रतीयमानता स्यात्। शृङ्गारादेरपि फलभूमावव्यापारपर्यवसितैव। पूर्वभूमौ तु 'प्रशान्तबाह्येतरसंस्कारस्तनिवृत्तेषु प्रत्ययान्तराणि संस्कारेभ्यः' इति सूत्रद्वयनीत्या चित्रकारा यमनियमादिचेष्टा वा राज्यपुरोहितमपि अव्याप्ता वा शान्तस्यापि अनुभावव्यभिचारिसंचारस्य प्रतीयते एव (वै प्रतीयते)॥ ननु प्रतीयते सर्वस्य तु श्लाघ्यास्पदं न भवति। तर्हि वीतरागाणां शृङ्गारो श्लाघ्य इति। सोऽपि रसत्वाश्चर्यताम्। अथार्थ्यं—यदि नाम सर्वजनानुभवगोचरत्वं तस्य नास्ति नैतावता सा च लोकसामान्यमहानुभावचित्तवृत्तिविशेषप्रतिषेधेषु शक्या॥ ननु धर्मप्रधानोऽसौ वीर एव संभाव्यते इत्याशङ्क्याह—अभिमानमयत्वेनेति। उत्साहो ह्यहमेवंविध इत्येवं प्राण इत्यर्थः॥

---

१ 'इत्यस' स्यात्. २ 'परमितयो' स्यात्. ३ तैलपक्वमिति भवेत्.

स्य चाहंकारमयत्वैकरूपत्वात्। तथापि तयोरेकत्वपरिकल्पनेन वीररौद्रयोरपि तथा प्रसङ्गः। धर्मवीरादीनां चित्तवृत्तिविशेषाणां सर्वाकारमहंकाररहितत्वे शान्तरसप्रभेदत्वमितरथा तु वीररसप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः। तदेवं परस्परविविक्ता नवापि रसाः॥

एषां क्रमेण स्थायिभावान् संगृह्णाति—

**रतिहासशोकक्रोधोत्साहभयजुगुप्साविस्मयशमाः स्थायिनो भावाः।**

भावयन्ति चित्तवृत्तय एवालौकिकवाचिकाद्यभिनयप्रक्रियारूढतया आस्वाद्यमान लौकिकदशायामनास्वाद्यमप्यास्वाद्यं कुर्वन्ति। यद्वा भावयन्ति व्याप्नुवन्ति सामाजिकानां मन इति भावाः स्थायिनो व्यभिचारिणश्च। तत्र स्थायित्वमेतावतामेव। जात एव हि जन्तुरियतीभिः संविद्भिः परीतो भवति। तथा हि दुःखद्वेषी सुखास्वादनलालसः सर्वो रिरंसया व्याप्तः स्वात्मन्युत्कर्षमानितया परमुपहसति। उत्कर्षापायशङ्कया शोचति। अपायं प्रति क्रुध्यति। अपायहेतुपरिहारे समुत्सहते। विनिपाताद्बिभेति। किंचिदयुक्ततमाभिमन्यमानो जुगुप्सते। ततश्च परकर्तव्यवैचित्र्यदर्शनाद्विस्मयते। किंचिज्जिहासुस्तत्र वैराग्यात्प्रशमं भजते। न ह्येतच्चित्तवृत्तिवासनाशून्यः प्राणी भवति। केवलं कस्यचित्काचिदधिका भवति चित्तवृत्तिः, काचिदूना। कस्यचिदुचितविषयनियन्त्रिता, कस्यचिदन्यथा। तत्काचिदेव पुरुषार्थोपयोगिनीत्युपदेश्या। तद्विभागकृतश्चोत्तममध्यमप्रकृत्यादिव्यवहारः॥

ये पुनरमी धृत्यादयश्चित्तवृत्तिविशेषास्ते समुचितविभावाभावाज्जन्म मध्ये न भवन्त्येवेति व्यभिचारिणः। तथा हि रसायनमुपयुक्तवतोग्लान्यालस्यश्रमप्रभृतयो न भवन्त्येव। यस्यापि वा भवन्ति विभावबलात्तस्यापि

---

अस्य चेति। शान्तस्य। तथापीति। इह भयत्वनिरीहत्वाभ्यामत्यन्तं विसदृशोरपीत्यर्थः। वीररौद्रयोस्तु धर्मार्थकामार्थोपयोगित्वेन तुल्यरूपत्वादत्यन्तविरोधोऽपि नास्ति॥ संगृह्णातीति। संक्षिपति न तु [illegible]। [illegible] एव स्था-

---

१ 'संक्षप' पाठ.

हेतुप्रक्षये क्षीयमाणाः संस्कारशेषतां नावश्यमुपगच्छन्ति । रत्यादयस्तु स पादितस्वकर्तव्यतया मलीनकल्पा अपि संस्कारशेषतां नातिवर्तन्ते । व स्त्वन्तरविषयस्य रत्यादेरखण्डनात् । यदाह पतञ्जलिः—'न हि चैत्र ए कस्यां स्त्रियां विरक्त इत्यन्यासु विरक्तः' इत्यादि । तस्मात्स्थायिरूपचित्तवृ त्तिसूत्रस्यूता एवामी स्वात्मानमुद्यास्तमयवैचित्र्यशतसहस्रधर्माण प्रतिल भमाना स्थायिन विचित्रयन्त प्रतिभासन्ते इति व्यभिचारिण उच्यन्ते । तथा हि ग्लानोऽयमित्युक्ते कुत इति हेतुप्रश्नेनास्थायितास्य सूच्यते । न तु राम उत्साहशक्तिमानित्यत्र हेतुप्रश्नमाहु । अत एव विभावास्तु प्रोद्बोधका सन्त स्वरूपोपरञ्जकत्व विदधाना रत्युत्साहादेरुचितानुचि तत्वमात्रमावहन्ति, न तु तदभावे ते सर्वथैव निरुपाख्याः । वासनात्मना सर्वजन्तूनां तन्मयत्वेनोक्तत्वात् । व्यभिचारिणां तु स्वविभावाभावे नामापि नास्ति ॥

तत्र परस्परास्थाबन्धात्मिका रतिः । चेतसो विकासो हासः । वैधुर्यं शोकः । तैक्ष्ण्यप्रबोध क्रोधः । संरम्भ स्थेयानुत्साहः । वैक्लव्यं भ यम् । संकोचो जुगुप्सा । विस्तारो विस्मयः । तृष्णाक्षयः शमः ॥

रसलक्षण एव स्थायिस्वरूपे निरूपिते पुनर्निर्देश कचिदेषां व्यभि चारित्वस्थापनार्थ । तथा हि विभावभूयिष्ठत्वे एषां स्थायित्वम्, अल्प विभावत्वे तु व्यभिचारित्वम् । यथा रावणादावन्योन्यानुरागाभावाद्रतिर्व्य भिचारिणी । तथा गुरौ मियतमे परिजने च यथायोगं वीरशृङ्गारादौ रोषो व्यभिचार्येव । एवं भावान्तरेषु वाच्यम् । शमस्य तु यद्यपि कचिदप्राधा न्यम्, तथापि न व्यभिचारित्वम्, प्रकृतित्वेन स्थायितमत्वात् ।

व्यभिचारिणो ब्रूते—

धृतिस्मृतिमतिव्रीडाजाड्यविषादमदव्याधिनिद्रासुप्तौत्सुक्यावहि त्थशङ्काचापलालस्यहर्षगर्वौग्र्यप्रबोधग्लानिदैन्यश्रमोन्मादमोहचि-

विभावस्य विरूपितत्वादिति माव ॥ प्रकृतित्वेन स्थायितमत्वादिति । रसा-

१ परावर्ति' स्यात्.

न्तामर्षत्रासापस्मारनिर्वेदावेगवितर्कासूयामृतयः स्थित्युदयप्रशमसं-
धिशबलत्वधर्माणस्त्रयस्त्रिंशद्व्यभिचारिणः ।

तत्र धृतिः सन्तोषः । स्मृतिः स्मरणम् । मतिरर्थनिश्चयः । व्रीडा चित्तसंकोचः । जाड्यमर्थाप्रतिपत्तिः । विषादो मनःपीडा । मद आनन्दसंमोहसंभेदः । व्याधिर्मनस्तापः । निद्रा मनःसंमीलनम् । सुप्तं निद्राया गाढावस्था । औत्सुक्यं कालाक्षमत्वम् । अवहित्थमाकारगुप्तिः । शङ्कानिष्टोत्प्रेक्षा । चापलं चेतोनवस्थानम् । आलस्यं पुरुषार्थेष्वनादरः । हर्षश्चेतःप्रसादः । गर्वः परावज्ञा । औग्र्यं चण्डत्वम् । प्रबोधो विनिद्रत्वम् । ग्लानिर्निर्बलापचयः । दैन्यमनौजस्यम् । श्रमः खेदः । उन्मादश्चित्तविप्लवः । मोहो मूढत्वम् । चिन्ता ध्यानम् । अमर्षः प्रतिचिकीर्षा । त्रासश्चित्तचमत्कारः । अपस्मार आवेशः । निर्वेदः स्वावमाननम् । आवेगः संभ्रमः । वितर्कः संभावना । असूया अक्षमा । मृतिर्म्रियमाणता । एते च स्थित्युदयप्रशमसंधिशबलत्वधर्माणः ।

स्थितिर्यथा—

'तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥'

अत्र विप्रलम्भरससद्भावेऽपि इयति वितर्कस्थितिश्चमत्कारकृत् आस्वादातिशयः ।

उदयो यथा—

'याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया
निध्यातं परिवर्तनं पुनरपि प्रारब्धमङ्गीकृतम् ।

---

एते हि तत्तत्कारणान्तरोदयप्रकर्षोत्सर्प्यमाणनिरपवादत्वात् किंचित्स्थायित्वेऽपि-
तया स्थायित्वाभासमिति सिद्धमतात् स्थायिन इत्युच्यन्ते । तत्तत्कार्ये तु सकलभावान्तर
विनिवर्तनीयं सर्वस्थायिनः स्थायित्वं यथा रसादिषु स्थायिनिश्चितादौ व्यभिचारि

भूयस्तत्प्रकृत कृतं च शिथिलश्लिष्टैकदोर्वल्लया
तन्वङ्ग्या न तु पारितः स्तनभरो नेतुं प्रियस्योरसः ॥'

अत्र मानस्योदयः ।

प्रशमो यथा—

'दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वक्त्रक-
म्यग्भूतं बहिरासितं पुलकवत्स्पर्शे समातन्वति ।
नीवीबन्धवदागते शिथिलितां समाश्रमाणे ततो
मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि ॥'

अत्र मानस्य प्रशमः ।

संधिर्यथा—

'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥'

अत्रावेगहर्षयोः संधिः ।

शबलत्वं यथा—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥'

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलत्वम् ।

विविधमाभिमुख्येन स्थायिधर्मोपजीवनेन स्वधर्मार्पणेन च चरन्तीति व्यभिचारिणः । भावा इत्यनुवर्तते । संख्यावचनं नियमार्थं तेनान्येषामत्रैवान्तर्भावः । तद्यथा—दम्भस्यावहित्थे, उद्वेगस्य निर्वेदे, क्षुत्पृष्णादेर्ग्लानौ । एवमन्यदप्यूह्यम् ॥ अन्ये त्वाहुः—एतावत्स्वेव सहचारिष्ववस्थाविशेषेषु प्रयोगमदर्शितेषु स्थायी चर्वणायोग्यो भवति ॥

१ 'शशलक्ष्मणः' इत्यन्यत्र

एषां विभावानुभावानाह—

ज्ञानादेर्धृतिरव्यग्रभोगकृत् ।

ज्ञानशक्तिगुरुभक्तितपःसेवाक्रीडार्थलाभादिविभावा धृतिः संतोषः । सा च लब्धानामुपभोगेन नष्टानामननुशोचनेन योऽव्यग्रो भोगस्तं करोति । तेनानुभावेन धृतिं वर्णयेदित्यर्थः ।

यथा—

'वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या
सम इह परितोषे निर्विशेषा विशेषाः ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥'

सदृशदर्शनादेः स्मृतिर्भ्रूक्षेपादिकृत् ।

सदृशदर्शनस्पर्शनश्रवणाभ्यासप्रणिधानादिभ्यः अनुभूतवस्तूनां स्मरणं स्मृतिः । तां भ्रूक्षेपशिरःकम्पनसोन्मुखमनःशून्यावलोकनाङ्गुलीभङ्गादिभिर्वर्णयेत् ।

यथा—

'मैनाकः किमयं रुणद्धि गगने मन्मार्गमव्याहतं
शक्तिस्तस्य कुतः स वज्रपतनाद्भीतो महेन्द्रादपि ।
तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं
आ ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ॥'

शास्त्रचिन्तादेर्मतिः शिष्योपदेशादिकृत् ।

शास्त्रचिन्तनोहापोहादिभ्योऽर्थनिश्चयो मतिः । तां शिष्योपदेशार्थविकल्पनसंशयच्छेदादिभिर्वर्णयेत् ।

यथा—

'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥'

---

भावत्वाभिधर्मत एव विवक्षितमिति ॥ विभावानुभावानिति । न तु व्यभिचारिणः । एवं हि तदाकारे स्वं रसान्तरमपि स्यात् । यथापि च व्यभिचारिभि

---

1 निर्विशेषा' काव.

अकार्यकरणज्ञानादेर्व्रीडा वैवर्ण्यादिकृत् ।

अकार्यकरणज्ञानगुरुव्यतिक्रमप्रतिज्ञाभङ्गादेश्चेतःसंकोचो व्रीडा । तां वैवर्ण्याधोमुखविचिन्तनभूविलेखनवस्त्राङ्गुलीयकर्णस्पर्शननखनिखोदनादिभिर्वर्णयेत् ।

यथा—

'दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि न चकार लज्जया ॥'

इष्टानिष्टश्रवणादेर्मौक्यं तूष्णींभावादिकृत् ।

इष्टानिष्टदर्शनश्रवणव्याध्यादिभ्योऽर्थाप्रतिपत्तिर्मौक्यम् । तत्तूष्णींभावानिमिषनयननिरीक्षणादिभिर्वर्णयेत् ।

यथा—

'एवमालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥'

कार्यभङ्गाद्विषादः सहायान्वेषणमुखशोषादिकृत् ।

उपायाभावनाशाभ्यां प्रारब्धस्य कार्यस्य भङ्गान्मनःपीडा विषादः । तं सहायान्वेषणोपायचिन्तनोत्साहविघातवैमनस्यादिना उत्तममध्यमानाम्, मुखशोषसृक्कलेहननिद्राश्वसितध्यानादिभिरधमानां वर्णयेत् ।

यथा—

'व्यर्थं यत्र कपीन्द्रसख्यमपि मे क्लेशः कपीनां वृथा
प्रज्ञा जाम्बवतो न यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वापि मे ॥'

मद्योपयोगान्मदः स्वापहास्यास्मरणादिकृत् ।

मद्यपानादानन्दसंमोहयोः संगमो मदः । तं स्वापस्खलितगानकिंचिदाकु-

---

व्यभिचार्यन्तरं क्षेमाख्यं । तद्यथा पुरुषस्य अभ्यासे वितर्कचिन्तादि । तत्रापि एतस्यापि भावत्वेन व्यभिचार्यन्तरयोगः स केवलमभावस्थानीयो मोन्मादेन क्रोधोपरम इति ।

सखाप्यस्खलद्गतिमधुमापणरोमोद्गमादिभिरुत्तमानाम्, हास्यगीतसम्राकुल-भुजक्षेपव्याविद्धकुटिलगत्यादिभिर्मध्यमानाम्, अस्मरणघूर्णनस्खलद्गमनरु-दितच्छर्दितसक्तकण्ठनिष्ठीवनादिभिरधमानां वर्णयेत् । तथा च—

'उत्तमाधममध्येषु यथ्यंते प्रथमो मद ।
द्वितीयो मध्यनीचेषु नीचेष्वेव तृतीयक ॥'

यथा—

'सावशेषपदमुक्तमुपेक्षा सस्तमाल्यवसनामरणेषु ।
गन्तुमुत्थितमकारणत स्म द्योतयन्ति मदविभ्रममासाम् ॥'

विरहादेर्मनस्तापो व्याधिर्मुखशोषादिकृत् ।

विरहाभिलाषादिभ्यो मनस्तापो व्याधिर्हृत्पाद्याधिः । तं मुखशोष सस्त्राङ्गतागात्रविक्षेपादिभिर्वर्णयेत् ।

यथा—

'मनोरोगस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूम ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥'

श्रमादेर्निद्रा जृम्भादिकृत् ।

श्रमममदालस्यचिन्तात्याहारस्वभावादिभ्यो मन संमीलनं निद्रा । तां जृम्भावदनगौरवशिरोकाञ्चननेत्रघूर्णनगात्रमर्दोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनादिभिर्वर्णयेत् ।

यथा—

'निद्रानिमीलितदृशो मदमन्थराणि
नाप्यर्थवन्ति न च यानि निरर्थकानि ।
अद्यापि मे मृगदृशो मधुराणि तस्या
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥'

---

१ गौरवशिरोबाधन' इति भरत

निद्रोद्भवं सुप्तमुत्स्वमायितादिकृत्।

निद्रोद्भवमित्यनेन निद्राया एव गाढावस्था सुप्तमित्याह। तदुत्स्वमा यितोच्छ्वसितनिःश्वसितसंमोहनादिना वर्णयेत्।

यथा—

'एते लक्ष्मण जानकीविरहितं मां खेदयन्त्यम्बुदा
मर्माणीव विघट्टयन्त्यलममी क्रूराः कदम्बानिलाः।
इत्थं व्याहृतपूर्वजन्मचरितो यो राधया वीक्षितः
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः॥'

इष्टानुस्मरणादेरौत्सुक्यं त्वरादिकृत्।

इष्टानुस्मरणदर्शनादेर्विलम्बासहत्वमौत्सुक्यम्। तत्त्वरानिःश्वसितो च्छ्वसितकार्श्यमनःशून्यतादिगवलोकनरणरणकादिभिर्वर्णयेत्।

यथा—

'आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः।
बद्धुं न संभावित एव तावत्करेण रुद्धोऽपि हि[1] केशपाशः॥'

लज्जादेरवहित्थमन्यथाकथनादिकृत्।

लज्जाभयगौरवादिभ्यो भ्रूविकारमुखरागादीनामाच्छादनकारिणी चित्तवृत्तिरवहित्थमवहित्था वा। न बहिःस्थं चित्तं येनेति। पृषोदरा दित्वात्। तदन्यथाकथनापलोकितकथाभङ्गकृतकधैर्यादिभिर्वर्णयेत्।

यथा—

'एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती॥'

चौर्यादेः स्वपरयोः शङ्का पार्श्वविलोकनादिकृत्।

चौर्यपारदार्यादेर्विरुद्धाचरणादनिष्टोत्प्रेक्षा शङ्का। सा च कदाचि त्स्वस्मिन्, यदा समापराधयोरात्मपरयोः परो राजादिना दण्ड्यते। कदा चित्परस्मिन्, यदा विकाराकुलतया कृतदोषत्वेन परः संभाव्यते। सा

1 'च' इत्युपलब्धपाठानुरोधे

च पार्श्वविलोकनमुखशोषकण्ठशोषणगात्रप्रकम्पनस्वरास्वर्णभेदावगुण्ठनादि भिर्वर्ण्यते ।

स्वस्मिन्यथा—

'दूराद्वीयो धरणीधराभं यस्ताडकेयं तृणवद्व्यधूनोत् ।
हन्ता सुबाहोरपि ताडकारिः स राजपुत्रो हृदि बाधते माम् ॥'

परस्मिन्यथा—समुद्रदत्तस्य नन्दयन्त्यामन्यानुरागशङ्का, दुर्योधनस्य वा भानुमत्याम् ।

रागादेश्चापल्यं वाक्पारुष्यादिकृत् ।

रागद्वेषमात्सर्यामर्षेर्ष्यादिभ्यश्चेतोनवस्थानं चापल्यम् । अविमृश्य कार्यकरणमिति यावत् । तच्च वाक्पारुष्यनिर्भर्त्सनप्रहारवधबन्धादिभिर्वर्णयेत् ।

यथा—

'कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तः परिवेषवन्ति लीलारविन्दं भ्रमयांचकार ॥'

श्रमादेरालस्यं निद्रादिकृत् ।

श्रमसौहित्यरोगगर्भस्वभावादिभ्यः पुरुषार्थेष्वनादर आलस्यम् । तच्च निद्रातन्द्रासर्वकर्मविद्वेषशयनासनादिना वर्णयेत् ।

यथा—

'चलति कथंचित्पृष्टा यच्छति वाचं कदाचिदालीनाम् ।
आसितुमेव हि मनुते गुरुगर्भभरालसा सुतनुः ॥'

प्रियागमादेर्हर्षो रोमाञ्चादिकृत् ।

प्रियागमनबन्धुपुत्रोत्सवगुरुराजचमत्प्रसादभोजनाच्छादनधनलाभोपभोगमनोरथावाप्त्यादिभ्यश्चेतःप्रसादो हर्षः । तं च रोमाञ्चाश्रुस्वेदनयनवदनप्रसादप्रियभाषणादिभिर्वर्णयेत् ।

यथा—

'आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां
गेहिन्या परितोषबाष्पसलिलामासज्य दृष्टिं मुखे ।

दत्त्वा पीलुशमीकरीरकवलान्स्वेनाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभारानलग्नं रजः ॥'

विद्यादेर्गर्वोऽसूयादिकृत्।

विद्याकुलैश्वर्ययौवनरूपधनादिभ्यः परावज्ञा गर्वः। तमसूयामर्षपारुष्योपहासगुरुलङ्घनाधिक्षेपनेत्रगात्रविकृत्यनुत्तरदानशून्यावलोकनाभाषणैर्वर्णयेत्।

यथा—

'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥'

शौर्यादेरौग्र्यं वधादिकृत्।

चौर्यद्रोहासत्यलापादिभ्यश्चण्डत्वमौग्र्यम्। तद्वधबन्धताडननिर्भर्त्सनादिभिर्वर्णयेत्।

यथा—

'उत्कृत्योत्कृत्य गर्भानपि शकलयतः क्षत्रसन्तानरोषा-
दुद्दामस्यैकविंशत्यवधि विशसतः सर्वतो राजवंशान्।
पित्र्यं तद्रक्तपूर्णह्रदसवनमहानन्दमन्दायमान-
क्रोधाग्नेः कुर्वतो मे न खलु न विदितः सर्वभूतैः स्वभावः ॥'

श्रान्त्यादेः प्रबोधो जृम्भादिकृत्।

स्वप्नस्पर्शश्रमान्त स्वप्नशयननिद्राच्छेदाहारपरिणामादिभ्यो विनिद्रत्वं प्रबोधः। स च जृम्भणाक्षिमर्दनभुजक्षेपाङ्गुलिस्फोटनशय्यात्यागमीबाहुवलनादिभिर्वर्ण्यते।

यथा—

'प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा जृम्भणैः साङ्गभङ्गैः।
नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥'

व्याध्यादेर्ग्लानिर्वैवर्ण्यादिकृत् ।

व्याधिमनस्तापनिधुवनोपवासक्षुत्पिपासाध्वश्रमजननिद्राच्छेदासिपानतपो जराक्लमाभ्यासादिभ्यो बलापचयो ग्लानिः । तां वैवर्ण्यक्षामनेत्रकपोलो त्क्षिप्ताक्लमवेपनदीनसंचारानुत्साहादिभिर्वर्णयेत् ।

यथा—

'किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥'

दौर्गत्यादेर्दैन्यममृजादिकृत् ।

दौर्गत्यमनस्तापादिभ्योऽनौजस्यं दैन्यम् । तन्मृजात्यागगुरुत्वशिरः प्रावरणादिभिर्वर्णयेत् ।

यथा—

'अज्ञानस्तावु विचिन्त्य स्वयमधनानुचं कुल चात्मन-
स्त्वय्यस्याः कतमप्यबान्धवकृतां प्रेमप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमिय दारेषु दृश्या च या
भाग्याधीनमतः परं न खलु तत्स्त्रीबन्धुभिर्याच्यते ॥'

व्यायामादेः श्रमोऽङ्गभङ्गादिकृत् ।

व्यायामाध्वगत्यादिभ्यो मनःशरीरखेदः श्रमः । सोऽङ्गभङ्गमर्दनमन्द क्रमासविजृम्भणादिभिर्वर्णयेत् ।

यथा—

'अलसललितमुग्धान्यध्वसंतापखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
मृदुमथितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥'

---

१ 'ऽधर्मः' भरतः

इष्टवियोगादेरुन्मादोऽनिमित्तस्मितादिकृत्।

इष्टवियोगधननाशाभिघातवातसंनिपातग्रहादिभ्यश्चित्तविप्लव उन्मादः। तमनिमित्तस्मितरुदितोत्क्रुष्टगीतनृत्यमधावितोपवेशनोत्थानासंबद्धप्रलापमस्पांशुद्ध्वनिर्माल्यचीवरघटचषकशरावामरणादिभिर्वर्णयेत्।

यथा—

'हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता।
संभावितैकदेशेन देयं यदभियुज्यते॥'

प्रहारादेर्मोहो भ्रमणादिकृत्।

प्रहारमत्सरभयदैवोपघातपूर्ववैरस्मरणत्रासनादिभ्यश्चित्तस्य मूढत्वं मोहः। मोहस्य मागवस्थापि मोहशब्देनोच्यते। तं भ्रमणदेहघूर्णनपतनसर्वेन्द्रियप्रमोहवैचित्र्यादिभिर्वर्णयेत्।

यथा—

'तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव॥'

सुखचन्मापि मोहो भवति।

यथा—

'कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना
द्वासः प्रश्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम्।
एतावत्सखि वेद्मि सांप्रतमहं तस्याङ्गसङ्गे पुन
र्कोऽसौ कासि रतं नु किं कथमिति स्वल्पापि मे न स्मृतिः॥'

दारिद्र्यादेश्चिन्ता संतापादिकृत्।

दारिद्र्येष्टद्रव्यापहारैश्वर्यभ्रंशादिभ्यो ध्यानं चिन्ता। सा च स्मृतेरन्या प्रसन्नवदनवत्। सेक्षणाद्गमनवच्च। तां संतापशून्यचित्तत्वकार्श्यश्वासाधोमुखत्वचिन्तनादिभिर्वर्णयेत्। सा च वितर्काद्यतो वा वितर्क इति वितर्कोऽप्यवगमयति चिन्ता।

यथा—

'पश्यामि तामित इत पुरतश्च पश्चा
दन्तर्बहिः परित एव विवर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती
मासज्य तिर्यगपवर्तितदृष्टि वक्त्रम् ॥'

आक्षेपादेरमर्षः स्वेदादिकृत् ।

विद्यैश्वर्यबलाधिककृतेभ्य आक्षेपावमानादिभ्य प्रतिचिकीर्षारूपोऽमर्षः।
स च स्वेदध्यानोपायान्वेषणशिरःकम्पाधोमुखविचिन्तनादिभिर्वर्ण्यते ।

यथा—

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥'

निर्घातादेस्त्रासोऽङ्गसंक्षेपादिकृत् ।

निर्घातगर्जितभूपर्वतकम्पश्चिल्लोल्काशनिविद्युत्पातरक्षःस्थूलप्रमृतदृष्ट्यादि
भ्यश्चेतश्चमत्कृतिरूपस्त्रासो भयात्पूर्वापरविचारवतो भिन्न एव । सोऽङ्गसं
क्षेपस्तम्भरोमोद्गमगद्गदप्रलापोत्कम्पनिःस्पन्दवीक्षितैर्वर्ण्यः ।

यथा—

'परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥'

ग्रहादेरपस्मारः कम्पादिकृत् ।

महभूतवेशयक्षपिशाचब्रह्मराक्षसशून्यारण्यश्मशानसेवनोच्छिष्टगमनधा
तुवैषम्यादेरावेशरूपोऽपस्मारः । स कम्पितस्फुरितस्विन्नधावितश्वसितमू
मिपतनारावमुखफेनादिभिर्वर्णयेत् । अयं च ग्राम्य आमासेष्वेव शोभते ।

यथा—

'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥'

शस्त्रं शस्त्रं न शस्त्री त्वरितमहह हा कर्कशत्वं नखाना-
मित्थं दैत्याधिनाथो निजनखकुलिशैर्येन भिन्नः स पायात् ॥'

एवं वातावेगादिपूदाहार्यम् ।

संदेहादेर्वितर्कः शिरःकम्पादिकृत् ।

संदेहविमर्शविप्रतिपत्त्यादिभ्यः संभावनीयप्रत्ययो वितर्कः । स शिरःकम्पभ्रूक्षेपसंभावनाकार्यकलापमुहुर्ग्रहणमोक्षणादिभिर्वर्ण्यः ।

यथा—

'अनङ्ग पङ्गुभिः पौष्पैर्विश्वं व्यजयतेषुभिः ।
इत्यसंभाव्यमथ वा विचित्रा वस्तुशक्तयः ॥'

परोत्कर्षादेरसूयावज्ञादिकृत् ।

परस्य सौभाग्यैश्वर्यविद्यादिभिरुत्कर्षाद्विप्रमादादपराधमुहुर्गुर्वादिभ्यश्चा

---

इत्यादिना निदर्शितः । वातावेगो यथा— 'वाताहतं वसनमाकुलमुत्तरीयम्—' इत्यादि । वर्षावेगो यथा—'देवे वर्षत्यशनपचनव्यापृता वह्निहेतोर्गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः । नीध्रप्रान्तानविरलजलान्पाणिभिस्ताडयित्वा शूर्पच्छत्रास्तिमित-शिरसो योषितः संचरन्ति ॥' अग्न्यावेगो यथा— 'शिखी दहन्नयम्—' इत्यादि । गजावेगो यथा— 'स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन । रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥' प्रियदर्शनादावेगो यथा—'एह्येहि वत्स रघुनन्दन पूर्णचन्द्र चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम् । आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथ वा चरणपुष्करकद्वयं ते ॥' अप्रियदर्शनश्रवणादावेगो यथा उन्मत्तराघवे— विदूषकः—(ससंभ्रमम् ।) भगवन् कुम्भयोने रक्षस्व, परित्रायस्व परित्रायस्व । (इत्याकुलतां नाटयति ।)' इत्यादि । पुनः 'विदूषकः—मृगरूपं परित्यज्य विधाय विकटं वपुः । नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥ रामः—वत्सस्याभय-वारिधेः प्रतिभयं मन्ये कथं राक्षसात्त्रस्तश्चैष मुनिर्विरौति मनसश्चास्त्येव मे संभ्रमः । मा हासीर्जनकात्मजामिति मुहुः स्नेहाद्गुरुर्याचते न स्थातुं न च गन्तुमाकुलमतेर्मूढस्य मे निश्चयः ॥' [illegible] राजविद्रवादि तत्रोत्पातावेगो यथा— 'आपन्नमस्य सर्वं कुरु वरतुरगं संनिधेहि द्रुतं मे चक्रः स्वयं कृपाणीमुपनय धनुषा किं किमङ्ग प्रविष्टे । संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योन्यमेव प्रतीपं क्रन्दत्सु त्वदरिषु त्वयि चकि-तदृशां विद्विषामाविरासीत् ॥' संदेहेति । संदेहः किमिदमित्युभयावलम्बी प्रत्ययः संशयरूपः । विमर्शो विशेषप्रतीत्याकाङ्क्षात्मिका इच्छा । प्रमाणेन पदार्थानामप्रतीतिमात्रं

---

१ 'नीध्रप्रा' स्यात् । २ 'योषितः' स्यात् । ३ 'विद्रुतादि' स्यात् ।

क्षमारूपामुया । सामर्षशाभ्रुकुटीकोपसेर्ष्योत्कयालोकितदोषोपवर्णनादिभि र्वर्णयेत् ।

यथा—

'वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीणि कुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जन ॥'

व्याध्यभिघाताभ्यां मृतिर्हिक्काकार्श्यादिकृत् ।

व्याधिर्ज्वरादि प्रतीत , सर्पविषगजादिसंभवोऽभिघातस्ताभ्यां मृते प्रागवस्था मृतिः । साक्षान्मृतावनुभवाभावात् । तत्र व्याधिजां मृतिं हिक्काश्वासाक्षमताक्षिनिमीलनाद्यै , अभिघातजां तु कार्श्यवेपथुदाहहिक्काफेनाङ्गभङ्गजडतामरणादिभिर्वर्णयेत् ।

यथा—

'स गत क्षितिमुष्णशोणितार्द्रो खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभि क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे ॥'

शृङ्गारे तु मरणाध्यवसायो मरणात्पूर्वं झटिति पुनर्योगो वा निबध्यते। अन्यत्र तु स्वेच्छा ।

यथा—

'संप्राप्तेऽवधिवासरे क्षणमनु त्वद्वर्त्मवातायनं
वारंवारमुपेत्य नि क्रियतया निश्चित्य किंचिच्चिरम् ।

---

विप्रतिपत्तिरित्याहु । एभ्योऽनन्तरं भवितव्यताप्रसवनभाव एकतरपक्षसंविल्पराचीपक्षान्तरगुरुत्वकृष्यमयोपपचनु(?)न्नमतमम्यम वर्शवर्तक. । स च संशयाख्यपगोप । संदेहेन तावदुभयाधारिकपक्ष विमर्षोदि लोकारेऽपि कविविधार्थं महदानिरूपणम् । अन्ये तु—धर्मिणि संदेहो धर्मे तु विमर्षो भ्रान्तिकार्मं विप्रतिपत्तिरित्याहु । प्रायपरत्वेति । विषमाध्यवसेन मनेन व्याधिना मे न निवर्तितममिरवेषविवशिताति यथा ॥ कार्द्यमिति । अर्थं हि विनियोगः । यदाह भरत—प्रथमे तु प्रथमे वेगे द्वितीये वेपनं तथा । दाहं तृतीये हिक्कां च चतुर्थे संप्रयोजयेत् ॥ फेनं च पञ्चमे

1 वेपथुमथ्य' भरतपुस्तके

एंप्रस्येव निवेद्य केलिकुररीः सास्रं सखीभ्य शिशो-
मीधव्या सहकारकेण करुणः पाणिग्रहो निर्मितः ॥'

यथा—

'तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो
र्देहत्यागादमरगणनालेख्यमासाद्य सद्य ।
पूर्वाकाराधिकतररुचा सगतः कान्तयासौ
लीलागारेष्वरमत पुनर्न क्षमाम्यन्तरेषु ॥'

अथ सात्त्विकानाह—

स्तम्भस्वेदरोमाञ्चस्वरभेद(स्वर)कम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः ।

सीदत्यस्मिन्मन इति व्युत्पत्तेः सत्त्वगुणोत्कर्षात्साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वम्, तत्र भवाः सात्त्विकाः । भावा इति वर्तते ॥ ते च प्राणभूमिप्रसृतरत्यादिसंवेदनवृत्तयो बाह्यजडरूपमौक्तिकनेत्रजलादिविलक्षणा विभा

---

कुर्यात्सप्तमे स्कन्धमग्नम् । अवती सप्तमे कुर्यादष्टमे मरणं तथा ॥' आदिग्रहणात्स्वप्ना भूमिपतनविकम्पनस्फुरणादयो ज्ञेयाः ॥ प्राणभूमीति । अयं भावः । रत्यादयश्चित्तवृत्तिविशेषाः पूर्वसंविद्रूपाः समुल्लसन्ति । तत आभ्यन्तरं प्राणान्तरात्माभ्यासेन कल्पयन्ति । न चैतदसंवेद्यम् । तथा हि क्रोधावेशे अन्तरा व्याकस्येव पूर्वमुन्मिषति ततः स्वेदः । अभिनेयाशयेन महामुनिनोक्तम्—'पूर्वं तपो गच्छति पश्चात्स्वेदस्मिन्नम्' इति । तथा तदवस्थां प्राप्तोऽवहित्यादिना भावो बहिर्विकारपर्यन्तप्राप्तो परिरक्ष्यमाणो दृष्टः । यथा—'पिअमुहसस[illegible]सपणअमिअं एवधारं पिआहिअअम् । गुरुसंकमणम्मि[illegible] पि ण ठाइ ॥ प्रियमुखदर्शनेन रतिविषये सादरं मद्धितहृदयं चलितं गुरुविषये मा संक्रमीरिति । निषिद्धस्वैरप्रभृति बाह्यप्रसरमपि न विभाव्यति । आन्तरस्यैवाऽयं सात्त्विकक्षोभमयमेवैतत् । निदर्शनं चात्र प्रतीयमानम् । तथा हि । प्रियं मुखं यस्य तावतस्य यथायुक्त दर्शने आद्दरमपि चलितो

1 [illegible]प्रमादपतितो भवेत्.

---

1 'प्रियमुखदर्शनपर्युत्सुकचलितं रतिसादरं प्रियाहृदयम् । गुरुसंक्रमसङ्कटेऽप्यारम्भमपरमपि वाक्य न तिष्ठति ॥' इति —रमिसागरोऽम्याहृदयम् । गुरुसंक्रमसङ्कटेऽप्यारम्भप्रसरोऽपि वाक्य न तिष्ठति ॥ इति च च्छाया

रसभावानभिधाय तदाभासानाह—

नेरिन्द्रियेषु तिर्यगादिषु चारोपाद्रसभावाभासौ ।

निरिन्द्रिययोः संभोगारोपणात्संभोगाभासो यथा—

'पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥'

विप्रलम्भारोपणाद्विप्रलम्भाभासो यथा—

'वेणीभूतप्रतनुसलिला ताम्यती तस्य सिन्धुः
पाण्डुच्छायातटरुहतरुभ्रंशिभिः शीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥'

भावाभासो यथा—

'गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।
अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥'

तिरश्चोः संभोगाभासो यथा—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥'

यथा च—

'ददौ रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥'

विप्रलम्भाभासो यथा—

'आपृष्टासि व्यथयति मनो दुर्बला वासरश्री-
रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि ।

---

भावाभासो यथा—(वेन्द्रायन्मामिमुखम् ।) तद्बकाभिमुखं मुख विनमितं दृष्टिः कृता पादयोस्तस्याप[illegible]न्तरे मोन्ने निरुद्धे यथा । पाणिभ्यां च तिरस्कृत सपुलक. स्वेदोद्गमो गण्डयोः सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः ॥ निर्व्याजे [illegible]

---

१ 'निरिन्द्रि' स्यात्. २ 'तामतीतस्य(?)' स्यात्.

---

१ विप्रलम्भादेरिति भवेत्. २. 'मत्याचेना' स्यात्.

नाभ्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवासक्तस्त्विह भगवतीमक्षतमस्त्ययामि ॥'

यथा वा—

'नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नास्सरसः करोति कवलानावर्जितैः शैवलैः ।
दानासारनिषण्णमूकमधुपव्यासक्तदीनाननो
नूनं भावसमाधियोगविधुरः स्तम्बेरमस्ताम्यति ॥'

भावाभासो यथा—

'त्वत्कटाक्षावलीलीलां विलोक्य सहसा प्रिये ।
वनं मयात्यसौ भीडाजडदृष्टिर्मृगीजनः ॥'

आदिशब्दान्निशाचन्द्रमसोर्नायकत्वाध्यारोपात्संभोगाभासो यथा—

'अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥'

चन्द्रे भावाभासो यथा—

'त्वदीयमुखमालोक्य लज्जमानो निशाकरः ।
मन्ये घनघटान्तर्धिं समाश्रयति सत्वरं ॥'

रसाभासस्य भावाभासस्य च समासोक्त्यर्थान्तरन्यासोत्प्रेक्षारूपकोपमासु वाच्ययोर्जीवितम् ॥

अनौचित्याच्च ।

अन्योन्यानुरागाभावेनानौचित्याद्रसभावाभासौ ।

---

वाक्प्रपञ्चेन यथा—'मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति । अन्यापि किं सखि न भाजनमीदृशानां वैरी न चेद्भवति वेपथुरन्तरायः ॥' एकदेशे-वास्तवभेदो यथा—'बाले द्वारमतीम्- इति ॥ एते च स्थायिका प्रविरलं संभवन्तीति रसवद्ध्वनिभावप्रवृत्तपक्षस्यापेक्षयापि व्यभिचारिवत् चातुर्व्यवस्थमपि भजन्त इति सुप्रमोदाहरणत्वाच्च रसाद्युदाहरणानि न प्रदर्शितानि ॥ रसाभास इति । परस्पर

१ परस्परास्थगमनम्' इति स्यात्.

रसाभासो यथा—

'दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं
चेतः कालकलामपि प्रसहते नावस्थितिं तां विना ।
एतैराकुलितस्य विक्षततरैरङ्गैरनङ्गातुरैः
संपद्येत कथं तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम् ॥'

अत्र सीताया रावणं प्रति रत्यभावाद्रसाभासः ।

यथा वा—

'स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे
विलेभे कः प्राणान्रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥'

अत्रानेककामुकविषयमभिलाषं तस्याः 'स्तुमः' इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

भावाभासो यथा—

'निर्मास्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
कान्तिः प्रावरणं तनोर्मधुमुचो यस्याश्च वाचः किल ।
विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावण-
स्तां द्रष्टुं जनकात्मजां हृदय हे नेत्राणि मित्रीकुरु ॥'

अत्रौत्सुक्यम् ॥

काव्यस्य लक्षणमुक्त्वा भेदानाह—

व्यङ्ग्यस्य प्राधान्ये काव्यमुत्तमम् ।

वाच्यादर्थाद्व्यङ्ग्यस्य वस्त्वलंकाररसादिरूपस्य प्राधान्ये काव्यमुत्तमम् ।

---

स्थायिन्यभिव्यक्तेति हि रतेः शृङ्गारत्वमुक्तम् । अत्र तु अन्यनाभिलाषमात्ररूपा रतिर्व्यभिचारिभावो न स्थायी । तस्य तु स्थायित्वमनौचित्यादि । अतश्च स्थाय्याभासत्वं रतेः । यतो रावणस्य सीताविषयमप्युपेक्षिका इत्थं नैव रसयति । तत्स्पर्शे ग्रमिमानोऽस्य नै वैषयमवीय रसेऽपि तु निश्चयोऽप्यनुपयोगी कामजमोहसारत्वात् । यतो स्थाय्याभास-

१ 'मैत्रैव । प्रतीयं न पश्यति' स्वाद.

यथा—

'वल्मीकः किमुदोद्धृतो गिरिरियत्कस्य स्पृशेदाश्चर्यं
त्रैलोक्यं तपसा जितं यदि मदो दोष्णां किमेतावता।
सर्वं साध्वथ वा तृणस्ति विरहक्षामस्य रामस्य चे
त्त्वद्दन्ताङ्कितवालिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम्॥'

अत्र दन्ताङ्कितपदेन तदवज्ञयस्तत्कक्षपरिग्रहस्यैव चतुर्दमेव भ्रमणं पुनः कृपामात्रेण त्यागरूपश्रमतीकार पुनरप्यभिमानदर्प इत्यादि व्यज्यते॥

असत्संदिग्धतुल्यप्राधान्ये मध्यमं त्रेधा।

असति संदिग्धे तुल्ये च प्राधान्ये व्यङ्ग्यस्य मध्यमं काव्यम्।

तत्रासत्प्राधान्यं कचिद्वाच्यादनुत्कर्षेण।

वत्। तस्यापि मानस्यावास्तवत्वमात्रे प्रतीते चर्वणामात्रसारः महाप्रमाण इति॥ एवं हासाभासो यथा—'श्वेतकेतवामि चरिताभि न लोक एव संभ्रमते मम किमहं वदाम नाम। यत्तव हास्यमुखरे समसुप्य तेन पार्श्वोपपीडमिह को न विजागरीति॥' अत्र यत्विमितत्त्वयीयेऽपि वस्तुनि लोकस्य हास्यमुखरत्वं स हासाभासः। किमप्यस्य काव्यस्य तु हासत्वमेव। एवं रसान्तरेष्वप्युदाहार्यमिति॥ दन्ताङ्कितपदेनेति। वस्तुत्वमात्रेण। अभिमानदर्प इत्यादीति। वस्तिद्यमर्थः। एवमलंकारे रसादौ च प्राधान्येन व्यङ्ग्ये काव्यस्यात्ममत्वं विशेयम्। तद्यथा— लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्स्मेरेऽधुना तव मुखे तरलायताक्षि। क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः॥' अत्र रूपकालंकारो व्यङ्ग्यः। तथा हि। लावण्यं सौन्दर्यमुक्तिमा कान्तिः प्रभा ताभ्यां परिपूरितानि संनिभक्तानि कृतानि संपादितानि दिङ्मुखानि येन। कोप कषायक्षुत्क्षाम्यादनन्तरं प्रसादोन्मुख्येन स्मेरे ईषद्विहसनशीले तरलायते प्रसादान्तो समविकासमुन्दरे भवितुमसावदसा आनन्दजनम्। अथ वा अधुना कोपादनन्तरं प्रसादोदये च एति इत्यते तु तन्यान्तरे क्षोभमप्ययत्। कोपकषायपाटलस्मेरे च तव मुखं संध्यारागपूर्णचन्द्रमण्डलमेवैति भाव्यम्। क्षोभेण वक्त्रविकासितया चन्द्रस्य न यैति तस्मुख्यचन्द्रमपदतपार्थ जलराशिर्जलमयोऽचेतनः। जलमयत्वा द्यन्ता भावार्थप्रधाना इत्युक्तं भाव। अत्र लोभो मदनविकारतया चन्द्रस्य तत्सुप्रपञ्चनेऽप्यदने मदनीति द्वन्द्वाभिधाया विभाव्यतत्पूर्वक व्याप्यमेव। तदभयेन च काव्यस्य चारुत्वं व्यवस्थित इति तस्यैव प्राधान्यम्॥ रसप्राधान्ये यथा—'शून्यं वासगृहं विलोक्य शयनादुत्थाय

१ 'वाच्यात्' इति मदीन.

१ मदिमा' स्यात. * इत्यत्र इत्युपलभ्यते

यथा—

'वाणीरकुडङ्गुड्डीनसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडाए वहूए सीअन्ति अङ्गाइं ॥'

अत्र 'दत्तसंकेतः कश्चिल्लतागहनं प्रविष्टः' इति वाच्यात् 'सीदन्त्यङ्गानि' इति वाच्यमेव सातिशयम् ।

कचित्पराङ्गत्वेन यथा—

'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'

अत्र शृङ्गारः करुणस्याङ्गम् ।

---

नितम्बस्तके मध्येऽस्माभिरपीतरद्विषमे निःसम्बद्धामागता । सङ्क्षिस्तृषितेव सैप्रति पयेरासम तुरी स्तनी साकाङ्क्षं मुहुरीक्षते जलकर्मेम्यभिनी लोचने ॥' अत्र हि पाणि स्कराङ्गुवर्तनसस्मारसम्प्रतिकृतिपतिभिन्नतिरपरमप्रमोपनाद्रससराजस परस्परास्पोभम्य स्तो रतिस्थायिभावो विभावानुभावसंयोगमावसेन चर्वण्य इति (?) भावस्य इति प्रा धान्येनात्र रसो व्यङ्ग्यः । एवं मावतपामाधारीणां पुत्रमप्रभेदतया उदाहरणानि द्वेयानीति ॥ सातिशयमिति । तथा हि । गृहकर्मव्यापृतया इत्यम्परतया अपि । अन्या इति सातिशयकम्मा (?) पारतन्त्र्यपरतया अपि । अज्ञानीयेस्मपि तावत मां अप्राम्भीर्यवद्धित्वमपैव संवरीतुं पारितम् । सीदन्त्यीमात्यां गृहकर्मसंपादनं कास्मापपि कर्तुं न प्रभवति । गृहकर्मयोगे च स्फुर्तं कलमात्यानीति अस्माद्वाच्यादेव सातिशयमदनपरतन्त्रताप्रतीतिरित्यर्थः । पराङ्गत्वेनेति । परस्परसमवेतवामासभाव प्रथममापोद्यमपर्वविभावानुभावस्वापस्य भावस्य वाक्यार्थीभूतस्य वर्णे रसादिवस्त- स्मपरस्य ध्याप्यं तस्य मावाङ्गत्वम् । तेनेति रसेन । उत्कर्षीति । रसनां मेखलां स मोपयसरे कर्ण कर्षतीति । शृङ्गार इति । समरभुवि पतितकरामवोक्नेन प्राप्तभर्त मोपरतमन्तः स्मर्यमाणः इदानीं विभावतया पत्र सोकविभावतां प्रतिपद्यते अत करुणस्याङ्गतां याति । यथा च—'तव प्रतपनमूर्धानमतन्त्ररपपरम्भकेतनपुरःस्र-

---

१ 'पाणीरकुडोड्डीणसउणिकोलाहलं सुणन्तीए ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥' इति च्छाया

२. 'व्यङ्ग्यात्' इति काव्यप्रकाशोपलम्भेन परं प्रतीयते

---

१ प्रसम्भिनी' स्यात्, २ 'स्थायिभावरूपो' स्यात्, ३ 'मपि न तावत्' स्यात्, ४ 'अत्र तेनेति । रसनोत्कर्षीति' स्यात्,

यथा च—

'अभिमरतिमलसहृदयं मलय मूर्छा तमः शरीरसादम् ।
मरण अम्बुदभुजगजं प्रसह्य कुरुते विष वियोगिनीनाम् ॥'

अत्र हालाहलं वस्तु व्यङ्ग्यं भुजगरूपणस्य वाच्यस्याङ्गम् ।

क्वचिदस्फुटत्वेन यथा—

'अहम उज्जुअरूआ तस्स वि उम्मन्थराइं पिम्माइं ।
सहि आयणो अ निउणो अलाहि किं पायराएण ॥'

अत्र स मां पुरुषायितेऽर्थयते, अहं च निषेद्धुं न शक्ता, ततः सख्यः पादमुद्रया तर्कयित्वा मामहासिषुरिति व्यङ्ग्यमस्फुटम् ।

क्वचिदतिस्फुटत्वेन यथा—

'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥'

अत्रायत्नेन शिक्षादानलक्षणं वस्तु व्यङ्ग्यमतिस्फुटत्वेन प्रतीयमानमप्यग्राम्यमेव कामिनीकुचकलशवद्गूढं चमत्करोति नातिगूढम् ।

---

इन्द्रियाणामल्पं सामर्थ्यम् । मूर्छा मनस इन्द्रियाणां च शक्तिनिरोधः । तमः सर्वे च (ऽ)भवति इन्द्रियाणामशक्तिः । मरणमपि प्राणव्यापारोपरतिरिव पूर्ववदेव च पा- षण्डापवर्गता मरणशब्देनात्र विवक्षिता । विषमिति जलं गरलं च ॥ गूढ मिति । यथा—'मुग्धे विकसितस्मितं वलितवक्रिम प्रेक्षितं समुच्छ्वलितविभ्रमा गति रपास्तसंस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमो द्गमो मोदते ॥' अत्र विकसितशब्देन वाचितस्याप्रकाशस्य मुख्यार्थेन सम्यगपरसर परिच्छेदस्यात् स्मितं लक्षयता हृदयसुरभित्वमुमायापास्तजननिःसरणमत्वादिधर्मसहस्रं ध्वन्यते । वलितशब्देन निवेदने वक्रिमणि असंभवत्स्वरूपार्थतयेन किङ्करत्व स्मृत्युपेक्षितविचारत्वाद्भिमानं लक्षयता तापकत्वात्तदनुसरणं न कदाचिदप्यत्र स्मरणः स्वेच्छया यत्र कुत्रचिद्विचरणमित्यादि ध्वन्यते । समुच्छ्वलितशब्देनानुपप द्यमानमस्तोर्ध्वतस्थमानसमस्तार्थेनाकस्मादुत्कर्षोर्मिमयमधारस्याद्भिमर्म लक्षयता प्री

---

१ अस्य संस्कृतं बहुधा पद्यमास्मत्कृत्स्नम् लिखितम्.

---

१ सर्वे स्यात्. २ मरणं मृतिः स्यात्.

संदिग्धप्राधान्येन यथा—

'महिलासहस्सभरिए तुह हिअए सुहअ सा अमायन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तणुअं पि तणुएइ ॥'[1]

अत्र अङ्गं तनुकमपि तनूकरोतीति किं वाच्यम्, किं वा तनूभावप्रकर्षाधिरोहेण यावदत्याहितं नाप्नोति तावदुज्झितासौ दौर्बल्यं सानुनीयतामिति व्यङ्ग्यं प्रधानमिति संदिग्धम् ।

तुल्यप्राधान्ये यथा—'ब्राह्मणातिक्रम–' इति । अत्र जामदग्न्यः सर्वेषां क्षत्राणामिव रक्षसां क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

यथा वा—

'पङ्क्तौ विशन्तु गणिताः प्रतिलोमवृत्त्या
पूर्वे भवेयुरियताप्यथ वा त्रपेरन् ।
सन्तोऽप्यसन्त इव चेत्प्रतिभान्ति भानो
र्भासावृते नभसि शीतमयूखमुख्याः ॥'

अत्र प्राकरणिकाप्राकरणिकयोः समं प्राधान्यम् ।

यथा वा—

'मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।

[illegible]

---

१ महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती ।
अङ्गं अनन्यकर्मा तनुकमपि तनयति ॥ इति च्छाया

सचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥'

अत्र मम आत्मेवेत्यादि व्यङ्ग्यं वाच्यतुल्यभावेन स्थितम् । इति त्रयो मध्यमकाव्यभेदा न स्पष्टौ ।

अव्यङ्ग्यमवरम् ।

शब्दार्थवैचित्र्यमात्रं व्यङ्ग्यरहितमवरं काव्यम् ।

यथा—

'अघौघं नो नृसिंहस्य घनाघनघनध्वनि ।
हताद्रुरुघुराघोष सुदीर्घो घोरघर्घर ॥'

यथा वा—

'ते दृष्टिमात्रपतिता अपि नात्र कस्य
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥'

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानम्, तथापि स्फुटस्य रसस्यानुपलम्भाद्व्यङ्ग्यमेतत्काव्यमुक्तम् ॥

इत्याचार्यहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासन
वृत्तौ रसभावतदाभासध्वनिभेदप्रतिपादनो द्वितीयोऽध्यायः ।

---

रसादीनस्वादि लभ्यते । मोदयेताम्येन चाचितदर्पस्मच्छक्मार्पेनार्पितदर्पस्य सारसा-
ऽधर्मं भवता उच्यते लभ्यते । न त्वप्राचिदिति । यदाह मम्मटः—
अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् । संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदा स्मृता ॥[1] इति ॥ ननु अत्र रसादीनामविषय
एव काव्यप्रकारोऽपि न भवत्येव । यस्माद्वस्तुसंस्पर्शिता काव्यस्य तथोपपद्येत । वस्तु
च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य भावस्य वा प्रतिपद्यते । अन्ततो विभाव
त्वेन चित्तवृत्तिविशेषा हि रसादयः । न च तदस्ति वस्तु यत् किंचिच्चित्तवृत्तिविशेषमु
पजनयति । तदनुत्पादने वा कविविषयतैव तस्य न स्यादित्याशङ्क्याह—यद्यपीति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके द्वितीयोऽध्यायः ।

---

१ 'एवं भाग' काव्यप्रकाशे

संदिग्धप्राधान्येन यथा—

'महिलासहस्सभरिए तुह हिअए सुहय सा अमायन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तनुअं पि तणुएइ ॥'[1]

अत्र अङ्गं तनुकमपि तनूकरोतीति किं वाच्यम्, किं वा तनूभावप्रकर्षाधिरोहेण यावत्त्वद्धृदिव नाप्नोति तावदुज्झितत्वा दौर्बल्यं तानुनीयतामिति व्यङ्ग्यं प्रधानमिति संदिग्धम् ।

तुल्यप्राधान्ये यथा—'ब्राह्मणातिक्रम—' इति । अत्र जामदग्न्यः सर्वेषां क्षत्राणामिव रक्षसां क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

यथा वा—

'पङ्क्तौ विशन्तु गणिताः प्रतिलोमवृत्त्या
पूर्वे भवेयुरिति ताभ्यथ वा त्रपेरन् ।
सन्तोऽप्यसन्त इव चेत्प्रतिभान्ति भानो
र्भासावृते नभसि शीतमयूखमुख्याः ॥'

अत्र प्राकरणिकाप्राकरणिकयोः समं प्राधान्यम् ।

यथा वा—

'मथ्नामि कौरवशतं समरे न कोपात्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।

---

धैर्यवत्तरत्वबाह्म सर्वजनाभिनन्दनीयत्वानि व्यज्यते । अपारत्वधर्म्येणामूर्त्यपो मत्स्यादि तमर्योदयमसंभवदपेक्ष्यस्यकार्येण सत्यनिर्दिष्टिधारणस्यसंसात्मं व्यज्यता पुनरबी-धरानपमेकमादि व्यज्यते । मुकुलितपाद्येमासंभवत्कोरकारमत्वार्थेनाभिनयोद्धेदधारस्य-स्तनयुगं व्यञ्जयता स्तरपीनत्वरामणीयत्वरमनीयकस्यास्तत्वमरोमवदमुदीपकत्वमिति व्यज्यते । स्फुरदधर्म्येण भाषितगुर्वीम्मुखमत्वार्थेनोचैस्त्वतयास्यादीयमानमनार्दं व्य-यतोपचितत्वस्तूरपीनत्वमपोमभयेतमत्वादि व्यज्यते । स्नुपवनेऽत्र पत्तुपचारत्वात् स्नुधर्म्येण भाषितत्वार्थेन पारिमाण्यस्यादिधारस्यादूयनं व्यञ्जयता अमनीयचितुत्वादि व्यज्यते । तद्गमधर्म्येण भाषितोपचारमकत्वार्थेनाभिनयोद्धेदधारस्यात्वनिमार्य व्यञ्जयता

---

१ महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती ।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥' इति च्छाया.

सञ्चूर्णयामि गदया न सुयोधनोरू
संधिं करोतु भवतां नृपतिः पणेन ॥'

अत्र ममान्येनेत्यादि व्यङ्ग्यं वाच्यतुल्यभावेन स्थितम् । इति त्रयो मध्यमकाव्यभेदा न स्पष्टौ ।

अव्यङ्ग्यमवरम् ।

शब्दार्थवैचित्र्यमात्रं व्यङ्ग्यरहितमवरं काव्यम् ।

यथा—

'अघौघं नो नृसिंहस्य घनाघनघनध्वनि ।
हतादुरुगुरावोघ सुदीर्घो घोरघर्घर ॥'

यथा वा—

'ते दृष्टिमात्रपतिता अपि नात्र कस्य
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥'

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानम्, तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यमुक्तम् ॥

इत्याचार्यहेमचन्द्रविरचितायामलंकारचूडामणिनाम्न्यां स्वोपज्ञकाव्यानुशासन-
वृत्तौ रसभावतदाभासव्यङ्ग्यप्रतिपादनो द्वितीयोऽध्यायः ।

---

तादर्थ्यमित्यादि व्याख्याते । सोदरेभ्येन वाचितदर्पास्मकमुख्यार्थेनार्थविपर्ययत्वसारस्या-
द्भुतं यथा व्यङ्ग्यस्य तादर्थ्यादि व्यक्तं न स्पष्टावेति । यथाह मम्मटः—
'अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् । संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ॥' इति ॥ ननु यत्र रसादीनामविषयः
स व्यङ्ग्यप्रकारोऽपि न भवत्येव । यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते । वस्तु
च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य भावस्याङ्गं प्रतिपद्यते । अन्ततो विभाव-
त्वेन चित्तवृत्तिविशेषा हि रसादयः । न च तदस्ति वस्तु यन्न किंचिच्चित्तवृत्तिविशेषमु-
पजनयति । तदनुत्पादने वा कविविषयतैव तस्य न स्यादित्याशङ्क्याह—यद्यपीति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके द्वितीयोऽध्यायः ।

---

१ 'मम भाव' काव्यप्रकाशे.

तृतीयोऽध्यायः।

'अदोषौ शब्दार्थौ काव्यम्' इत्युक्तम्। तत्र दोषाणां रसापकर्षहेतुत्वं सामान्यलक्षणमुक्तम्। विशेषलक्षणमाह—

**रसादेः स्वशब्दोक्तिः क्वचित्संचारिवर्जं दोषः।**

रसस्थायिव्यभिचारिणां स्वशब्देन वाच्यत्वं दोषः। संचारिणस्तु क्वचित्स्वशब्दाभिधानेऽपि न दोषः।

तत्र रसस्य स्वशब्देन शृङ्गारादिना वाभिधानं यथा—

'शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसात्मकः पशुपतिर्भूयात्सतां भूतये॥'

---

वाच्यत्वमिति। वाच्यत्वं हि रसादीनां स्वशब्दनिवेदितत्वेन वा स्याद्विभावादिप्रतिपादनमुखेन वा। पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः। न च सर्वत्र तेषां स्वशब्दनिवेदितत्वं यथा— 'यद्विश्रम्य–' इति। अत्रानुभावविभावाभिधानान्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वणागोचरोऽर्थो रसात्माभिव्यक्तिरस्तु नियतविषयत्वेनाक्रमसमसमुचितचित्तवृत्तिस्वशब्दाभावेऽपि स्फुरत्येव॥ न च केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति। यथा—'शृङ्गारहास्यकरुणा–' इत्यादौ। तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्। न त्वभिधेयत्वं कथंचिदिति। स्वशब्दोक्तिर्दोष इत्यर्थः। द्वितीयस्तु पक्षोऽस्माकमप्यभिमत एव। एतेन— 'रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम्। स्वशब्दस्थायिसंचारिविभावाभिनयास्पदम्॥' इत्येवमाद्यलंकारावसरे भट्टोद्भटेन 'पञ्चरूपा रसाः' इत्युपक्रम्य

---

१ 'यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत्। दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः कृष्णे यूनि सवाश्रमासु [illegible] व्यनक्ति स्थितिम्॥' इति संपूर्णश्लोके महेश्वराख्य [illegible] उदाहृतः। २. 'सो रसमयः' लोचने। ३ अस्य सूत्रप्रतीकं 'दोषः इति।' इति मुद्रितं भवेत्.

स्थायिभावानां यथा—

'सप्रहारे प्रहरणैः प्रहाराणां परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥'

अत्रोत्साहस्य स्वामिनः ।

यत्रापि स्वशब्देन निवेदितत्वमस्ति तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैव रसादीनां प्रतीतिः । स्वशब्देन सा केवलमनूद्यते । यथा— 'याते द्वारवतीम्—' इत्यादि । अत्र विभावानुभावबलादुत्कण्ठा प्रतीयत एव । सोत्कण्ठं शब्दः केवलं सिद्धं साधयति । उत्कमित्यनेन तूक्तानुभावाकर्षणं कर्तुं सोत्कण्ठशब्दः प्रयुक्त इत्यनुवादोऽपि नानर्थकः ।

व्यभिचारिणां यथा—

'सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥'

अत्र व्रीडादीनाम् ।

'कश्चित्सञ्चारिधर्मः' इति वचनात्कश्चिन्न दोषः ।

यथा—

'औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥'

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् । अत एव 'दूरादुत्सुकम्—' इत्यादौ व्रीडाद्यनुभावानां विवलितत्वादीनामिवौत्सुक्यानु-

सलज्जा' प्रहारवर्षोचिता' प्रहारादय' यथा' इत्युक्तम् तत्प्रतिविहितम् ॥ भाव

१ 'ठण' 'भण' वा काव्यप्रकाशे

भावस्य सहसा प्रसरणादिरूपस्य यथा प्रतिपत्तिकारित्वाभावादसुन्दरमिति कृतम्।

अबाध्यत्वे भाश्रयैक्ये नैरन्तर्येऽनङ्गत्वे च विभावादिप्रातिकूल्यम्।

अबाध्यत्वादिषु सत्सु विभावादिप्रातिकूल्यं रसादेर्दोषः।

यथा—

'प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव मे सिञ्चतु वचः।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः॥'

अत्र कालहरिणस्यापक्व शीघ्रमेव प्रयाति न च पुनरागच्छतीत्यादि वैराग्यकथामि प्रियानुनयनं निर्विसेव कस्यचिदिति शृङ्गारप्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावो निबद्ध इति विभावप्रातिकूल्यम्। तत्प्रकाशितो निर्वेदश्च व्यवते इति व्यभिचारिप्रातिकूल्योदाहरणमप्येतत्।

एवं शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोरप्युदाहार्यम्।

यथा च—

'निहुयरमणम्मि लोअणवहम्मि पडिए गुरूणमज्झम्मि।
सयलपरिहारहियया वणगमणं मेव महइ बहू॥'

अत्र सकलपरिहारवनगमने शान्तानुभावौ। इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेन्न दोषः।

अबाध्यत्वे इति। अबाध्यत्वमशक्याभिभवत्वं तदभावेन केवलं न दोषो यावत्प्रकृतस्य रसस्य परिपोषः। यथा—'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' इत्यादि। अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृति

१–२. प्रातिकूल्यं स्यात्. ३. निर्विण्ण' स्यात्. ४–५. प्रातिकूल्यं' स्यात्.
६. निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः॥' इति च्छाया.

चिन्तने परस्परबाध्यबाधकभावेन भवन्ती चिन्तायामेव पर्यवसन्ती परमास्वादस्थानम् ।

'सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ।
किं तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥'

अत्र स्वाद्यमर्थं बाध्यत्वेनैवोक्तम्, द्वितीयं तु प्रसिद्धास्थिरस्यापाङ्गभङ्गोपमानेन जीवितस्यास्थिरत्वं प्रतिपादयद्बाधकत्वेनोपात्तं शान्तमेव पुष्णाति । न पुनः शृङ्गारस्यात्र प्रतीतिः, तदङ्गस्याप्रतिपत्तेः ।

ध्वनिकारस्तु—

'विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव च ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥'

इति विरोधपरिहारमाह ॥

आश्रयैक्य इति । एकाश्रयत्वे दोषः । भिन्नाश्रयत्वे तु वीरभयानकयोः परस्परं विरुद्धयोरपि नायकप्रतिनायकगतत्वेन निवेशितयोर्न दोषः ।

यथा अर्जुनचरिते—

'समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनो
महानुपप्लवोऽभवत्पुरे पुरंदरद्विषाम् ।
भयेन तस्य तु ध्वनेर्विलुप्तमूलबन्धनं
मनोऽपदैत्ययोषितां कपीबभूव जीवितम् ॥'

इत्यादि ॥

नैरन्तर्य इति । एकाश्रयत्वेऽपि शान्तशृङ्गारयोः परस्परविरुद्धयोर्निरन्तरत्वे दोषः, न तु रसान्तरान्तरितयोः ।

---

धैर्य इति । धर्मोपायत्वस्यैव प्रस्तुतत्वात् भवति न प्रतीयमानस्यैवार्थः ॥ मरणमिति । प्राणत्यागपर्यन्ततामिच्छ पूर्वकिंचित् पात्रस्यावस्थारूपता मरणशब्देनात्र विवक्षिता ॥

---

१ 'परस्पर' कोषने. २ 'प्रमूर्छो भवन्ती' कोषमे. ३ 'रामा' ध्वन्यालोककाव्यप्रकाशयोः. ४ 'प्रसिद्धास्थिरापाङ्ग' स्यात्.

---

१ अस्य मूलं कुत्रित्यं भवेत्, अत्र पाठस्य प्रमादपतितत्वं भवेत्.

यथा नागानन्दे शान्तरसस्य—'अहो गीतमहो वादितम्' इत्यद्भुतमन्तरे निवेश्य जीमूतवाहनस्य मलयवतीं प्रति शृङ्गारो निबद्धः ।

न केवलं प्रबन्धे, यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधानाद्विरोधो निवर्तते ।

यथा—

'भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान्सुराङ्गनाश्लिष्टभुजान्तराभ ॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकसुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानाँल्ललनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन् ॥'

अत्र बीभत्सशृङ्गारयोरन्तरा वीररसनिवेशान्न विरोधः । वीराः स्वदेहानित्यादिना उत्साहावगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया प्रतीतिरिति मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायिकत्वम् । स्वदेहानित्यनेन नैकत्वाभिमानादाश्रयैक्यम् ।

अनङ्गत्वमिति । द्वयोर्विरुद्धयोरङ्गित्वे दोषः, नाङ्गभावप्राप्तौ ।

सा हि नैसर्गिकी, समारोपकृता वा ।

तत्र येषां नैसर्गिकी तेषां तावदुक्ताविरोध एव । यथा विप्रलम्भे तदङ्गानां व्याध्यादीनाम् । ते हि निरपेक्षभावतया सापेक्षभावविरोधिन्यपि करुणे सर्वथाङ्गत्वेन दृष्टा । यथा—'भ्रमिमरतिमलसहृदयताम्' इत्यादि ।

---

शान्तरसस्येति । 'रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति स्थितौ । इत्थं निर्न्द्यमपीदमिन्द्रियवशं प्रीत्यै भवे-द्यौवनं भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे ॥' इत्यादिना उपक्षेपात्प्रभृति परार्थसंपादनपरिपोषितशमस्थायिनिर्वहणपर्यन्तं प्रतिपादितस्य ॥ एकत्वाभिमानादिति ।

---

१ 'वादित्रम्' काव्यप्रकाशे. २. 'वक्ता' इति लघ्वालोकलोचने पाठः. ३ 'अवगत्यै वेति' स्यात्. ४ 'दृष्टाः । यथा' स्यात्.

---

१ 'निन्द्य' स्यात्.

समारोपितायामप्यदोषो यथा—'कोपात्कोमललोलबाहुलतिका–' इत्यादि । अत्र बद्ध्वा हन्यत इति च रौद्रानुभावानां रूपकबलादारोपितानां तदनिर्वाहादेवाङ्गत्वम् । इयं चाङ्गभावप्राप्तिरन्या ।

यदाधिकारिकत्वात्प्रधाने एकस्मिन्काव्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोरङ्गभावस्तत्रापि न दोषः ।

यथा—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥'

अत्र त्रिपुररिपुप्रभावातिशयवर्णने प्रकृते करुण इव शृङ्गारोऽप्यङ्गमिति द्वयोर्न विरोधः ॥

पराङ्गत्वेऽपि कथं विरोधिनोर्विरोधनिवृत्तिरिति चेत्, उच्यते । विधौ विरुद्धसमावेशस्य दुष्टत्वम्, नानुवादे ।

---

अथवा विभिन्नविषयत्वात्र विरोधः स्यादित्यर्थः ॥ ननु वीरे एवात्र रसे न शृङ्गारो न बीभत्सः किं तु रसिकद्वन्द्वी वीरं प्रति व्यभिचारीभूते । सत्यमेवम् । तथापि प्रस्तोतव्ये तावत्तत्परस्त्रिजुगुप्सयोरपि न विरोधः । करुण इवेति । तथा हि—इ[illegible]वासवसय यो: क्षेपो विपूर्णं अयोग्यकमिति करुणोत्थे तथ[illegible]प्रस्तुत तु च प्रमस्य परम्परानाथत्वं क्षेपो नायिकायान्तरवैयर्थ्यसमुत्पेक्षोपनिमित्तो विप्रलम्भरसं सूचकः । व्याप्यव्यापकभावस्य यो: प्रथमाभिहतत्वं शाकमिति तु चमत्कृतमपूर्णं च नायिकापरस्य पति करुणरसपरिपोषकम् । तदावपूर्वेण कामदेवार्पितव्यवहारक्रमिको यस्य प्रथममभिहतवयवस्थानमवकाश(?)चरणनिमित्तं विप्रलम्भरसपरिपोषकम् । एतच्चेतत्र प्रवर्तमानस्य यो कर्पटवत्पात्तदिवसावसेतुक संभ्रमकटुण्ठितमिव प्रक्षेपोपादानमभिमतकमिह करुणस्य प्रपञ्चने तात्पर्यपूर्वेष्वन्तरितवाक्यिनाविक-

---

१ इत. प्रभृति 'विरोधाभावात्' इत्यन्तो ग्रन्थः पुस्तकान्तरादानमेव दृश्यते विस्तारभयाच्च यथार्थमस्फुटार्थो विचार्यः. २ इत्वम् । स्यात्

नास्तीति शक्यं वक्तुम्। तेषां वाक्यार्थत्वेनाभ्युपगमात्। वाक्यार्थस्य च यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसानामपि भवतः।

अथ वा त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्य तु शृङ्गारः। तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव।

अथ वा प्राग्यथा कामुक आचरति स्म, तथा शराग्निरिति स्मर्यमाण-शृङ्गारेणेदानीं विध्वस्ततया शोकविभावतां प्रतिपद्यमानेन पोषितः करुणो रसः प्रधानमेव वाक्यार्थमभिधत्ते। यतः प्रकृतिरमणीयाः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः स्मर्यमाणैर्विलासैरधिकतरं शोकावेगमुपजनयन्ति।

यथा—

'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।'

इत्र हि भूरिश्रवसः समरभुवि पतितं बाहुं दृष्ट्वा तत्कान्तानामनुशोचनम्। तथात्रापि त्रिपुरयुवतीनां शांभवः शराग्निरार्द्रापराधः कामी यथा व्यवहरति स्म तथा व्यवहृतवानित्यनेनापि प्रकारेणास्त्येवाविरोधित्वम्।

---

एवेति भावः। मुख्यतया च रस एव काव्यवाक्यार्थात्मा। तेन यत्रामुख्यतया योऽर्थस्तत्रानूद्यमानत्वं रसस्यापि मुख्यम्। येति वानूद्यमानविभावादिसमाक्षिप्तत्वात् पक्षानूद्यमानता। तदाह—वाक्यार्थस्य चेति। अस्त्येवाविरोधित्वमिति। अत्राय भावः—पूर्वं पद्यद्वये विप्रलम्भकरुणयोरन्यत्राङ्गभावगमनाभिर्विरोधित्वमुक्तम्। अधुना तु स विप्रलम्भः करुणमेवाङ्गतां प्रतिपन्नो न विरोधीति। तथा हि—कामिजनाचारभाविता ईर्ष्याविप्रलम्भवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया शोकविभावतां प्रकर्षं प्रतिपद्यते इति वाक्यार्थीभूतस्य करुणस्य विरोधिनापि शृङ्गारेण परिपोष एव विधीयते। परन्तु शृङ्गारपोषितेन करुणेनात्र मुख्य एवार्थ उपोद्बल्यते। तथा हि—पुनः [illegible] स्मर प्रभावं प्रतिपद्यते। प्रधानस्योपस्कारे हि तथाभूत निष

---

१ 'वाक्यार्थस्य वाच्यस्य च' ध्वन्यालोके २. 'स्तनान्तिकः शनकैः' ध्वन्यालोके.

---

१ 'तेन मुख्यतया च स योऽर्थ' ध्वन्यालोकलोचने २. परिता' स्मर.

एवं च—

'दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥'

इत्यादावपि शृङ्गारः शान्तस्याङ्गम् । तथा हि—यथा कश्चिन्मनोरथशतप्रार्थितप्रेयसीसंभोगावसरे जातपुलकस्तथा त्वं परार्थसंपादनाय सशरीरदान इति शृङ्गारेण शान्त एव पोष्यते इति ।

यत्र तु न पोष्यते तत्रानङ्गत्वाद्दोष एव ।

यथा—

'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥'

अत्र प्रकृतस्य करुणरसस्य विरुद्धशृङ्गारो न पोषकः ।

विभावानुभावक्लेशव्यक्तिः पुनःपुनर्दीप्तिरकाण्डप्रथनच्छेदावङ्गातिविस्तराङ्ग्यननुसंधानानङ्गाभिधानप्रकृतिव्यत्ययाश्च ।

एते चाष्टौ रसस्य दोषाः ।

संते च इति । दन्तक्षतानीति । बोधिसत्त्वस्य सिंहीं क्षुत्क्षामतनुं प्रति निजं शरीरं वितीर्णवतः केनचिदाढ्येन क्रियते । प्रोद्भूत सान्द्रः पुलकः परार्थसंपत्तिजन्मानन्दभरेण यत्र । रक्ते रुधिरे मनोऽभिलाषो यस्याः । अनुरक्तं च मनो यस्याः । पुरःस्थयोद्दीपित मदनवेदनयेति विरोधः । जातस्पृहैरिति । एवमपि यदि कश्चिदेवं कारुणिकपदवीमधिरोक्ष्यामस्तदा सफलतो सुगतो भविष्याम इति मनोराज्यपुष्टैः । न पोषक इति । अपि त्वङ्गित्वेन प्रतिभासते । ननु च नैकतात्पर्येणैतेषां विरुद्धानामविरुद्धानां च व्यङ्ग्यभूतत्वेनोपादानं तत्र त्वङ्गत्वेनाविरोधः । यत्र तु समप्राधान्येना-

१ 'प्रोद्भूत' विवेके लोचने च

१ 'बोधिसत्त्वस्य' लोचने २ 'प्रोद्भिन्न' मूले ध्वन्यालोके च. ३ 'संपत्तिजन्मानन्दभरेण' ध्वन्यालोकलोचने ४ तारके भवत शरीरे इत्यपि दृश्यते, ५. 'पुरःस्थयोद्दीपितमदनवेदनाये' ध्वन्यालोकलोचने

लीलाशिरोंशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥'

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इति क्लेशव्यक्तिः ।

पुनःपुनर्दीप्तिर्यथा कुमारसंभवे रतिप्रलापेषु । उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनःपुनः परामृश्यमाणः परिम्लानकुसुमकल्पः कल्पते इति ।

अकाण्डे प्रथनं यथा वेणीसंहारे द्वितीयेऽङ्के । दुर्योधनस्य धीरोदात्तप्रकृतेरपि तथाभूतभीष्मप्रमुखमहावीरस्वक्षक्षयकारिणि समरसंरम्भे प्रवृत्ते शृङ्गारवर्णने[1] ।

अकाण्डच्छेदो यथा वत्सराजस्य रत्नावल्यां चतुर्थेऽङ्के । रत्नावलीनाम

---

करुणो वीरमेव[1] पुष्णाति । एवम्—'मात्सर्य-' इत्यादावपि चिरप्रवृत्तिमत्ता रतिप्रसा-
या दैवतोपासनाद्यमैकपरत्वम् 'कार्यो समर्पयितुम्-' इत्यनेन प्रकाशितम् । 'इयं
सा लोकपरी' इत्यादावपि रावणस्य प्रतिपक्षनायकतया विभावान्तरेण भावप्रधानतया
न रौद्रस्याभिव्यक्तिविच्छेदविभावमित्रकहेतुतया रतिक्रोधयोरप्रधानं रौद्रपरमेव । 'कर्णा-
कर्णितमात्स्यमहिषरा-' इत्यादौ हास्यरसैकपरत्वम् । 'एकं ध्यानमिमीलनान्मुकुलि-
तम्-' इत्यादौ तु धर्मोर्मिभान्तरैरनाक्षिप्ततया समस्तस्यापि योगाख्यान्तरस्यैवैक्य-
व्यप्रतिपादनेन धर्मैकपरत्वेन समाधिसमये' इत्यनेन स्फुटीकृतम् । 'देवेनमा-' इ-
त्यादौ तु समस्तमपि वाक्यं भविष्यद्विप्रलम्भविषयमिति न कश्चिद्वैकल्यदोषः । तदे-
वमुक्तप्रकारेण रसाद्युपनिबन्धे सर्वत्राविरोध इति ॥ अनुभावापर्यवसायिन इति ।
शृङ्गारी चेत्[2] संभवन्ति तथाविधानुभावाः । शान्तश्चेत्, न संभवति । तं प्रतिपन्नस्यैव
तथाविधानां विभावानामिति शृङ्गारित्वनिश्चयाभावे सत्यपि तथाविधेषु श्रीकान्तयोऽनु-
भावाः क्लेशेन व्यज्यन्ते इति ॥ पुनःपुनः परामृश्यमाण[3] इति । तथा हि—वि-
भावानुभावसामग्रीपरिपुष्टिविषयस्यापि रसस्य चिरसंभोगपरस्य पुनरुन्मीलनं म्लान-
कुसुमपरिमर्दनवदवगुण्ठनमेव । वास्तवे हि रसे[4] तथाविधानां तत्परचर्वणानाक्षिपत्वम्

---

१ 'शृङ्गारकथयामवतारवर्णने' व्याख्याभेदे.

---

१ 'एवेत्य' स्यात्. २ 'शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत् । स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥' इति व्याख्याभेदसंवादात् 'तत्रापि' स्यात्. ३ 'परामृश्यमाना' मूले व्याख्याभेदे च. ४ 'रसता' स्यात्.

भेयमप्यगृह्णतो विजयवर्मवृत्तान्ताकर्णने। यथा वा वीरचरिते द्वितीयेऽङ्के। राघवभार्गवयोर्धीरोद्धतवीररसे 'कङ्कणमोचनाय गच्छामि—' इति राघवस्योक्तौ।

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं यथा—हयग्रीववधे हयग्रीवस्य। यथा वा विप्रलम्भशृङ्गारे नायकस्य कस्यचिद्वर्णयितुमनुक्रान्ते कवेर्यमकाद्यलङ्कारनिबन्धरसिकतया महाप्रबन्धेन समुद्रादेः। तथा हि हरिविजये ईर्ष्याकुपितसत्यभामानुनयनप्रवृत्तस्य हरे पारिजातहरणव्यापारेणोपक्रान्तविप्रलम्भस्य वर्णनमप्रस्तावे गलितकनिबन्धनरसिकतया कविना समुद्रवर्णनमन्तरा गडुस्थानीयं विस्तृतम्। तथा कादम्बर्याम् 'रूपविलास—' इत्यादिना महाविप्रलम्भबीजेऽप्युपक्षिप्ते तदनुपयोगिनीष्वटवीशबरेश्वराश्रमगुनिनगरीनृपादिवर्णनास्वतिप्रसङ्गाभिनिवेशः। तथा हर्षचरिते 'जयति ज्वलत्—' इत्यादिना हर्षोत्कर्षवह्निजयबीजे बाणान्वयवर्णनम्, तत्रापि चानन्वितप्राय एव सारस्वतोत्पत्तिपर्यन्तो महान्ग्रन्थसंदर्भः। शिशुपालवधादौ चावितमहत्तमशिशुनिधिविजयबीजोपक्षेपावगाढव्यासिमद्वीररसानुबन्धेऽपि तदसङ्गतशृङ्गाराङ्गभूतषड्ऋतुपवनविहारपुष्पावचायमज्जनादिवर्णनास्वत्यासक्तिः। तद्विस्तृतम्। अप्रस्तुतवस्तुविस्तृतिः प्रस्तुतरसप्रतीतिव्यवधानकारिण्यपि महाकविप्रबन्धेषु भूयसा दृश्यते इति तस्य त एव विदन्ति।

अङ्गिनः प्रधानस्याननुसंधानं यथा—रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमनेन सागरिकाया विस्मृतिः। अनुसंधिर्हि सर्वस्वं सहृदयतामाः। यथा तापसवत्सराजे षट्स्वप्यङ्केषु वासवदत्ताविषयप्रेमसम्बन्धकथावसादाद्दृश्यमानविच्छेदोऽप्यनुसंहितः।

---

स्यैव। तथा च तस्यां दशायां महाकवीनामेको द्विधा वा श्लोको निर्गच्छति। अत एव तापसवत्सराजे वासवदत्ताकरुणरसे सर्वत्रैव द्वितीयोऽङ्कः कविना निबद्ध। पट्स्वङ्केष्विति। तथा हि प्रथमे तावदङ्के—'वत्सेभ्युपिलोकनेन दिवसो नीतः' प्रदोषे

1 'वीरचरिते' क्वचित्पाठः　2. गमने सा' क प्र　3 प्रेमबन्धा व्यत्यासे कथोपचे

शृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ता उत्तमाधममध्यमा च ।

तत्र रतिहासशोकाद्भुतानि मानुषोत्तमप्रकृतिवद्दिव्यादिष्वपि । किं तु रतिः संभोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया । तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम् ।

यत्तु कुमारसंभवे हरगौरीसंभोगवर्णनं तत्कविशक्तितिरस्कृतत्वाद्ग्राम्यत्वेन न दोषत्वेन प्रतिभासते ।

---

अथप्रकृते यथायथापि सविभ्रमं कथितपूर्वनैर्मथो धीयते ४' धीरोदात्तेति । धर्मयुद्धवीरप्रधानो धीरोदात्तः । धीरोदात्तादिषु त्रिष्वपि यथाक्रमं रौद्रशृङ्गारशान्त-रसानां नियतरसः प्राधान्येऽपि यथासंभावितमुत्साहस्य वीररसप्राधान्यमपि प्रति-पत्तव्यम् । ततो वीररौद्रप्रधानो धीरोद्धतः । वीरशृङ्गारप्रधानो धीरललितः । तथा वीरशान्तप्रधानो धीरप्रशान्त इति । ननु यथोत्साहादिभाववर्णने कश्चिद्दिव्यमानुषा-दौचित्यपरीक्षा क्रियते । रत्यादौ तु किं तथा प्रयोजनम् । रत्यादि भारतवर्षोचितेनैव व्यवहारेण दिव्यानामपि वर्णनीयेति स्थितिः । तथा चाहुः—'कथाभारतमिदं वर्षे अन्येषु देवविहितेषु । एषा सर्वा भूमिः सुखसम्पन्ना कामनी यस्मात् ॥ उपवनवन-क्रीडाविहारमात्ररतिप्रमोदाः स्युः । तेषु च वर्षेषु सदा न तत्र दुःखं न वा शोकः ॥' इत्याद्युपपादयन्—मानुषोत्तमप्रकृतिवदिति । न चैवं दिव्यमौचित्यं शृङ्गारविषयं सम्यक्सिद्धम् । किं तर्हि भारतवर्षे यथोत्तमप्रायकेषु राजादिषु शृङ्गारोपनिब-न्धरूपा दिव्याश्रयोऽपि शोभते । न च राजादिषु प्रसिद्धग्राम्यसंभोगोपवर्णनं प्रसिद्धं नाटकादौ तथैव दिव्येषु तत्परिहर्तव्यम् । नाटकादेरभिनेयत्वादभिनयस्य संभोगशृ-ङ्गारविषयस्य सभ्यत्वात्तत्र परिहार इति चेत् । यत्तु यथाभिनयसंबन्धिविषयस्य सा तत्र वार्यते । तस्मादभिनेयार्थेऽनभिनेयार्थे च काव्ये यदुत्तमप्रकृते राजादेरुत्तमनायिकाभिः सह ग्राम्यसंभोगवर्णनं तदसभ्यं तथैव दिव्यादिविषयम् । न च संभोगस्य सुरतरूप एवैकः प्रकारो यावद्, अन्येऽपि परस्परप्रेमदर्शनादयः प्रभेदाः संभवन्ति । त एव चोत्तम-प्रकृतिविषये वर्णयितुमुचिताः । एवं हासादिष्वप्यौचित्यं बोध्यमिति । दिव्यादिषु रतेः संभोगविप्रलम्भोभयरूपाया वर्णनीयत्वेन सामान्येनाभिधाने उत्तमदेवताविषयत्वेनापि तथा प्रसक्तौ विशेषमाह—किं त्विति । संभोगः परस्परावलोकनालिङ्गनचुम्बनसंपर्क-आदि । स चासौ शृङ्गारश्च तद्रूपा । अनुचितमिति । जगत्पितरौ हि तत्र चमत्कारविघातः तत्रैव रसभङ्गम् । मातापित्रोरिव उत्तमदेवतासंभोगवर्णने न पितृसंभोग इव जगत्पितृसंभोगे कथमत्वयपगमात् इत्यर्थः । शक्तितिरस्कृतत्वा

क्रोधोऽपि भ्रुकुट्यादिविकारवर्जितः सद्यः फलदो निबद्धव्यः ।

यथा—

> 'क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
> तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥'

स्वर्गपातालगमनसमुद्रलङ्घनाद्युत्साहस्तु मानुषेभ्योऽन्येषु । मानुषेषु तु यावदवदानं प्रसिद्धम् उचितं वा, तावदेव वर्णनीयम् । अधिकं तु वर्ण्यमानमसत्यप्रतिभासेन 'नायकवद्वर्तितव्यं न प्रतिनायकवत्' इत्युपदेशे न पर्यवस्येत् । एवमुक्तानां प्रकृतीनामन्यथावर्णनं व्यत्ययः ।

तथा तत्रभवन् भगवन्निति उत्तमेन वाच्यम्, नाधमेन, मुनिप्रभृतौ, न राजादौ । भट्टारकेति न राजादौ । परमेश्वरेति न मुनिप्रभृतौ । प्रकृतिव्यत्ययापत्तेः ।

---

दिति । संभोगोऽपि यथा प्रतिभामयता कविना तथा वर्णितो यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति । यथा निर्व्याजपराक्रमस्य पुरुषस्याविषयोऽपि युध्यमानस्य तावत्तस्मिन्नवसरे साधुवादो वितीर्यते न तु पौर्वापर्यपरामर्शः । तथात्रापीति भावः । यदाह ध्वनिकारः—'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः । यस्त्वशक्तिकृतस्तस्य झटित्येवावभासते ॥' इति ॥ अन्येष्विति । दिव्यादिषु । तथा च नैषधमनुष्यस्य राजादेर्वर्णने सप्तार्णवलङ्घनादिलक्षणा व्यापारा उपनिबध्यमाना सौष्ठवभृतोऽपि नीरसा एव नियमेन भवन्ति ॥ ननु नागलोकगमनादय सातवाहनप्रभृतीनां श्रूयन्ते तल्लोकसामान्यप्रभावातिशयवर्णने किमनौचित्यम् सर्वोर्वीभरक्षमाणां क्षमाभुजामित्याशङ्क्याह—मानुषेष्विति । न खलु भूमः प्रभावातिशयवर्णनं न समुचितं राज्ञाम्, किं तु केवलं मनुष्याभयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यादिकमौचित्यं न योजनीयम् । दिव्यमानुष्यादौ तु तद्योजनमविरुद्धमेव । यथा पाण्डवकथानाम् । सातवाहनादिषु तु येषु यावदवदानं श्रूयते तावदेवोपनिबध्यमानमिति सर्वं ॥ अवदानमिति । सात्त्विकं कर्म ॥ अधिकं त्विति । अयमर्थः—यत्र च

---

१ 'स्त्वशक्तिकृतो दोषः स झटित्यव' ध्वन्यालोके. २. मानुषस्य' ध्वन्यालोके. ३ 'मस्ति' ध्वन्यालोके ४ 'सौष्ठवम्' ध्वन्यालोके ५. क्षमा' ध्वन्यालोके ६ मनुषि' ध्वन्यालोके ७ 'मानुष्य' ध्वन्यालोके ८ 'यत्र तु कथायामुत्पाद्योजन' ध्वन्यालोके ९. 'यावदवदानम्' ध्वन्यालोके

यदुक्तम्—

> 'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
> प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥'

इति ।

---

दृश्यते कन्यविधिः कवीनाम् ॥ हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव । यदुक्तं च— द्वादशमासः संवत्सरः पञ्चर्तवो हेमन्तशिशिरयोः समासेन । 'मरुबकदमनकपुन्नागपु ष्पकाद्यनुवृत्तिभि सुरभिः । रमणीयविभ्रमी किंचित्कम्पानुवृत्त्या च ॥' यथा—'गेहे पत्नीभूता वहति दमनको मञ्जरीकर्णपूरानुन्माद पामरीणां भवति मरुबकामोदिनि मधिभेति । सद्यो मन्यानुसारस्तुतसुरभिशिरा शीकरं साहकारं सर्पन्मन्मन्थरार्थे रमयति च रसो रेवतीकक्षमपि ॥ यथा— कुन्दे मन्दत्वमाप्ते मुकुलिनि विकचः कन्दरं किंकिराते रक्ताशोके सशोकं चिरमपि विकचे चम्पके कुड्मलाशाः । पान्थाः शैत्याज्जयेऽपि मरुबकदमनकामस्तीति प्रम्लानोत्कण्ठः षट्पदानां नवमनुपदमीक्षन्त्यद कर्पूरेण ॥' एवमन्यान्यनुवृत्तिः । 'शिरीषकिंकिरातपाटलि चम्पकपुष्पा वसन्तवो (?) ग्रीष्मे । तत्र च हरिणांशुमयं मरुबकमपि केचिदिच्छन्ति ॥ यथा—'अभिनवकुसुमसुरभिस्पर्शिकर्णे शिरीषं मरुबकपरिवारं पाटलादामकण्ठे । स तु सरसजलार्द्रोन्मीलितं सुन्दरीणां दिनपरिणतिजन्मा कोऽपि वेषश्चकास्ति ॥ 'एवमन्यदपि कविप्रसिद्धपारम्पर्यम् । यो मान्ती फलरसो कम्बर्वनाम्ना च पुष्पमुपयोगि । योद्धा वर्षितमेतत्समस्तमनुप योगि तथा ॥' 'चक्राभिसारे कुसुमं विमर्दं तदुत्तरे पाकफलं विधेयम् । तदमिमे प्रौढिमदं च वर्षे तदमिमे पाकपरिष्कृतं च ॥ 'द्रुमोद्भवानां विविधैव रसो पत्रीफलानां न महावनेहा । तेषां हिमाधावधिरेव कार्यं पुष्पे फले पाकविधौ च काल ॥' अन्तर्व्याजं बहिर्व्याजं चाभ्यन्तर्व्याजमेव च ॥' 'सर्वव्याजं बहुव्याजं निर्व्याजं च तथा फलम् ॥ अङ्कुरायन्तर्व्याजं तथा बहिर्व्याजमत्र मोचादि । आम्राद्युपमचव्याजं सर्वव्याजं च फक्कुमादि ॥' पनसादि बहु व्याज बीजकपिञ्छादि भवति निर्व्याजम् । एकैकस्यमनां योद्धा ज्ञातव्यं कविभिरिति भेद ॥' तदेवं देशकालौ व्याख्यातौ ॥ यथा देशपारिषद्यम् ॥ जातिः चातुर्वर्ण्यादिका सामान्यविषयिका वा । जातिग्रहणादिद्यानिततुल्यप्रभावयो लभ्यन्ते । येषः कृत्रिमं व्यवहारस्तेषा । जातिमद्याचाराज्ञरपचनादयो शेया । देशव्यवहारादीति देशादिभिः प्रत्येकमभिसंबध्यते । तेन देशे वेषस्य व्यवहारस्य भाषारस्य वचनस्य वा औचित्येन निबन्धं कुर्वीत रसार्थी । एवं कालादौ योज्यम् । यथा काम्यकुब्जा- र्याविदेहे स्थले वेषः । दासनो व्यवहारः । गर्भवर आचारः । पवर्गं वचनमनुचितम् ।

---

१ औचित्योपनिबन्ध क म

---

१ 'विषमिषं' स्मरत.

'भक्त्या शब्दार्थयोर्दोषाः' इत्युक्तम्। तत्र च शब्दस्य पदवाक्यरूपत्वात्प्रथमं द्वौ पददोषावाह—

निरर्थकासाधुत्वे पदस्य।

दोष इति वर्तते। कृत्समासयोर्भावप्रत्ययः। तेन निरर्थकत्वमसाधुत्वं च पदस्य दोषौ। एवमुत्तरत्रापि योज्यम्। तत्र चादीनां पूरणार्थत्वे निरर्थकत्वं यथा—

'मुञ्चन्मुहुर्मुहुरह चपलाकुलाक्षः
कृत्वा स्खलन्ति वचसोऽभिमुखं पदानि।
स्वामिन्भवच्चरणयोः शरणं प्रपन्नः
संसारदारुणदरेण हि कान्दिशीकः॥'

पदैकदेशः पदमेव, तन्निरर्थकत्वं यथा—

'आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम्।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा॥'

अत्र 'दृशाम्' इति बहुवचनमनर्थकम्। कुरङ्गेक्षणाया एकस्या द्वयो पादानात्॥

न च—

'अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते॥'

इत्यादिव्यापारभेदाददुष्टत्वम्। व्यापाराणामनुपात्तत्वात्। न च व्यापारेऽत्र दृक्शब्दो वर्तते॥

यमकादौ निरर्थकत्वं न दोष इति केचित्। यथा—

'योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न ससूनम्।'

'यमौ सुषेणाप्रतिमेन काचन प्रियाधिका तां प्रति मेनका च न ।'

शब्दशास्त्रविरोधोऽसाधुत्वम् । यथा—

'उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः ।

गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ॥'

अत्र हन्तेरकर्मकत्वम्, न स्वाङ्गकर्मकत्वमित्यात्मनेपदाप्राप्तेः 'आजघ्ने' पदमसाधु ॥

'न दोषोऽनुकरणे' इति वक्ष्यमाणत्वात् 'पश्यैष च गवित्याह—' इत्यत्र न दोषः ।

अथ अयोदश वाक्यदोषानाह—

विसंधिन्यूनाधिकोक्तस्थानस्थपदपतत्प्रकर्षसमाप्तपुनरात्ताविसर्गहतवृत्तसंकीर्णगर्भितभग्नप्रक्रमानन्वितत्वानि वाक्यस्य ।

दोषा इति वर्तते ।

तत्र संधिः स्वराणां समवायः संहिताकार्येण प्रत्यक्षाणामेकीभावः, कपाटवत्स्वराणां व्यञ्जनानां च प्रत्यासत्तिमात्ररूपो वा । तस्य विश्लेषाद् अश्लीलत्वात्कष्टत्वाच्च वैरूप्यं विसंधित्वम् ।

विश्लेषो यथा—

'कमले इव लोचने इमे अनुबध्नाति विलासपद्धति ।'

'लोलालकानुविद्धानि आननानि चकासति ।'

संहितां न करोमीति स्वेच्छा सकृदपि दोषः । प्रकृतिभावविधाने त्वसकृत् । 'संहितैकपदवत् पादे अर्धान्तवर्जम्' इति हि काव्यसमयः ।

अश्लीलत्वं यथा—

'विरेचकमिदं नृत्यमाचार्याभासयोजितम् ।'

अत्र 'विरेचकम्' इति जुगुप्सा । 'चाभा' इति व्रीडा ।

लोकेषु स्थितरेचोचितम् । तथा नागरेषु बहुचितं चरेत् मान्यमनुचितमिति । यथा—
'परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः । मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवातपामृष्टसरोजचारुभिः ॥' गोपीनां हि मान्यत्वात्कम्पकुण्डलम्यमदर्शितानीति । एवं चायनाम्नुभेवम् । विरेचकमिति । विमर्द प्रीतादीनां रेचकं भ्रमणं वा ।

1 'मिथः संहितैकपदवत्पादेष्वर्धान्तवर्जम्' इति वामनकाव्यालंकारसूत्रम्.

तथा—

'पक्काशे पनसमाये पुरी षण्डमहाद्रुमे ।'

अत्र 'शेप' इति 'पुरीषम्' इति 'महाद्रुम' इति च व्रीडाजुगुप्सामङ्गलार्थस्मारकत्वादश्लीलता ।

कष्टत्वं यथा—

'मञ्जर्युद्गमगर्भास्ते गुर्वाभोगा द्रुमा अमुः ।'

वक्त्रौचित्येति वक्ष्यमाणत्वाद्दुर्वचकादौ न दोषः ।

यदाहुः—

'शुकस्त्रीबालमूर्खाणां मुखसंस्कारसिद्धये ।
प्रहासासु च गोष्ठीषु वाच्या दुर्वचकादयः ॥'

अवश्यवाच्यस्यानभिधाने न्यूनपदत्वम् ।

---

अवश्यमनन्यथा बोधितमिति प्रकृतोऽर्थः । विशेषकं प्रवर्तकमिति च ॥ अवश्य वाच्यस्येति । अवश्यंभावेनाभिधेयस्य अविनाभावैर्नैमित्येन वा प्रतीयमानस्याभिधानेऽपि न दोषः । यथा— चिरमल्पमात्रं अर्कं त्रिम जानुदघ्नं नराधिप । तथा पीवमरसा ते न सर्वत्र मधारथा ॥' 'यत्र सम्यक्क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यते इति न्यायादस्तिर्गम्यते । यथा च—'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा । वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥ अत्रौचित्यमाहात्म्यदभिहितक्रिया गम्यते । तथा— मा भार्गवस्य माहिंस्र कुसीध्यानुविद्धत भवन्तम् । शर्वरीरमण्यायां मार्गतरो नास्ति तेऽस्तु सख्यता ॥' अत्रापि इत्यादीनि कर्मपदान्यौचित्यात्प्रतीयन्ते ॥ एवं यत्नमिहितमानार्थं पृथगुपेक्ष्यैव वाच्यम् । धर्मिधर्मोभयात्मनो वस्तुनः प्रतिपत्तये पुनः स एव समस्त पर्याय सर्वतश्च वाचकं वाच्यमपि नोक्तं यत्र तत्रापि न्यूनत्वमिति केचिद्वदन्ति । यथा—'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।' इति । अत्र हि कपालिशब्दो धर्मधर्मोभयवृत्ति धर्मिमात्रं वा प्रत्याययेत् । कपालसंबन्धार्थं वा गर्हितत्वमुभयमपि वेति त्रयः पक्षाः । तत्र प्रथमपक्षे विशेषप्रतिपत्तये कपालिनःप्रभमपरमपि कर्तव्यम् येनास्य गर्हितत्वं प्रतीयेत । द्वितीयपक्षे तत्सामान्यप्रतिपत्तये तेनैव तत्पर्यायेण सर्वनाम्ना वा निर्देष्टव्यमवश्यमुपादेयं भवति येन तस्य विशिष्टार्थसिद्धावसौ हेतुभावोऽवकल्प्येत । तत्र तस्यैवोपादाने यथा— सततमसोऽस्तो

1 'अभिधाने' स्यात्. 'पर्यायेण न वाच्यम्' स्यात्.

यथा—'तथाभूतां दृष्ट्वा' इति । अत्रास्माभिरिति स्थितमित्यस्मात्पूर्वं मित्यमिति च नोक्तमिति न्यूनत्वम् ।

तथा—

'त्वयि निबद्धरते' प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
किमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यत' ॥'

अत्रापराधस्य लवमपीत्यर्थो वाच्य ।

तथा—

'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।

---

न वेत्ति परदेहहरणाद्युद्यमो । शरदर्भमयं वहति मामनलद्युतो सुमधा न कुसुमशर' ॥'
इति । पर्यायेण यथा—'कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ।'
अत्र हि हरस्येति पर्यायत्वेनोपात्तस्यार्थस्य पिनाकपाणित्वं धैर्यच्युतेरशक्यकरणी
यत्वसामर्थ्ये हेतुः । अन्यथा हरमात्रस्य पौनरुक्त्यं स्यादिति । यथा च—'एक म
प्रमथितपरिपोरसमद्भुतयेपात्' इति । सर्वनाम्ना यथा—'तथा दग्धं मनसिजं जीव
यन्ति दृशैव या । विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः' ॥ अत्रापि ता इति
सर्वनाम्नोपात्तस्यार्थस्य वामलोचनात्वं मनसिजदाहजीवनयोरन्योन्यविरुद्धयोरपि भवि
तोद्भवत्वोपपत्तावर्थो हेतुः । इतरथा वामलोचनात्वस्य पुनरुपादानप्रसङ्ग । अत एव
दर्शित पक्षो न संभवत्येव । एकस्यैव शब्दस्याप्तिमन्तरेणानेकार्थप्रतिपादनसाम
र्थ्यासंभवात् । न चाधारनिबन्धना शब्दा कल्पयितुम् । न वैयाकरणत्वशोधकमिति
न्यूनपदत्वमिति । वयं तु ब्रूम—न हि शब्दस्यानियैव वृत्तिरिष्यते येनैकविशेषार्थे
ऽप्यसीनतावस्थः शब्दान्तरमर्थान्तरार्थे प्रयुज्येत तथावृत्तिनिबन्धनं वा किंचित्परि
कल्प्येत । किं तु शब्दान्तरमपि सहृदयैकसंवेद्यं व्यञ्जकत्वमावहत्येव । एवं च शब्द
स्योपकरणतायामेकत्वादेव सम्यग्ग्राह्येन सहैव व्यञ्जकस्यापि प्रवृत्तिरनिवारितप्रसरैव ।
तथा हि—परमेश्वरवाचकसहस्रसंभवेऽपि 'कपालिन्' इति तद्वाचकतया प्रयुक्तं
पीयूषसाम्यमभिमावहती सूचयन् जुगुप्सास्पदत्वं व्यनक्ति । संप्रति द्वयं चेतसीव
रमणीयम् । वस्तिन्न पूर्वमेव सेव दुर्लभप्रार्थितत्वेन शोचनीया जाता । संप्रति पुन
स्त्वया तस्मात्पाणिग्रहणव्यवसायसाहायकमिवारब्धमित्युपहस्यते । प्रार्थनाप्रयोऽन्य
स्थितो रमणीयं । यस्मात्सकलतापीयषोगेन तस्यमामग्य कपालिन वाच्यताम्' ।
प्रार्थना पुनरत्रासन्नवैशेषिककृत्स्नरूपिणी । सा च त्वं चेति द्वयोरप्यनुभूयमानपरस्प
रस्पर्धिकृत्यविधायप्रतिपादनपरत्वेनोपात्तम् । कथमतः कान्तिमतीति च मनुष्य

---

१ 'मदर्भ' स्यात्.

अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥'

अत्र भ्रान्तौ निवृत्तायां सद्विषयभूतयो सुरधनुर्धारासारयोरिव विद्युतोऽपीदमा परामर्शो बाध्य' ।

यथा वा उपमायाम्—

'सहयवङ्कायजुया वियसिर्अ कमलामुणालसंछण्णा ।
वावीवहुलत्तरोमण विलित्तवणया सुहावेई ॥'

अत्र कमलमृणालप्रतिहत्योर्मुखबाह्वो केनापि पदेनानुपादानान्न्यूनपदत्वम् ।

कश्चिद्गुण' ।

यथा—

'गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥'

कश्चिन्न गुणो न दोष ।

यथा—'तिष्ठेत्कोपवशात्—' इति ।

अत्र पिहितेत्यतोऽनन्तरं 'नैतत् यत ' इति पदैर्न्यूनै पदैर्विशेषबुद्धेरकरणान्न गुण' । 'उत्तरा प्रतिपत्ति' पूर्वां प्रतिपत्तिं बाधते' इति न दोष ।

अधिकपदत्वं यथा—

'स्फटिकाकृतिनिर्मल' प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्व ।
अनिरुद्धसमन्वितोक्तियुक्ति' प्रतिमल्लारहमयोदय स कोऽपि ॥'

अत्र 'आकृति'शब्दोऽधिक' ।

तथा—

'तीर्थीवद्यो नितम्बे कृततनुपकृतिर्मेतकूदे गौतमेन ।'

अत्र 'तत्'शब्द ।

---

१ 'पि' क प्र २ 'न्नावीबाहो' काव्य.

यथा—

> 'दष्टस्तव स्मरो भूमिः सनवाम्बुदमम्बरम् ।
> बाष्पं फुल्लाम्बुजयुगो जाता दृष्टिरिव मम ॥'

अत्र मयि सदृशशब्दो युक्तिबाधिका ।

तथा—'बिसकिसलयच्छेदपाथेयवन्त' इति ।

'स्वगुत्तरा सञ्चवतीमचीतिनीम्' इति च मत्वर्थीयस्याभिधेयम् । बहुव्रीहिसमासाश्रयेणैव तदर्थावगतिसिद्धेः । यदाहुः—'कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात्प्रक्रमस्य' ।

तथा—'वासो जाम्बवपल्लवानि जघने गुञ्जासजोभूषणम्' इति, 'सद्यो यमातङ्गघटाविभक्तैः' इति, 'येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते' इत्यत्र तद्धितप्रत्ययस्याभिधेयम् । षष्ठीसमासाश्रयेणैव तदर्थावगतेः ।

यत्र त्वर्थान्तरे तद्धितस्योत्पत्तिः न तत्र समासात्प्रतीतिरिति न तस्याभिधेयम् ।

यथा—

> 'भय मृतानिवार्तभयेरेभ्यस्तत्र सत्रस्तु ।'

इति । अत्र हि अपत्यार्थे तद्धितो नेदमर्थे इति ।

तथा—

'किं पुनरीदृशे दुर्जाते जावामर्षनिर्भरे च मनसि नास्त्येवावकाश श्लोकक्रियाकरणस्य ।'

इत्यत्र क्रियाकरणयोः ।

यथा वा उपमायाम्—

> 'अहिणवमणहरविरइयवलयविहूसा विहाइ नववहुया ।
> कुन्दलयव्वसमुप्फुल्लगुच्छपरिलिन्तभमरगणा ॥'

अत्रोपमेयस्य नीलरत्नादेरनिर्देशे भ्रमरगणपदमतिरिच्यते इत्यधिकपदत्वम् ।

तथा—

'अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥'

अत्र तिलकप्रमदयोरेकतरस्य समासोक्तिवदाक्षेपादन्यतरस्याधिकपदत्वम् ।

यथा वा रूपके—'शोकानलधूमसमारसम्भृताम्भोदभरितमिव वर्षति नयनवारिधाराविसरं शरीरम् ।'

अत्र शोकस्य केनचित्साधर्म्येणानलत्वेन रूपणमस्तु धूमस्य पुनर्न किंचिद्रूप्यमस्तीति अधिकपदत्वम् ।

तथा—'निर्मोकमुक्तिमिव गगनोरगस्य लीलाललाटिकामिव त्रिविष्टपस्य ।'

अत्र रूपकेणैव साम्यस्य प्रतिपाद्यमानत्वादिवशब्दस्याधिक्यम् ।

यथा वा समासोक्तौ—

'स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयापि दिनश्रिया ॥'

अत्र तिग्मरुचेः ककुभां च यथासंख्यविशेषणवशेन व्यक्तिविशेषपरिग्रहेण च नायकतया व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि प्रति नायिकात्वेन भविष्यतीति दयितयेत्यधिकम् ।

यथा वान्योक्तौ—

'आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥'

अत्राचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तेः प्रभुमिवेत्यधिकम् ।

---

१ 'रम्यम' स्यात्. २ 'नायकतया नायिकात्वेन च व्यक्ति' क. प्र. ३ 'मध्येवारिधि वासस' क. प्र. ४ 'वरम्' क. प्र. ५ 'धं' क. प्र.

यथा—

'द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः ।
बहुविधार्थ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः ॥'

अत्र भवदर्थस्यान्योक्तिकलेनैवाक्षेपाद्भवानिवेत्यधिकम् ।

कचिद्गुणः ।

यथा—

'यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥'

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

चकपदत्वं द्विःप्रयोगः । 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इति हि समयः ।

यथा—

'अधिकरतलतल्पं कल्पितस्वापलीला
परिमलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥'

अत्र लीलेति ।

कचिद्गुणः ।

यथा लाटानुप्रासे—

'जयति क्षुण्णतिमिरश्चिमिराम्बैकवल्लभः ।
वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः ॥'

कचिच्चान्यसङ्क्रमूले ध्वनौ ।

अनेन द्वयोरपि प्रधानता प्रतीयते । कचिद्गुण इति । अयुतप्राधान्यवृत्त्यभिधितात्

१ 'स्वाप' का प्र

यथा—

'ताला जायन्ति गुणा जाला ते सहिअएहिं घिप्पन्ति ।
रविकिरणाणुगहियाइं हुन्ति कमलाइं कमलाइं ॥'

विहितस्यानुवाद्यत्वे यथा—

'जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः ॥'

अस्थानस्थपदत्वं यथा—

'प्रियेण संग्रथ्य विपक्षसंनिधौ निवेशितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥'

अत्र 'स्रजं काचिन्न जहौ' इति वाच्यम् ।

तथा—

'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥'

अत्र त्वंशब्दादनन्तरमकारो युक्तः ।

तथा—

'शक्तिर्निस्त्रिंशमेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टिनी खङ्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुनः किं मया बुद्धया ते
प्रोच्यैवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥'

अत्रेत्थं प्रोच्यैवेति वाच्यम् ।

---

पत्येषु । तिमिरापन्था पूरवर्जा पथिक ॥ तालेति तथा । जालेति यथा । 'ते
हाव्यन्ता काले' इति यतस्तथा केर्जामरेण ॥ त्वंशब्दादिति । समुच्चयद्योतके हि
चकार । समुचीयमानार्थादनन्तरमेव प्रयोक्तव्य इति हि क्रमः । एवं पुनःशब्दोऽपि

---

१ तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ (इति च्छाया.)

---

१–२ केर्जा' स्याम्.

यथा—

'प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाविर्भव
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणम्।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते॥'

अत्र क्षोभाभावे पतत्प्रकर्षत्वं नास्ति।

समाप्तपुनरात्तत्वं यथा—

'ज्योत्स्नां लिम्पति चन्दनेन स पुमान्लिम्पत्यसौ मालती
मालां गण्डजलैर्मधूनि कुरुते स्वादून्यसौ फाणितैः।
यस्त्वत्र प्रथितान्गुणान्प्रथयति श्रीवीरचूडामणे
स्तारत्वं स च घाणमा मृगयते मुक्ताफलानामपि॥'

अत्र चूडामणेरिति समाप्ते वाक्ये तारत्वमित्यादि पुच्छमात्रं पुनरुपात्तं न चमत्करोति।

क्वचिन्न गुणो न दोषः। यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणमपि तु वाक्यार्थान्तरमेव क्रियते। यथा—'प्रागप्राप्त—' इति।

रोर्लोपे उत्वादिना उपहतौ च विसर्गस्याभावोऽविसर्गत्वम्।

यथा—

'धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभान्विताः॥'

हतं लक्षणच्युतं पतितप्रायं वा लक्षणानुसरणेऽप्यश्रव्यमप्राप्तगुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र तद्भावो हतवृत्तत्वम्।

यथा—

'अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम्।'

अत्र वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धमिति लक्षणच्युतम्।

'प्रसभं राजति सुमनसां दाम कण्ठावलम्बि।'

'कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः।'

इत्यनयोश्चतुर्थे पाठे च यतिर्भ कृतेति यतिभ्रष्टम् ।
एतदपवादस्तु स्वच्छन्दोऽनुशासनेऽस्माभिर्निरूपित इति नेह प्रतन्यते ।

'अमृतममृत कः संदेहो मधून्यपि नान्यथा
मधुरमथ किं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्ञनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥'

अत्र 'यदिहान्यत्स्वादु' इत्यभव्यम् ।

'अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
संभारा खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थला
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥'

अत्र 'वस्त्राण्यपि' इति पाठे लघुरपि गुरुत्वं भजते ।

'हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव ।
मुग्ध विदग्धसभान्तररत्न क्वासि गतः क वयं च तवैते ॥'

हास्यरसव्यञ्जकमेतद्वृत्तं करुणरसाननुगुणम् ।
वाक्यान्तरपदानां वाक्यान्तरपदैर्व्यामिश्रत्वं संकीर्णत्वम् ।

यथा—

'काम साहइ प्पुहविओ कूरं पेच्छेइ निज्भरं रुट्ठो ।
सुणयं गिम्हइ कण्ठे हक्केइ र्ण निभत्तयं धेरो ॥'

अत्र 'काकं क्षिपति कूरं खादति कण्ठे नखारं गृह्णाति श्वान भषति'
इति संकुलितम् । एकवाक्यतायां क्लिष्टमिति क्लिष्टभेदः ।

---

१ चतुर्थे एकारोत्तरं चो नकारपरे 'भं' इत्युत्तरं यतिर्भवति. २ 'सो यथा' का प्र ३ 'किञ्च' प्रकाशे. ४ 'तुषां' प्रकाशे ५ 'भेते' का प्र

६ 'काकं खादति क्षिपति कूरं मारयति निष्ठुरं रुष्टः ।
शुनकं गृह्णाति कण्ठे भावारयति च नखारं स्थविरः ॥'

७ 'तुवेइ निठुरं रुट्ठो' वाग्भटकाव्यानुशासने ८ 'अ निभत्तिवं थेरो' का प्र

कचिदुक्तिमप्युक्तौ गुणः ।

यथा—

'बाले नाथ विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु, न मेऽपराध्यति भवान्, सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥'

वाक्यमध्ये वाक्यान्तरप्रवेशो गर्भितत्वम् ।

यथा—

'परापकारनिरतैर्दुर्जनैः सह संगतिः ।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥'

अत्र तृतीयः पादो वाक्यान्तरं मध्ये प्रविष्टम् ।

कचिद्गुणः ।

यथा—

'दिग्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥'

अत्र वीराद्भुतरसवशात् 'वदन्त एव' इत्यादि वाक्यान्तरं मध्ये प्रविष्टं गुणाय ।

प्रस्तुतभङ्गो भग्नप्रक्रमत्वम् ।

यथा—

'एवमुक्तो मन्त्रिमुख्यैः पार्थिवः प्रत्यभाषत ।'

अत्र 'उक्त' इति प्रक्रान्ते 'प्रत्यभाषत' इति प्रकृतेर्भग्नप्रक्रमत्वम् । (यथा) 'प्रत्यवोचत' इति युक्तम् ।

---

येऽप्यागमेन [illegible] प्रस्तुतभङ्ग इति । स हि यथा । प्रक्रममेकम् [illegible] प्रतिपत्तृप्रतीति [illegible] परिस्खलन [illegible] पर्यवसन्नीयः ॥ प्रत्यवोचतेति युक्तमिति । एवंविधस्य प्रक्रमभेदस्य [illegible] विष-

अत्रैकवचनेन भगवती सर्वोष्म प्रसादसंबन्धेन यच्छसां बहुत्वनिर्देशः स वचनस।

'कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम्।
किमकारणमेव दर्शने विलपन्त्यै रतये न दीयते ॥'

अत्र कारकस। 'न च तेऽहं कृतवत्यसंमतम्' इति तु युक्तम्।

यथा च—

'चारुता वपुरभूषयदासां तामनूननवयौवनयोगः।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसंगमभूष ॥'

अत्र शृङ्खलाक्रमेण कर्तुः कर्मभाव। कर्मान्तरं च यथोपक्रान्तं यथा न निर्व्यूढम्। 'तमपि वल्लभसङ्ग, इति युक्तम्।

'तव कुसुमशरत्वं शीतरश्मित्वमिन्दो
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥'

अत्र क्रमस।

यथा वा—

'अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा
ववितथमदाध्माते रोषान्मुनावभिधावति।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥'

---

अत्रैव विधेयतया प्राधान्यात्समासाभावानुपपत्तिदोषोऽपि परिहृतो भवति। यथा च— 'वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान्। प्रकृत्या ह्यमणिः श्रेयान्नालंकारश्च्युतोपलः ॥' एवम्— 'त्वमिव जले जलमिव खं हंस इव शशी शशीव गतहंस'। कुमुदाकाराणि ताराकुमुदानि कुमुदानि ॥' इत्यादौ द्रष्टव्यम् ॥ अकलितेति। अत्र 'पादोपसंग्रहणाय' इति दूरं वाच्यम्। एवमन्येऽपि भेदा अभ्यूह्याः। ननु कर्तृकर्मभेदोऽपीह कस्मान्नो दर्शितः। अर्थभवादिति ब्रूमः। ननु कविभिरभिः प्रयुज्यमानो दृश्यते च कर्तृ

यथा वा व्यतिरेकालंकारे—

'तरङ्गय दृशोऽङ्गणे पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका
मुदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः ॥'

अत्रोपमानानामिन्दीवरादीनां निन्दया नयनादीनामुपमेयानामतिशयो वक्तुं प्रक्रान्तः 'भवतु च द्विचन्द्रं नभः' इति सादृश्यमात्राभिधानेन निर्व्यूढ इति भग्नप्रक्रमत्वम् । 'भवतु तद्विचन्द्रं नभः' इति तु युक्तम् ।

यथा—

'तद्वक्त्रं यदि मुद्रिता शशिकथा, तच्चेत्स्मितं का सुधा,
सा चेत्कान्तिरतन्त्रमेव कनकं, ताश्चेद्गिरो धिङ्मधु ।
सा दृष्टिर्यदि हारितं कुवलयैः किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥'

अत्रोपमानादुपमेयस्यातिरेकलक्षणं वस्तु वक्तुमिष्टं तस्यार्थान्तरन्यासेन वस्तु सर्गपौनरुक्त्यस्य सादृश्यपर्यवसानाद्भग्नप्रक्रमत्वम् ।

---

भग्नप्रक्रमो नाम गुण एव न दोषः । तत्रैव चार्थं प्रक्रमभेदभ्रमो भवताम् (?) । तत्र पुष्पदर्शस्य यथा—'यथाई प्रसमो वैकुण्ठावतारः' इति । अत्र हि यथा क्रमिति पुष्पदर्शस्य कर्तृत्वं प्रकृतमपहाय वाक्यवाक्य ततोऽन्यत्रारोप्यैवमुक्तम् । दाशरथिं रामं प्रति हि कसवित्तमक्षमित्युक्तिः । भक्तदर्शस्य यथा गामिवात्प्रसादो रेणुकापुत्रः । सरीमान् हि गुरवनुर्महापराध इति । अत्रापि हि पाभिवात्प्रसादोऽस्मीति वक्तव्ये पूर्ववाक्यस्यार्थेवमुक्तम् । एषा हि भार्गवरामस्यागमुद्दिश्योक्तिः । यथा वा— अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि । इति । अत्रापि 'अहं प्रष्टुमनाः' इति वक्तव्ये भक्तदर्शस्य कर्तृत्वमन्यत्रारोप्यैवमुक्तम् । द्विविधो ह्यन्यसम्बन्धः । तत्र चैतन्येऽन्यत्रारोपो निदर्शित एव । अचेतने तु यथा चापाचार्य— इति । अत्र हि 'त्वं रेणुकाकण्ठाबाधां कृतवान्' इति । 'त्वया कण्ठस्पर्शोऽयं कृतो' इति वक्तव्ये चापस्याथ पुष्पकमुद्रयोः कर्तृत्वमुभयो परशुचन्द्रहासयोरचेतनयोरारोप्यैवमुक्तम् ॥ यथा च— 'हे' कोसर सीयतां जनकजा रामः क्वयं पाचते क्वोऽयं ते मतिविभ्रमः स्मर नयं

१ 'मो प्रसिद्ध पाठ..

वक्त्रौचित्ये न दोषः ।

> 'भजसः क तात वजसीति परिचयगतार्थमस्फुटं धैर्यम् ।
> अभिनन्दितं शिशुना जननीनिर्भर्त्सनक्षममन्युना ॥'

अत्र शिशुना मजतिरेव प्रयुक्तो न वजतिस्तत्रैव परिचयगतार्थास्फुट त्वधैर्यमेवेत्यसमवात् । केवलं शक्तिवैकल्याद्रेफोऽनेन नोच्चारितः ।

पदार्थानां परस्परमसंबन्धोऽनन्वितत्वम् । यथा—

> 'इस्तरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
> कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥'

अत्र यथाकारः सनिवेशलक्षणो विवक्षितस्तथा परस्परपरिहारस्थिति-गतोरर्थयोः सिद्ध एवेत्यनुपादेयः ।

अक्षरविशेषलक्षणस्तु शब्दनियतत्वादर्थयोर्न संभवत्येवेत्यनन्वितत्वम् ।

यथा वा—

> 'निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
> नूनं तेषामभ्यसूयापरोऽसौ वीर्योदग्रे राजशब्दे मृगाणाम् ॥'

अत्र सिंहानां न तावद्राजशब्दः संभवति, तेषां तद्वाच्यत्वाभावात्तत्संबन्धाभावाच्च । तत्पर्यायस्य मृगराजशब्दस्यासीति चेत्, न । तस्य प्रक्रान्तत्वाभावात् । मृगाणामित्यत्र मृगराजानामित्यनुक्तेश्च । किं च मृगेषु राजत्वं भवति सिंहानाम्, न तु शब्द इति वीर्योदग्रत्वं तद्विशेषणमनुपपन्नमेव तत्सार्थनिष्ठत्वेनोपपत्तेः । तेन सिंहानां मृगाणां वीर्योदग्रत्वस्य च न राजशब्देनान्वयः संगच्छते । तेन 'राजभावे' इति 'मृगेषु' इति वा पाठः श्रेयान् ।

यथा वा—

> 'येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
> र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।

---

त्वयापि किंचिद्गतम् । नैवं चेत्तत्रदुःखमभिहितं ......... पतिव्रता पत्नी नैव सहिष्यते मम चक्षुर्भ्यामभव मृत्युः ॥' अत्रान्यदं न सहिष्ये पूर्ववदसदर्थस्य कर्तृत्वमथैतमेऽपीति समारोप्यैवमुक्तम् । इति ॥ अर्थयोरिति । कृपणकृपाणसम्बन्धयोः ॥

येषां दुष्कृतयः कृतामरपतिक्षोभा क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किंचित्प्रवादोचितम् ॥'

'अङ्गाङ्गिनोरेव हि मत्तवर्थयोः संबन्धो न स्वाङ्गानां मत्वर्थानामन्योन्यम्' इति नियमेन बहुभिर्यदर्थैरेकः पदार्थो निर्दिश्यते इति यैरित्यत्र विशेष्यस्याप्रतीतिः । 'क्षपाचारिभिः' इति तु पाठे युज्यते समन्वयः ।

यथा वा उपमायाम्—

'वापीव विमलं व्योम हंसीव विमलः शशी ।
शशिलेखेव हंसोऽयं हसाठिरिव ते यशः ॥'

यथा—

'सरसीवामलं व्योम काशा इव सिताः शशी ।
शशीव धवला हंसा हंसीव विशदा दिशः ॥'

अत्रोपमानोपमेययोः साधारणधर्माभिधायिपदं लिङ्गवचनाभ्यां वैसादृश्यादुपमानेन न संबध्यते इत्यनन्वितम् ।

यदि च लिङ्गवचसोर्विपरिणामादुपमानेनापि संबन्धः क्रियेत, तदा न्यासलक्षणो वाक्यभेदः स्यात् ।

---

न स्वाङ्गानामिति । प्रधानानुयायित्वेन समत्वाभिप्रायः । युज्यत इति । यदि क्षपाचारिण्यमित्यस्य स्थाने क्षपाचारिभिरिति पठ्यते तदात्र योऽपि यच्छब्दार्थः समग्रीभूय वाचिता(?) सहीभूतेन तैः क्षपाचारिभिरित्यनेन प्रतिसंबन्धमात्रसाम्येन संबन्धमनुभवतीत्यर्थः । यथा वा—'तेनाथ रोमाञ्चमतासहेन निगदमन्मेव सखिदूरां ताम् । आगम्य द्वारविरुद्धरोमिरीतो मत्स्यामनुयातकीव ८' अत्रानुयातिक्रियापेक्षो राज्ञ मत्स्यतो कर्तृकर्मभावोऽभिमतसमभिमतः कवेः । य धात्वी तत्संबन्धयो साक्षादुक्तः । समग्रीभावसंबन्धमुखेन तत्संबन्धसमोक्तत्वात् । अतोऽत्र साक्षात्संबन्धो वा वाच्यः । तत्संबन्धस्थिरमन्तरं वा येन कर्तृकर्मत्वभावसयोर्भेदमाभियात् । न योमयोरेकमत्यु पमितमनुचितत्वम् । तेन च रस(?)मयमत्र पाठः— आगम्यगाद्वारविरुद्धरोमिर्यतोऽनुयातो मत्स्या विवस्ते ।' इति ॥ अभ्यासलक्षण इति । पौनःपुन्यरूपः ॥ वाक्य

---

१ 'विशेष्यस्या' ख प्र

---

१ 'पठ्यते' स्यात्. २. 'सामग्र्येणैव' स्यात्. ३ 'तेन सरसमत्र पाठः' स्यात्. ४ 'युग्य' स्यात्.

एवं वाच्यवशानेन प्रकृतोऽर्थो न प्रतीयेत । विपरिणामश्च यादृशो न्यायः काव्येषु न युक्तः ।

यत्र तु मानाख्येऽपि लिङ्गवचसो साधारणधर्माभिधायिपदं स्वरूपभेदं नापद्यते, न तत्रैव दूषणम् । यथा—

'चामरप्रचयैकसारेण निर्विशेषाल्पवृत्तिना ।
स्वामिनेव नटस्येन निर्विण्णाः सर्वथा वयम् ॥'

'चन्द्रमिव सुन्दरं मुखं पश्यति ।'

'सङ्क्षेपोऽसहसोऽन्यासि स्त्रीभिर्मधुरतामृतः ।
धत्ते स परां शोभां त्वदीया विभ्रमा इव ॥'

इति ।

यत्रापि गम्यमानं साधारणधर्माभिधायि पदम्, तत्रापि न दोषः । यथा 'चन्द्रमिव मुखम्, कमलमिव पाणिः, बिम्बमिवाधर' इत्यादि ।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपा भवतीत्यस्यापि अनन्वितस्यैव विषयः । यथा—

'अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥'

अत्र चेतना प्रसादमाप्नोति, न पुनरापेति कालभेदः ।

'प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥'

अत्र लता विभ्राजते, न तु विभ्राजसे इति पुरुषभेदः ।

भेद इति । तु वाच्ये साधारणधर्मं न असदृशा इति । ईदृग्लक्षणमेकवचनम् । लिङ्गवचनाद्दुष्टत्वं च । मधुरतया मृतो पूर्णः । तां च बिभर्ति । दधते इति ।

१ 'विभ्राजसे इति संबोध्यमाननिष्ठस्य परमाप्तत्वासंबोध्यमानविषयतया असमत्वात् पुरुषभेदः' इत्येवं काव्यप्रकाशे पाठः.

१ कमला चामरौ भवत २ 'विभ्रमा' पाणिनीयाणाम्.

'गङ्गेव प्रवहतु ते सदैव कीर्तिः' इत्यादौ च गङ्गा प्रवहति, न तु प्रवहतु इति अप्रवृत्तप्रवृत्तात्मनो विधेः ।

एवंविधस्य चान्यस्यार्थस्योपमानगतस्यासम्भवाद्विध्याविभेदः ।

अथाष्टावुभयदोषानाह—

**अप्रयुक्ताश्लीलासमर्थानुचितार्थश्रुतिकटुक्लिष्टाविमृष्टविधेयांशवि रुद्धबुद्धिकृत्त्वान्युभयोः ।**

उभयोरिति । पदस्य वाक्यस्य चेत्यर्थः । दोषा इति वर्तते ।

कविभिरनादृतत्वादप्रयुक्तत्वम् । तच्च लोकमात्रप्रसिद्धत्वाच्छास्त्रमात्र प्रसिद्धत्वाच्च ।

आद्यं यथा—

'कष्टं कथं रोदिति फूत्कृतेयम्' ।

देश्यं चैतज्जातीयमेव । यदाह—

'प्रकृतिप्रत्ययमूला व्युत्पत्तिर्यस्य नास्ति देश्यस्य ।
तन्मडहादि कथंचित् रूढिरिति न संस्कृते रचयेत् ॥'

क्वचिद्गुणो यथा—

'देव स्वस्ति वयं द्विजास्तत इतः स्नानेन निष्कल्मषा
कालिन्दीसुरसिन्धुसङ्गपयसि श्राद्धं समीहामहे ।

---

एव चार्थे' इत्यस्य स्थाने तस्मै परीक्षणचनघुमयाभ्याम्॥ लोकमात्रप्रसिद्धत्वा दिति । एतेन ग्राम्यमप्युक्तत्वान्न पृथक् कृतम् ॥ शास्त्रमात्रप्रसिद्धत्वादिति । यथापि योगरूढानुपादाभिधानकोशादीनि । तेषामप्रतीतासमर्थमिश्रत्वान्तानि च पृथग्लक्षणीयानि अप्रयुक्तत्व एवान्तर्भावादिति ॥ एतज्जातीयमेवेति । लोकमात्रप्रसि द्धिमयम् । केवलं नियतदेशविषयत्वेन प्रसिद्धिरिति मायमन्यम् । मडहादीति । मडहमहारहस्यचन्द्राद्यप्रयुक्तप्रायमाव्यात्मनामविषयम् । यथाकर्म सूक्ष्मभेदप्रकोशक- पर्यायाकाङ्क्षितरमणीयत्वाभावकम् । रूढिरितीति । रूढिमात्रमा कविभिर्देशप्रसिद्ध्या

---

१ प्रवर्तनात्मनो' का प्र

---

१ 'अप्रयुक्त' क्वाच, २ 'विरस' क्वाच.

तथाभेमहि सततनियतपशुपीभावैकतानमतं
समयच्छ समयशः सितासितपयोर्भेदाद्विवेकोऽस्तु नः ॥'

अत्राश्लीलस्यापि गुप्तस्येव ग्राम्यस्य वक्तृत्वे सत्त्वीति गुणः ।

ग्राम्यस्य यथा—

'ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ॥'

क्वचिद्गुणाः ।

'फुल्लुक्करं कलमकूरसमं वहन्ति
जे सिन्दुवारविडवा मह वल्लहा ते ।
जे गालिदस्स महिसीदहिणो सरिच्छा
ते किं पि मुद्धविअइल्लपसूणपुञ्जा ॥'[1]

अत्र कलमभक्तमहिषीदधिशब्दानां लौकिकत्वेऽपि विदूषकोक्तौ गुणत्वम्।

शास्त्रमात्रप्रसिद्धिर्यथा—

'यथायं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथ वा ॥'

अत्र दैवतशब्दः पुंलिङ्गे लिङ्गानुशासने प्रसिद्धः ।

यथा वा—

'सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत्कर्म बन्धकम् ॥'

---

अस्यार्थस्य वाच्योऽयं सर्वत्र वाचकः' इति मन्यमानः प्रयुङ्क्ते । व्युत्पत्तिर्वैवल नास्तीति वचनमपि च व्युत्पत्तिकं वैरस्यं कदाचिदनोऽस्मयमेवेत्युक्तं भवति—यथा दूर्वा भिन्नोऽयमाशय तस्थे भूमिपिशाचः सर्वे महामत्ताः पद्ममत्ताः नगराश्रवणे

---

1 'फुल्लोत्करं कलमभक्तनिभं वहन्ति
ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षा-
स्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः ॥ [इति संस्कृतम् ।]

अत्राशयशब्दो वासनापरपर्यायो योगशास्त्र एव प्रसिद्धः ।
यथा वा—

'तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥'

अत्र हन्तीति गमनार्थे धातुपाठ एव प्रसिद्धम् ।
यथा वा—

'सहस्रगोरिवानीकं दुःसहं भवतः परैः ।'

अत्र गोशब्दस्याक्षिवाचकत्वमभिधानकोश एव प्रसिद्धम् ।
क्वचिद्गुणो यथा—

'सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥'

अत्राङ्गस्कन्धपञ्चकमित्यस्य तद्विद्यसंवादो गुणत्वम् ।
श्लेषे तु न गुणो न दोषः । यथा—

'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजंगहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥'

अत्र माधवपक्षे शशिमच्छब्दः क्षयशब्दश्चाप्रयुक्तः ।

---

मधुरमनीतम्, क्वचि मेघवीरमित्यादि । मन्त्रेति । कर्मणामारम्भोपायः पुरुषद्रव्यसंपत्, देशकालविभागः विनिपातप्रतीकारः, कार्यसिद्धिरिति पञ्चाङ्गानि ॥ स्कन्धेति । 'वि ज्ञानं वेदना संज्ञा संस्कारो रूपमेव च । भिक्षूणां ज्ञानवर्गेण स्कन्धाः पञ्च प्रकीर्तिताः ॥' येन ध्वस्तेति । माधवपक्षे—येन ध्वस्तं [illegible] । अन शकटम् । अमरेण [illegible] । बलि जितवान् । कः काय स पूर्वममृतहरणे स्त्रीत्वं नीतः । उद्वृत्तं भुजंगं कालियाख्यं पीडितवान् । रवे शब्दलयमपि यस्य सम्प्राप्तिर्यस्य । अगं गोवर्धनमपि गां च योऽधारयत् । शशिनं मथ्नाति यो राहुस्तस्य शिरोहरः । अन्धकानां यादवानां क्षयं निवासं करोति यः स माधवः कृष्णः । उमाधवपक्षे—बलिजित्कायो विष्णुस्त्रिपुरवधे- ऽस्त्रीकृत्य शरतां नीतः । भुजंगाः सर्पा [illegible] शिरो यस्य तथाभूतो हरः । [illegible]

वाक्यस्य यथा—

'तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नः सफलितः सखे ॥'

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रे प्रसिद्धाः ।

क्वचिद्गुणो यथा—

'अस्माकमथ हेमन्ते देवास्यत्वेन वाससः ।
अकितीव यथादीनां दुर्लभं समसारणम् ॥'

अत्र प्रतिपाद्यप्रतिपादकयोरज्ञतायां गुणः ।

अत्र व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वेनाश्लीलत्वं त्रेधा ।

तत्र पदस्य यथा—

'साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥'

'लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाथ वा नतिमृते तेनानिशं चुम्बिता ॥'

'मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।

---

या चाभियुक्तै चिर भावुर्गाम च दर इति । अम्यधस्तो दैवः ॥ तस्याधिमात्रोपाय स्येति । 'तेषा हि नव योगिनो भवन्ति । मृदूपायो मध्योपायोऽधिमात्रोपाय इति । तत्र मृदूपायस्त्रिविध —मृदुसंवेगः मध्यसंवेगः तीव्रसंवेग इति । एवमितरावपि । तत्राधिमा त्रोपायानां "तीव्रसंवेगानामासन्नः" समाधिलाभः समाधिफलं च भवति ॥" "दृढभूमि" यथा चित्तवृत्तिनिरोधस्य यथानुरूपं योऽभ्यासः "स दीर्घकालनैरन्तर्येण सत्कारासेवितो

---

१ ऽथ' क म

---

१ 'ते पुनः नवयोगिनो मृदुमध्याधिमात्रोपाया भवन्ति' इति पातञ्जलभाष्ये पाठः. २. 'इदं सूत्रम् । शेषं भाष्यम्' इति पाठान्तरम्. ३ इदं पातञ्जलसूत्रं समाधिपादे चतुर्दशम् । शेषं भाष्यम्.

रतिविलुलितबन्धे केशपाशे सुकेश्या
सति कुसुमसनाथे कं हरेदेष बर्ही ॥'

एषु साधनवायुविनाशशब्दा व्रीडादिव्यञ्जका ।

वाक्यस्य यथा—

'भूपतेरुपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहणनोत्साहवती मोहनमादधौ ॥'

कम्पना सेना, वामं शत्रुं प्रति विरुद्धं वल्गु च । अत्रोपसर्पणप्रहणन मोहनशब्दा व्रीडादायित्वादश्लीला ।

'तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥'

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिन ।

'पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥'

पावकेन पवित्रेणाग्निना च । अत्र पितुर्गृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

कश्चिद्गुणो यथा—

सुरतगोष्ठ्यां 'ग्राम्यं पदं' पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रस्थिति ।

'करिहस्तेन सबाधे प्रविश्यान्तर्विलोलिते ।
उपसर्पन्ध्वजं पुंस साधनान्तर्विराजते ॥'
'तर्जन्यनामिके स्थिते मध्या पृष्ठस्थिता तयो ।'

करिहस्त ~ । सबाध सघट्टो वराङ्गं च । ध्वज पताकाव चिह्नं पुंव्यञ्जन च । साधन सैन्यं स्त्रीव्यञ्जन च ।

रत्नभूमि" । वीर्यंमवेक्षितो निधिकाशीवित्ववसा ग्रहवर्जन विवेका भद्रया सेपा-

१. 'मध्यमा पृष्ठतस्तयो' इत्युदाहरणचन्द्रिकायां पाठ २. करिहस्त इति प्रोक्त 'अमवाजविचारे' इति परिभाषितेन' इत्युदाहरणचन्द्रिकायां पाठदर्शनात्त्र विधान्पाठस्तुटित' प्रतीयते

शमकथासु यथा—

'उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥'

'निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥'

अत्र भाव्यमङ्गलसूचनम् । रक्ताः सानुरागाः । प्रसाधिता अर्पिता भूर्यैः । रक्तेन मण्डिता भूर्य्येषां । विग्रहो वैरं शरीरं च । स्वस्थाः कुशलिनः स्वर्गस्थाश्च ॥

अवाचकत्वात्कल्पितार्थत्वात्संदिग्धत्वाच्च विवक्षितमर्थं वक्तुमशक्तिरसमर्थत्वम् ।

पदस्य यथा—

'हा धिक्सा किल तामसी शशिमुखी दृष्टा मया यत्र सा,
तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः, कुशले सदैव विधुरो धाता, न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥'

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम् । यथा वा—

'जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ।'

अत्र दधदित्यर्थे विदधदित्यवाचकम् । यथा वा—

'चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।

---

स्थिताः सत्कारवान् । रश्मिभिर्मुक्ताजसंस्कारेण प्राप्तिर्यावन्मितिमूर्तविषय इत्यर्थः ॥ अवाचकत्वादिनेवाचकत्वप्रतिबद्धत्वयो कल्पितार्थत्वादिनमेव नेयार्थत्वस्य संदिग्धत्वादि

अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥'

अत्र विजित इत्यर्थे निमेय इत्यवाचकः। यथा च—

'महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥'

अत्र रवो मण्डूकादिषु प्रसिद्धो, न तूक्तविशेषणे सिंहनादे इत्यवाचकः। तथा च—

---

सत्येन संशिक्षणसमासमर्थत्वादेऽवमोचनात्—मण्डूकादिषु प्रसिद्ध इति। मण्डूकादीनां शब्दो रवोऽभिधीयत इत्यर्थः॥ यथा च—'अभिमतफलार्थमिन्दुखं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते।' अत्र हिरण्यकशिपुमिति वक्तव्ये हिरण्यपूर्वं कशिपुमित्यवाचकम्। यतोऽत्र हिरण्यशब्दः कशिपुशब्दस्याभिधेयप्रत्यायी वा स्यात्, सम्बन्धप्रत्यायी वा। तत्र न तावदभिधेयप्रत्यायकत्वमुपपद्यते। अर्थस्यासम्भवात्। नापि सम्बन्धप्रत्यायी न ह्येवमसुरविशेषस्य हिरण्यकशिपोरभिधानानुसारः प्रत्यायकक्रियाकर्मभावेनेति सिद्धो भवति। द्विविधो हि शब्दानुसारः। शब्दतोऽर्थतश्च भेदात्। तत्रेतरेण यत्र चेरे शब्दः प्रसिद्ध एव। अर्थतस्तच्छब्दप्रत्यायकार्थे। यथा— महदपि परशु के सी तव सम्प्रगाढ़ं' इह चापमर्थोऽनुसार इति भागापच्छेदात्। केवलं तत्तदभिधान-मनुभूयते तथाहृतम्। यथाशुक्लं तत्तदभिधानमेव न भवति। लोके हि हिरण्यक-शिपुरिति तत्समस्ता न हिरण्यपूर्वः कशिपुरिति तस्य वाचकम्॥ यथा वा—'कुम्भ-मस्त करणेन दृशा पश्यति कम्पोपपदाक्षरेण।' इत्यत्र कम्पाक्षा इति वक्तव्ये कम्पोपपदा दृशा इत्यवाचकम्। यतो विशेषणमिदमभिधानस्याविषयमेवाभ्युपगम्यते। नाभिधेयविषयम्, उपपदत्वमितरपदत्वयोरभिधानधर्मत्वात्। न चेदमेव विशेषितेन किञ्चित्प्रयोजनम्। अभिधानमात्रात्तदभिमतार्थसिद्धेः। अभिधेयविषयत्वे च तत्सिद्धि-र्भवेत्, किं तु न तत्र यथोक्तविशेषणसंबन्धः संगच्छते। यत्र च संगच्छते न ततोऽभि-मतार्थसिद्धिरिति यथावाच्यत्वादसमर्थमेवेति। तस्मादुरगमयमत्र पाठः श्रेयः—'कुम्भ-मस्त करणेन नाम तदेव कम्पद्भयम् पश्यति।' अस्मिन् पाठे कुम्भस्पर्शस्य कम्प-दृष्टौ वाचकत्वे गुणान्तरमत्र। एवम् तत्पूर्वत्वं यथाक्रमा इत्यक्षम्यस्थिरं मम

'मञ्जीरादिषु रणितप्रायं, पक्षिषु च कूजितप्रभृति।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रभृति॥
इत्थं प्रयुज्यमानानेवमायांस्तथा प्रयुञ्जीत।
अन्यत्रैतेऽनुचिता शब्दार्थत्वे समानेऽपि॥'

कश्चिद्गुणो यथा—

'आशुकम्पितवटीटकराग्रैर्नीविमर्षमुकुलीकृतहस्ता।
रक्तवैणिकहताधरतन्(?)मण्डलक्वणितचारु चुकूजे॥'

अत्र कूजितस्य पक्षिषु प्रसिद्धत्वेऽपि कामशास्त्रे प्रसिद्धत्वाद्गुण।
यथा वा उपमायाम्—

'पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ।
अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे॥'

अत्र नागयूथेन धर्मिणा साम्यं तमसो यत्कुमभिमतं कवेर्न तद्धर्मेण मलिनत्वमात्रेण, मृगपतौ पतिते तस्यैव निःप्रतिपक्षतया स्वेच्छाविहारो पपत्ते न सद्भन्मलिनानां तमसाम्, पतङ्गस्य मृगपतिरूपणावैयर्थ्यप्रसङ्गात्। न च तत्साम्यं सुन्दरहारिसदृशसुभगसंनिभादिशब्दा इव मलिनादिशब्दा प्रत्युवन्ति वक्तुम् इत्यवाचकत्वम्।

यथा वा उत्प्रेक्षायाम्—

'उदयौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम्।
नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा॥'

---

प्रते।' इत्याद्यपि द्रष्टव्यम्॥ मञ्जीरादीति। आदिमदर्थं रसनाद्यभ्यप्रमरायर्थम्। प्रायग्रहणं शरणार्थवृत्तिकर्षिर्शिञ्जितीसाद्यर्थम्। प्रभृतिग्रहणं केरवेकाद्यर्थम्। पुनरादिग्रहणं धिरमृगाद्यर्थम्। प्रायग्रहणमपि स्तनसाद्यर्थम्। एवंप्रायानिति। पै... सामान्येन पैष्यन्त अत्र च विशेष एव इत्यन्त तानिसर्व। तद्यथा—देवादि रथेषु भवति पुरुषेषु, क्वचित् पीडितेषु वालिर्यांचो न लभ्यते। न हि भवति

---

१ 'निष्प्रति' स्यात्.

---

१ 'शिञ्जि' स्यात्. २. 'तिरश्चां रुतप्रायमिति' इत्यभिधानात् वाशिताद्यर्थम्' स्यात्. ३ 'धारे' स्यात्. ४ 'पञ्चम्व' स्यात्.

अत्र ध्रुवेत्यादिसम्बन्धवचनमात्मनः समाधानं प्रतिपादयितुं नोत्सहते इत्य बाधकः ।

यथा वार्थान्तरन्यासे—

'किमपेक्ष्य फलं पयोधरान्ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥'

अत्र महीयस इत्येकवचनं न सामान्यमर्थरूपं व्यक्तमभिधातुं क्षमते इत्यबाधकत्वम् । बहुवचनस्यैव वीप्सासमानफलस्य स्फुटत्वेन तदभिव्यक्तिक्षमत्वात् । यथा—

'यावदर्थपदां वाचमेवमाधाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥'

सर्वादिशब्दोपादाने त्वेकवचनस्यापि न दोषः । यथा—

'छायामपास्य महतीमपि वर्तमाना
मागामिनीं जगृहिरे जनतास्तरूणाम् ।
सर्वोऽपि नोपनतमप्यपचीयमानं
वर्धिष्णुमाश्रयमनागतमभ्युपैति ॥'

वाक्यस्य यथा—

'विभजन्ते न ये भूपमाश्रयन्तं न ते श्रियम् ।
आवहन्ति न ते दुःखं प्रसरन्ति न ये प्रियाम् ॥'

अत्र विभजतिर्विभागार्थः सेवने, आश्रयतिर्विनाशार्थः लाभे, आवहतिः करोत्यर्थो धारणे, प्रसरतिर्विस्मरणार्थः स्मरणेऽवाचकः ।

कल्पितार्थस्यादेसमर्थम् ।

पदस्य यथा—

'किमुच्यतेऽस्य भूपाल मौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥'

---

१ 'वचनीयम्' स्यात्.

अत्र वच शब्देन गी शब्दो लक्षित इति क्लिष्टार्थत्वम् । अत्र न केवलं पूर्वपदम्, यावदुत्तरपदमपि पर्यायपरिवर्तन न क्षमते । जलध्यादौ तूत्तरपदमेव, वडवानलादौ तु पूर्वपदमेव । यथाह—

'निरूढा लक्षणा काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तित ॥'

इति ।

वाक्यस्य यथा—

'सपदि पङ्क्तिविहंगमनामभृत्तनयसंवलितं बलशालिना ।
विपुलपर्वतवर्षिशितै शरै प्लवगसैन्यमुलूकजिता जितम् ॥'

पङ्क्तिरिति दशसंख्या लक्ष्यते । विहंगमोऽत्र पक्षवाचकनामभृतो रथा । दश रथा यस्य, तत्तनयौ रामलक्ष्मणौ उलूकजिता इन्द्रजिता कौशिक शब्देनेन्द्रोलूकयोरभिधानमिति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक उक्त ।

सविग्रहत्वादसमर्थत्वम् ।

पदस्य यथा—

'आलिङ्गितस्तत्र भवान्संपराये जयश्रिया ।
आशी परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥'

अत्र वन्द्यां किं हठहृतमहिलायां किं नमस्यामिति संदेह । यथा वा—

'कस्मिन्कर्मणि सामर्थ्यमस्य नोत्पद्यतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥'

अत्र 'भूतपूर्वे चरट्' इति चरप्रत्यये किं पूर्वं साधु, उत साधुषु चर तीति संदेह ।

क्वचिद्गुणो यथा—

'पद्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम् ।
कालेनैव कठोरेण ग्रस्तां किं नस्तदाशया ॥'

---

१ 'लक्ष्यते' का प्र २. अत्र वद ण' प्रकाशे ३ कुमारिलभट्टः ४ 'म हिलायां' प्रकाशे

अत्र विरहव्युरामा ग्रीष्मकाल उपनते किं ग्रीष्मवाची कालशब्द उत मृत्युवाचीति संदेहकारीदं वचनं युवानमाकुलीकर्तुं प्रयुक्तमिति ।

वाक्यस्य यथा—

'सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यते ॥'

अत्र किं सुरादिशब्दा देवसेनाशरविभूत्यर्थाः । उत मदिरापर्या इति संदेहः ।

क्वचिद्गुणो यथा—

'पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥'

अत्र वाच्यमहिम्ना नियतार्थप्रतिपत्तिकारित्वे व्याजस्तुतिपर्यवसायित्वा गुणत्वम् ।

अनुचितार्थत्वं पदस्य यथा—

'तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥'

अत्र पशुपदं कातरतामभिव्यनक्तीति अनुचितार्थम् ।

यथा वा उपमायाम्—

'क्वचिदग्रे प्रसरता क्वचिदापत्य निम्नताम् ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥'

तथा—

'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ।'

'अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान्ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥'

---

मृत्युवाचीति । एवमन्यदपि बोद्धव्यम् । पृथुकार्तस्वरेति । पृथुकाः बालकाः तेषां आर्तः स्वरः तेषां पात्रम्, पृथूनि कार्तस्वरस्य सुवर्णस्य भाजनानि च यत्र । भूषि भूषितः ... । विलसत्करेणुगहनमिति पांसुभिर्गहनम् विलसन्तीभिः करे

'पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥'

एषु व्याद्युपमानानां जातिप्रमाणगता हीनताधिकता चेत्यनुचितार्थत्वम् । निन्दायां प्रोत्साहने च न दोषः । यथा—

'चतुरसखीजनवचनैरतिवाहितवासरा विनोदेन ।
निशि चण्डाल इवायं मारयति वियोगिनीश्चन्द्रः ॥'

इति ।

'विशन्तु वृष्णयः शीघ्रं रुद्रा इव महौजसः ।'

इति च ।

यथा वा उत्प्रेक्षायाम्—

'दिवाकराद्रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥'

अत्राचेतनस्य तमसस्तात्त्विकेन रूपेण दिवाकरात्त्रास एव न संभवति, कुत एव तत्प्रयोजितमद्रिपरित्राणम् । संभावितेन तु रूपेण प्रतिभासमानस्य न काचिदनुपपत्तिरवतरतीत्यनुचितैव तत्समर्थना ।

वाक्यस्य यथा—

'कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥'

अत्र कुविन्दादिशब्दास्तन्तुवायादिमभिदधाना उपश्लोक्यमानस्य तिरस्कारं व्यञ्जयन्तीत्यनुचितार्थम् ।

परुषवर्णत्वं श्रुतिकटुत्वम् ।

पदस्य यथा—

'अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥'

अत्र कार्तार्थ्यमिति ।

१ 'दिशि' प्रथमोऽपि स्यात्.

भावस्य यथा—

'मधुरमधुरयति कपोलयोस्ते कान्तिद्रव प्राग्विसर्द श्रशाङ्क ।'

अत्र मण्डिद्रागादीनि पदानि श्रुतिकटूनि ।

वक्त्रौचित्ये गुणो यथा—

'दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद्यत्र संनिहिते न ते ॥'

अत्र वैयाकरणो वक्ता ।

'यदा त्वामहमद्राक्षं पदविद्याविशारदैः ।
उपाध्यायं तदास्मार्षं समस्प्राक्षं च संमदम् ॥'

अत्र वैयाकरणः प्रतिपाद्यः ।

'मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुका
सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः
सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥'

अत्र सिंहे वाच्ये परुषाः शब्दाः ।

'अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयत्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥'

अत्र बीभत्से व्यङ्ग्ये ।

'रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वाताभिभूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥'

अत्र शिरोधूननेन कुपितस्य वचसि प्रक्रान्ते ॥

---

१ 'दम' प्रकाशे　२. पुर प्रकाशे　३ प्राग्भारघोरोल्लस- प्रकाशे

कष्टिमीरसे न गुणो न दोषः । यथा—

'शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषा
न्दीर्घाघ्रातानघौघै पुनरपि घटयत्येक उल्लाघयन्यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते
र्दत्तार्घाः सिद्धसघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥'

व्यवहितार्थप्रत्ययजनकत्वं क्लिष्टत्वम् ।

पदस्य यथा—

'दक्षात्मजादयितवल्लभवेदिकानां
ज्योत्स्नाजुषां जललवास्तरलं पतन्ति ।'

दक्षात्मजास्तारास्तासां दयितश्चन्द्रस्तस्य वल्लभा कान्तास्तद्वेदिका नामिति ।

झगित्यर्थप्रतीतौ गुणः । यथा—

'काञ्चीगुणस्थानमनिन्दितायाः' ।

वाक्यस्य यथा—

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥'

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यति इति संबन्धे क्लिष्टत्वम् ॥

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयोंऽशो यत्र तस्य भावोऽविमृष्टवि-
धेयांशत्वम् ।

कृमि त्यादौ च । प्राधार. ऐक । उल्लाघयन् आरोग्यं नयन् । दक्षात्मजेति । अत्रैकपदप्रसाध्योऽप्यर्थोऽनेकपदप्रसाध्य इति अर्थप्रतिपत्तौ व्यवहितत्वेन क्लिश्यमानो वाक्यस्य क्लिष्टतामावहति । काञ्चीगुणस्थान मिति । अत्र रशनाद्यर्थान्तरपदार्थप्रत्ययमन्तरेणैव एकपदार्थप्रतीतिरिति नैव

१ 'उल्लाघन' पाठ. २ 'क्लिष्टता' पाठ.

पदस्य यथा—

'वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥'

अत्रालक्षितत्वं नानुवाद्यम्, अपि तु विधेयमिति 'अलक्षिता जनिः' इति वाच्यम् । यथा—

'स्रस्तां नितम्बादवलम्बमानां पुनः पुनः केसरपुष्पकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥'

अत्र 'मौर्वीं द्वितीयामिव' इति द्वितीयात्वमात्रमुत्प्रेक्ष्यम् । यथा च—

'तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।
स्वं च संहितममोघसायकं व्याजहार हरसूनुसंनिभः ॥'

अत्र सायकानुवादेनामोघत्वं विधेयम् । 'अमोघमाशुगम्' इति तु युक्तः पाठः । यथा च—

'मध्येव्योम त्रिशङ्कोः शतमुखविमुखः सर्गसर्गं चकार ।'

इत्यत्र हि व्योमैव प्राधान्येन विवक्षितम्, न तन्मध्यम् । तेन 'मध्ये व्योम्न' इति युक्तम् । यथा वा—

'वाच्या वैचित्र्यरचनाचारुवाचस्ततेरपि ।
दुर्वचं वचनं तेन बहु तत्रास्त्यनुक्तवान् ॥'

अत्र नोक्तवानिति निषेधो विधेयः । यथा—

'नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः'

इत्यादौ । न चानुक्तवत्त्वानुवादेनान्यदत्र किंचिद्विहितम् । यथा—

---

क्षितम् । व्योमैव प्राधान्येनेति । अत्र विश्वामित्रस्य तपःप्रभावप्रकर्षः प्रस्तुतः । स च तस्य निरुपकरणस्य सतः शून्ये व्योमनि सर्गसर्गसामर्थ्येनैव प्रतिपादितो भवतीति व्योमैव प्राधान्येन विवक्षितम्, न तन्मध्यम् । निषेधो विधेय इति । प्रसज्यप्रतिषेधत्वादित्यर्थः । यदुक्तम्— अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रस

---

१ 'सुचवाङ्ग' प्रकाशे

---

१ 'घ्रत्ये पात,

'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ॥'

अत्रात्रस्त इत्यनुवादेनात्मनो गोपनादि ।

वाक्यस्य यथा—

'शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितसर्वसम्यविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥'

अत्र शाद्वलानुवादेन शय्यादीनि विधेयानि । अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषः, न वाक्यार्थस्य । एवं विध्यनुवादौ कर्तव्यौ—

---

प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ नञ्समासस्तत्रानुपपन्नः । तत्र हि पर्युदास एव विषयत्वेन विशेषणत्वाद्धर्मस्य धर्म्यन्तेनोत्तरपदेन संबन्धोपपत्तेः । यदाह—'प्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥' न च पर्युदासाश्रयणं युक्तम् अर्थस्यासंगतिप्रसङ्गात् । तत्प्रकारप्रतिषेधो ह्यत्राभिमतः नानुपपन्नविधिः । तस्मादस्य नञो विधेयार्थनिष्ठतया प्राधान्यस्यानुपमानार्थपरतया तद्विपरीततया उत्तरपदार्थेन सह समासनिरतस्यैव पतितेन वृत्तिर्नेष्यत एवेति स्थितम् । यदाह—'अमर्षस्य विधेयत्वे निषेधस्य विपर्यये । समासे नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः' ॥' इति ॥ शय्यादीनि विधेयानीति । यदाह—'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् । न ह्यलब्धास्पदं किंचित्कुत्रचित्प्रतितिष्ठति ॥' विधेयोऽरचमायोऽयं स्यादरचनाप्रमाणम् । न तत्र विधेयोक्तिरस्त्यास्तूपीमिष्यते ॥' न च शाद्वलं शय्या शुचिशिला आसनम्' इत्येवं विपर्ययेणात्र संबन्धः करिष्यते तस्य पुरुषाधीनत्वात् । तथा च न कश्चिद्दोषो भविष्यतीति । तदसत् । एवं हि विषयोऽयं संबन्धस्य पुरुषाधीनत्वोपगमः । तस्य हि विशेषणविशेष्यभाव एव विषयोऽवगन्तव्यो यत्र सामर्थ्यादेव तयोरन्योन्याक्षेपः न विध्यनुवादभावः । यदाह—यद्वं चेति । विध्यनुवादयोर्वैपरीत्येन पदार्थसंबन्धविपर्ययोऽर्थप्रतीतिक्रम इति च

१ शाद्वलपदं' स्यात्.

---

१ 'नः' स्यात्. २ 'अभावतः । न हि तत्र' स्यात्. ३ 'मनु' स्यात्. ४ 'न' स्यात्. ५. 'एवं चेति' स्यात्.

दभिधेयार्थविषयत्वेनेष्टत्वात्, तयोश्च परस्परापेक्षया संबन्धस्य नित्यत्वात् ।
अत एवाहुः—'यत्तदोर्नित्यमभिसंबन्धः' इति ।

स चायमनयोरुपक्रमो द्विविधः—शाब्दश्चार्थश्चेति ।

तयोरुभयोरुपादाने सति शाब्दो यथा—

'यदुवाच न तन्मिथ्या यद्ददौ न जहार तत् ।'

तथा च—

'स दुर्मतिः श्रेयसि यस्य नादरः स पूज्यकर्मा सुहृदां शृणोति यः ।'
इति ।

एकतरस्योपादाने सत्यार्थः, तदितरस्यार्थसामर्थ्येनाक्षेपात् ।

तत्र तदः केवलस्योपादाने आर्थः प्रसिद्धानुभूतप्रक्रान्तविषयतया त्रिविधः ।

तत्र प्रसिद्धार्थविषयो यथा—'द्वयं गतम्—' इत्यादि ।

अनुभूतविषयो यथा—'ते लोचने प्रतिदिशं विधुरे क्षिपन्ती' इति ।

प्रक्रान्तविषयो यथा—

'कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥'

यदः पुनरुत्तरवाक्यार्थगतत्वेनैवोपात्तस्यार्थसंबन्धः संभवति, पूर्ववाक्यगतस्य तच्छब्दस्यार्थादाक्षेपस्तु ।

यथा—

'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥'

प्रागुपात्तस्य यच्छब्दस्य तच्छब्दोपादानं विना साकाङ्क्षतैव । यथात्रैव श्लोके आद्यपादयोर्विपर्यये ।

क्वचिदनुपात्तमपि द्वयं सामर्थ्याद्गम्यते ।

यथा—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैष यत्नः ।

---

मीलितमिति) । ये नाम केचिदिति । नामशब्दोऽक्षमायाम् । यदुक्तम्—

उत्पत्स्यते तु मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥'

अत्र स कोऽप्युत्पत्स्यते यं प्रति यत्नो मे सफलो भविष्यतीत्युभयोरपि अर्थादाक्षेप ॥ एवं च स्थिते तच्छन्दानुपादानेऽत्र साकाङ्क्षत्वम् ।

न चासावित्यस्य तच्छन्दार्थत्वं युक्तम् । यथा—

'असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणी ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागत ॥'

अत्र हि न तच्छन्दार्थे प्रतीति । प्रतीतौ वा—

'यस्य प्रकोपशिखिना परिदीपितोऽभू-
दुत्फुल्लकिंशुकतरुप्रतिमो मनोभूः ।
योऽसौ जगत्त्रयलयस्थितिसर्गहेतु
पायात्स वः शशिकलाकलितावतंसः ॥'

अत्र स इति पौनरुक्त्यं स्यात् ।

---

'नाम कृतप्रसभनिपातामर्षप्रीतिसंबन्धाभूतानवसंभावनाद्यु । ये केचिदिह प्रबन्धे देश कस्के यस्मात्प्रथमां कुर्वन्ति ते किमपि कार्यं किंचिल्लोकोत्तरं वा जानन्ति तान् प्रति नैष प्रकरणनिर्माणविषयो यत्न तेषां लोकवर्जितत्वात् । लोकोत्तरं येनानन्दीति ज्ञानार्थ(?)तत्स्वानुपहासाय । कम्प्रति तर्हीत्याह—उत्पत्स्यते त्विति । सारे तदभिप्रायज्ञ उत्पत्स्यते कश्चिदिति संभाव्यते ॥ एवमिति । तथा हि—सर्वेषामेव समस्तप्रधानानां प्रायेण विशेषणविशेष्याभिधायिपदोपरचितशरीरत्वं नाम सामान्यं लक्षणमास्थते । इतरथा तेषां समर्थत्वानुपपत्तेः । स च विशेषणविशेष्यभावो द्विधैव संभवति—समानाधिकरणो व्यधिकरणश्चेति । तत्राद्य कर्मधारयस्य विषय । यत्र तु द्वे बहूनि वा सामान्यस्य पदस्यार्थे विशेषणभावं भजन्ति स बहुव्रीहेः सरणि । तत्रैव यदा संख्यायाः प्रतिषेधस्य च विशेषणभावो भवेत्तदा द्विगोर्नञ्समासस्य च गोचर । द्वितीय प्रकार कारकाणां संबन्धस्य च विशेषणत्वानुविध स तत्पुरुषस्य पन्था । तत्रापि पञ्चम्यर्थस्य विशेषणता यत्तत्सामान्यपीनाथस्य परामर्शः । तदेवं समासानां विशेष

1 'तेऽर्थित' इति मालतीमाधव-काव्यप्रकाशयोः ॥ २. योऽसौ कुत्र चम-त्कुताद्यश्लोक इति ३ 'व्यापिप्रतीतिः' प्रकाशे

---

१ 'ये जानन्ति' इति स्यात्,

यामेव कृतं तदेव कुरुते द्रोण्यस्त्रमग्र्यं कोपनः ॥' रामेणेति रामस्य कर्तृभावेन करणं प्रति यद्विशेषणत्वं तत्तस्य रावणवधातिरेकात्मकमुत्कर्षं प्रकृतरसपरिपोषपर्यवसायिनं समर्पयति । तस्य निरतिशयशौर्यधैर्यगाम्भीर्यप्रसिद्धत्वेन वीरवरनैपुण्यप्रतीत्या च प्रसिद्धेः । तेन तत्प्राधान्यात् विशेष्येण सह समासे गुणतां नीतं कर्त्रादेः कारकस्यानेकस्य समर्पितकथा विशेषणभावेन पदुपधाने स द्वन्द्वस्य विषय इति तत्सारूप्यनिरूपणपर एव तस्य प्राधान्यमप्राधान्यं चाभिधास्यत इति न तदुदाहरणमिहोपदर्शितम् । यदपि विरुद्धद्वारमप्युदाहरणं तस्य विशेषणविशेष्यभावतुल्यकक्ष्यतया तत्समानत्वात्ततो यथावदनात् । प्रत्युदाहरणं यथा— 'यस्यायमयं गुरुस्तमिमं कुमारं हिंस्रोऽपि राम इति नाम यस्य हन्ता ।' इति । कर्मणो यथा—'कुलककुपितैर्दुष्पाम्भोभिः शरैरेव विश्लेषितर्दयममपि यता यस्य प्रीत्या मृतापि तथा त्वया । नयनकमलरसामाः यस्य स्त्रियो भवती विना कथमिहृदयो जीवत्येव प्रिये स तव प्रियः ॥' अत्र नयनमिति नयनकमलयाया सीताविशेषणभूताया कर्मभावेन विशेषणं तत्तस्या रामप्रीतिप्रकर्षं पुष्णाया अन्यदुर्लभमहेश्वदुर्लभं दुष्करमिति नामोत्कर्षमर्पयति । नयनसंपुटकत्वाद्वि कल्पनात् । स चोत्कर्षो रामस्य रावणदीपकतो भविष्यत इति प्रयाणं न गतेनैवेन सह समासे कविना तिरस्कृतम् । यथा च—'गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशा-दनवाप्य कामम् ।' इत्यत्र गुर्वर्थमित्यर्थिनोऽर्थक्रियामुखेन यद्विशेषणं तत्तस्य स्वाय-त्ताविषयाणामुद्वारेण रघोरुत्साहपरिपोषे पर्यवसन्नेति प्राधान्येन विवक्षितत्वादर्थिना सह समासे सत्यममत्तासमर्पकतां गमितम् । संवर्धितानां सुतनिर्विशेषमिति । प्रत्युदाहरणं यथा— 'प्रदक्षिणक्रियातीतस्तस्य कोपमजीजनत् ।' इति । 'तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।' इति । यथा— 'कामार्पितार्थिनाम्' इति । यथा— 'कालप्रबोधिनाम्' इति च । करणस्य यथा— 'आक्रोशमार्गं सहसा' इति । अत्र करणेति यत्कोपादृष्टकर्मकस्य संभाविता 'स्यात्पोयानस्य करणभावेन विशेषणं तत्तस्य कस्मादिदमपाहृत्यप्रदर्शनप्रकर्षरूपमतिशयं प्रतिपादयद्भूरयोरपसंपरम साधारणीममिव्यनक्ति । यद्दामेकपापान्यपानार्थिनी तापसीमपि कालकर्ष विभावयमानां मन्यमानया सततवासीनैर्वेन करणमेव रोषोऽप्यस्य न कृत्स्नेन तत्प्रयत्नमिति न च इत्यनेन समासेऽन्तमुपनीतम् । यथा च— 'कर्तुमशक्यमया मार्ग प्राणेश प्रसभेति यत् । सोऽयं यदि कार्त्स्न्येन समाक्रान्तप्रस्तावनम् ॥' इति । प्रत्युदाहरणं यथा—'पाशा लाटललितविवानि कम्पपरे को वासरानि परिमार्जयितुं समर्थः । इति । संप्रदानस्य यथा—'तीव्रस्यः कामपर चापत इति श्रुत्वा मनो मोदते दयो मेघ हरप्रसादपरशुस्तेनार्पितः ताम्यति । तद्वाक्यैः स दयाममो मम गिरा दत्ता द्विजे भ्यो मही तुभ्यं भूरि रणोत्सवनिषिद्धवोर्निर्जित किं दीयताम् ॥' अत्र द्विजेभ्य इति निर्जयपूर्वकस्य मार्गणकर्तृकस्य महीदानस्य संप्रदानत्वेन यद्विशेषणं तन्मयाः पाशस्य त्यागैकोत्कर्षमात्मप्राणदर्पातिरेकाभिव्यञ्जनेन दानवस्य कोपोद्दीपनपर्यवसायि

अथ—

'योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥'

इत्यादौ इदमदःप्रभृतयः शब्दाः तच्छब्दार्थमभिदधतीत्युच्यते । तर्हि यथादर्शनं व्यवहितानामेवोपादानं युज्यते । अव्यवहितत्वे हि प्रस्तुतविवराकाङ्क्षा भवत्येव । यथा—

'यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः—'

इत्यत्र ।

'सोऽयं घटः श्याम इति प्रसिद्धस्त्वया पुरस्तादुपयाचितो मे'
इत्यादौ च ।

अथ—

'स्मृतिभूः स्मृतिभूर्विहितो येनासौ रक्षतात्क्षतायुष्मान् ।'
इत्याद्यव्यवहितत्वेऽपि दृश्यते । तर्हि अत्रैव भिन्नविभक्तिकानां सोऽस्त्वित्यक्रमः ।

यथा वा—

'किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथ वा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥'

---

स्थानमासाम् । माधिक्याटम्बरे रविमविषविनीमावहन्मीदृग्वर्णा वाचो अमी मनारामपर इव गुरोऽहर्पतेपठपो च' ॥' इत्यादौ यथोक्ता पुन प्राधान्यमिपदानां वाक्यावाक्यर्त्तो दोष' । यथा— धीमद्बुद्धिजये समतुपपन्नं हेति प्रमाणेन्द्रपी द्वाराम स्यति चित्रकेलिरसधो वैर चित्र मन्यते । आस्ते वेदकमध्विजनीनिधव्यप्रचारवाप्य-तके संकल्पोपयतमलकृतिरसायतेन चित्तेन सा ॥ 'यद्रिकर्त्यमनेकप्राधान्येतरमा क्रिया । तत्रान्यपाठेन वाक्यापा तत्रापिरपरा पुनः ॥ इत्यन्तरश्लोकः । अयं च सम्य साधमाधविषय सूपकरणपरीक्षाव्यवसैकरक्षितया पदवाक्यविवेकावसरायेव प्रदर्शि

अत्रार्यस्येति तातस्येति च वाच्यम् । न त्वनयोः समासे गुणीभावः कार्यः । एवं समासान्तरेष्वप्युदाहार्यम् ॥

विरुद्धबुद्धिकृत्त्वं पदस्य यथा—

'गौरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहंकारः पायाद्वः सोऽम्बिकारमणः ॥'

अत्राम्बिकाया गौर्या रमण इति विवक्षितम्, मातृरमण इति विरुद्धां धियमुत्पादयति ।

यथा—

'सहस्राक्षैरक्षैर्नमसितरि नीलोत्पलमयी
विधारमानां मालामुपनयति पत्यौ दिविषदाम् ।
विशाखे च क्रीडारसरसिनि कुमारे सह गणै-
र्हसन्त्यो भ्राम्यन्तु भ्रमयतु मृडानीपरिवृढः ॥'

अत्र मृडानीपरिवृढ इति मृडान्याः पत्यन्तरे प्रतीतिं करोति ।

'चिरकालपरिप्राप्तिलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥'

अत्र कण्ठग्रहमिति वाच्यम् ।

वाक्यस्य यथा—

'अनुत्तमानुभावस्य परैरपिहितौजसः ।
अकार्यसुहृदोऽस्माकमपूर्वास्तव कीर्तयः ।'

अत्रापकारस्थानेष्वसमकार्येषु मित्रम् । अतः पूर्वो यासां ता अकीर्तय इति विरुद्धा प्रतीतिः । कस्मिंश्चिद्गुणो यथा—

'अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥'

अत्रानुशयमिति पश्चात्तापं कोपं च । अभिमना इति प्रसन्नमना

---

१ आर्योज इत्येतस्थाने 'आर्यस्यात्मजः' इति, तातकलत्रमित्यस्य स्थाने 'तातस्य कलत्रम्' इति वाच्यमित्यर्थः

निर्मयचित्तश्च । माननामिति पूर्वा निर्वहणं च । अत्र विपरीतार्थकल्पनाद्विरुद्धत्वेऽपि संध्यर्थविग्रहार्थयोः स्फुटमित्यार्थत्वेनाभिधामात्रत्वम् ॥

अथार्थदोषाः—

कष्टापुष्टव्याहतग्राम्याश्लीलसाकाङ्क्षसंदिग्धाक्रमपुनरुक्तभिन्नसहचरविरुद्धव्यङ्ग्यप्रसिद्धिविद्याविरुद्धत्यक्तपुनरात्तपरिवृत्तनियमानियमविशेषसामान्यविध्यनुवादत्वान्यर्थस्य ।

दोषा इति वर्तते ।

कष्टादगम्यत्वात्कष्टत्वमर्थस्य । यथा—

> 'सदामध्ये यासाममृतरसनिःस्यन्दसरस
> सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
> प्रसादं ता एता घनपरिचिताः के न महतां
> महाकाव्यव्योम्नि स्फुरितरुचिरा यान्तु रुचयः ॥'

यासां कविरुचीनां मतिभारूपाणां प्रमाणा मध्ये बहुमार्गा सुकुमारविचित्रमध्यमात्मकत्रिमार्गा सरस्वती भारती परिमलं चमत्कारं वहति, ताः कविरुचयो महाकाव्यव्योम्नि सर्गबन्धलक्षणे परिचयगता कथममिनेयका व्यक्तप्रसादं यान्तु । तथा यासामादित्यममार्णां मध्ये त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ॥

प्रकृतानुपयोगोऽपुष्टार्थत्वम् । यथा—

> 'तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् ।
> फालेन लङ्घयामास हनूमानेष सागरम् ॥'

अत्र तमालश्यामलत्वादयोऽनुपादानेऽपि प्रकृतमर्थं न बाधन्ते इत्यपुष्टाः । यथा वानुप्रासे—

> 'भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
> यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे ॥'

---

१ मिथममृतनिःस्यन्दसुरसा' प्रकाशे २ घनपरिचिताः केन प्रकाशे ३ स्फुरितमधुरा प्रकाशे

'अनणुरणन्मणिमेखलमविरतसिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥'

अत्र वर्णसावर्ण्यमात्रं न पुनर्वाच्यवैचित्र्यकणिका काचिदस्तीत्यपुष्टार्थत्वम् ॥

पूर्वापरव्याघातो व्याहतत्वम् । यथा—

'यदि शशुकुर्व हरस्व जय विधर्मरामिमाम् ।
न च ते कोऽपि विद्वेष्टा सर्वभूतानुकम्पिन ॥'

अत्र शत्रुवचो विद्वेष्यमावेन व्याहतं ॥

अवैदग्ध्यं ग्राम्यत्वम् । यथा—

'स्वपिति यावदयं निकटे जन, स्वपिमि तावदहं, किमपैति ते ।
इति निगद्य शनैरनुमेखलं मम करं स्वकरेण रुरोध सा ॥'

व्रीडादिव्यञ्जकत्वमश्लीलत्वम् । यथा—

'हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिण ।
यथाशु जायते पातो न तथा पुनरुन्नति ॥'

एतद्वाक्यं खलेषु प्रयुज्यमानं चेतसि प्रतीतिं जनयति । इहान्वयव्यतिरेकाभ्यामर्थस्यैवाश्लीलत्वं पूर्वत्र तु पदवाक्ययोरिति विवेक ॥

साकाङ्क्षत्वम् । यथा—

'अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्ति' प्रभो, प्रत्युत
द्रुह्यन्दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य, मानयशसोर्विस्रंसनं चात्मन,
स्त्रीरत्नं च जगत्पतिर्दशमुखो देव कथं मृष्यते ॥'

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति न हि परस्येत्यनेन सम्बन्धो योग्य ।

यथा च—

'गृहीतं येनासी' परिभवभयान्नोचितमपि,
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषय ।

तोऽपि सहृदयैः स्वयमेव तद्विवेकेन परामर्शनीय ॥ स्वपितीति । निद्राति ॥

१ ऽस्त्र प्रभ्रष्टे　२ 'सी प्रभष्टे

परित्यक्ते तेन त्वमसि सुतशोकान्न तु मया
विमोक्ष्ये शल्य त्वामहमपि यत स्त्रि भवते ॥'

यत इति तत इत्यत्रार्थे । अत्र शल्यमोचन हेतुमाकाङ्क्षति । यत्र त्वाकाङ्क्षा नास्ति तत्र न दोष । यथा—

'चन्द्रं गता पद्मगुणान्न भुङ्क्ते, पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मी' ॥'

अत्र रात्रौ पद्मस्य संकोच , दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति 'न भुङ्क्ते' इति हेतु नापेक्षते ॥

संशयहेतुत्वं संदिग्धत्वम् । यथा—

'मात्सर्यमुत्सार्य विचार्य कार्यमार्या समर्यादमुदाहरन्तु ।
सेव्या नितम्बा किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥'

अत्र प्रकरणाद्यभावे संदेह , (शान्तशृङ्गार्यन्यतराभिधाने तु निश्चय ) ॥

प्रधानस्यार्थस्य पूर्वं निर्देश क्रमस्तदभावोऽक्रमत्वम् । यथा—

'तुरगमथ वा मातङ्गं मे प्रयच्छ मदालसम्—'

अत्र मातङ्गस्य प्राङ्निर्देशो न्याय्य । यदा तूदारसत्त्वो गुर्वादिर्वक्ता प्रमाणस्तुरगमित्यादि च भक्ति तदा न दोष ।

क्रमानुष्ठानाभावो व्याक्रमत्वम् । यथा—

'कोराविऊण सचरं गामउडो मज्जिऊण मिमिऊण ।
नक्खत्त तिहिवारे जोइसिओ पुच्छिओ चलिओ ॥'

कवितिशयोक्तौ गुणः । यथा—

'पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागर' ॥'

---

चपिमीति । कामये ॥ हेतुमाकाङ्क्षतीति । तेन निर्दिष्ट पृथक् वाच्य साक्षा

---

१. आरपित्वा क्षीरं ग्रामप्रहो मज्जित्वा भुक्त्वा च ।
नक्षत्रं तिथिवारौ ज्यौतिषिकं पृष्ट्वा चलित ॥' इति छाया.

२ 'जेमिऊण च' पाठ

यत्र उद्देशिनामनुद्देशिनां च क्रमभ्रंशोऽक्रमत्वम्। यथा—

'कीर्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ।'

इति। अत्र पदरचना विपरीतेति यथाक्रमलक्षणो वाक्यस्यैव दोषो न वाक्यार्थस्येति॥ द्विरभिधानं पुनरुक्तम्। यथा—

'प्रसाधितस्याथ मधुद्विषोऽभूदन्यैव लक्ष्मीरिति युक्तमेतत्।
वपुष्यशेषेऽखिललोककान्ता सानन्यकाम्या ह्युरसीतरा तु॥'

इत्युक्त्वैकार्थमेवाह।

'कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य।
आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः॥'

यथा वा—'अभ्रीयसंहतिभिरुन्नतशृङ्गराशि'।' अभ्रीयेति समूहार्थीया' प्रकृते' संहतेश्च पौनरुक्त्यम्। यथा—

'छायामपास्य महतीं परिवर्तमाना
मागामिनीं जगृहिरे जनतास्तरूणाम्।'

अत्र जनता इति तद्धितार्थस्य बहुवचनार्थस्य च। तथा—'पायात्स शीतकिरणाभरणो भवो वः।' अत्र विशेषणाद्विशेष्यप्रतिपत्तौ भव इत्यस्य। यत्र तु विशेषणाद्विशेष्यमात्रस्य प्रतीतिरपि तु तद्विशेषस्य तत्र पौनरुक्त्यमेव नास्ति। यथा—

'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये॥'

अत्र हरशब्दस्य। यथात्र कुसुमायुधोऽपीत्यस्माद्विशेष्योपादानमन्तरेणाप्युभयार्थप्रतिपत्तिस्तद्वदत्रापि भविष्यति। नैवम्। सत्सम्बुधनिर्देशेनैवास्य-र्थस्य विशेषस्य प्रतिपादितत्वात्।

एवं धनुर्ज्यादिपदेष्वपि विशेषप्रतिपत्तौ न पौनरुक्त्यम्। यदाह—

'धनुर्ज्याध्वनौ धनुःश्रुतिरारूढेः प्रतिपत्त्यै' इत्यादि। यथा—

'धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव।'

अत्र धनुःशब्दादारूढे प्रतिपत्तिः ।

'दोलाविलासेषु विलासिनीनां कर्णावतंसाः कलयन्ति कम्पम् ।'

'लीलाचलच्छ्रवणकुण्डलमापतन्ति ।'

'अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥'

एषु कर्णश्रवणशिरःशब्देभ्यः संनिधानस्य प्रतिपत्तिः ।

'प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।
मुक्ताहारेण हसता[1] हसतीव स्तनद्वयम् ॥'

अत्र मुक्ताशब्दाच्छुद्धिप्रतीतिः ।

'प्रायश्च पुष्पमालेव कन्यका कं न लोभयेत् ।' अत्र पुष्पशब्दादुत्कर्षप्रतीतिः । 'त्यज करिकलभ प्रेमबन्धं करिण्याः ।' अत्र करिशब्दस्तावाद्व्याप्यावगतिः । यत्र तु न विशेषप्रतिपत्तिर्यथा—'ज्यामन्थनिष्पन्दभुजेन यस्य' इति, 'भवाविन्द्राभ कुण्डले' इति, 'पाण्ड्योऽयमंसार्पितलम्बहारः' इति, 'मालाकार इवारामे' इति, 'कल्पेषु वर्षेषु सुखं कलमाः प्रयान्ति' । इति च, तत्र केवला एव ज्यादिशब्दाः, न च नितम्बकाञ्चीमौलिकरमादिषु तथा प्रसङ्गः । तेषां कविभिरप्रयुक्तत्वात् । संकेतव्यवहाराभ्यां हि शब्दार्थनिश्चय इति । कविरूढो यथा—

'माला श्रियः सकलकामदुघास्तव किं
दत्तं पदं शिरसि विद्विषतां सतः किम् ।

---

एताभ्यामर्थाभ्यामिति ॥ धनुःशब्दादिति । अन्यथा ज्याकिणचिह्नेन दोर्दण्डयुगेऽन्य-रतरलकर्णनाडितकिणसमर्पितत्व दोष्णो न प्रतीयेत । वैरूप्यमापेऽन्यमूलतया अथवा ज्याकिणचिह्नस्य संभवात् ॥ कर्णेति । विलासिनीनामर्थं प्रतिनियतदेशसंनिहितैः रमतेः प्रयोजनमिति तदर्थं प्रयुक्तेभ्य इत्यर्थः ॥ मुक्ताशब्दादिति । तत्र हि यस्य स्तनद्वयकर्तृकस्य हासस्य धावल्यधवलत्वप्रतिपत्तये साधकतमस्य हारस्य केवल-मुक्तात्वेनैतत्प्रतीत्यर्थं प्रयुक्तत्वात् ॥ पुष्पशब्दादिति । विरहिजनप्रलोभिन्ये मधुसमयकस्यालोभ्यमानभावेन मालया उपमानमुत्कृष्टपुष्पचितत्वगमनाय प्रयुक्तानि

---

[1] 'लसता' प्रकाशे

संप्रीणिता प्रणयिनो विभवैस्तव किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥'

अत्र हि निर्वेदपारवश्येन वक्तुरियमुक्तिः प्रस्तुतरसपोषाय ।
यदाह—

'वक्ता हर्षभयादिभिराक्षिप्तमनास्तथा स्तुवन्निन्दन् ।
यत्पदमसकृद्ब्रूते तत्पुनरुक्तं न दोषाय ॥'

इति ।

उचितसहचारिभेदो भिन्नसहचरत्वम् । यथा—

'श्रुतेन बुद्धिर्व्यसनेन मूर्खता, मदेन नारी, सलिलेन निम्नगा ।
निशा शशाङ्केन, धृतिः समाधिना, नयेन चालङ्क्रियते नरेन्द्रता ॥'

अत्र श्रुतबुद्धयादिभिरुत्कृष्टैः सहचरैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ।
विरुद्धं व्यङ्ग्यं यस्य तद्भावो विरुद्धव्यङ्ग्यत्वम् । यथा—

'इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥'

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् । 'तव रागाय[1] तथा—' इति ।
अत्र विदितं तेऽस्त्वित्यनेन श्रीस्त्वामपसरतीति विरुद्धं व्यज्यते ॥

प्रसिद्धया विद्यामिश्च विरुद्धत्वम्, तत्र प्रसिद्धिविरुद्धत्वम् । यथा—

'उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥'

अत्र पादाघातेनाशोकस्य पुष्पोद्गम एव कविषु प्रसिद्धो नाङ्कुरोद्गमः ।

---

1 'संतापिताः' प्रकाशे

यथा वानुप्रासे—

'चक्री चकारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्ता
नृक्षं नक्षत्रनाथोऽरुणमपि वरुणस्तुम्बरामं कुबेरः।
रङ्‌ सघ सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः॥'

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव कृता न पुराणादिषु तथा प्रतीता। कदाचिच्चक्रिणश्चकारप्रियत्वं समाम्नेयापि तु उत्तराणि तु न तथा संगच्छन्ते इति प्रसिद्धिविरोध।

यथा चोपमायाम्—'प्रणमामि काव्यशशिनं विततार्थरश्मिम्।' अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं न प्रसिद्धम्। तथा—

'चकास्ति वदनस्यान्तः स्मितच्छाया विकासिनः।
उन्निद्रस्यारविन्दस्य मध्यगा चन्द्रिका यथा॥'

अत्र मध्यगतचन्द्रिकयारविन्दस्योन्निद्रत्वमसंभवमिति प्रसिद्धिविरुद्धत्वम्।

कलाचतुर्वर्गशास्त्राणि विद्या। कलाश्च गीतनृत्यचित्रकर्मादिकाः। तत्र गीतविरुद्धत्वम्। यथा—

'श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम्।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय॥'

श्रुतिसमधिकमिति। श्रुत्या समधिकं पञ्चमश्रुतिकमित्यर्थः। पीडयन्त इति श्रुतिह्रासेनात्मीकुर्वन्त इत्यर्थः। भिन्नकीकृत्य षड्जमिति। भिन्नषड्जं कृत्वेत्यर्थः। प्रातःकाले भिन्नषड्जो गेय इत्याम्नायात्। अत्र भिन्नषड्जेन माधवी(गवी) गीतिरुपनिबद्धा। तस्यां च पञ्चमस्य न्यासभवदसंभव एव दूरे पुनः श्रुतिसमधिकत्वम्। यतो भिन्नषड्जस्येदं लक्षणम्—'धांशस्तु धैवतन्यासः पञ्चमर्षभवर्जितः। षड्जोदीच्यवती जातेर्भिन्नषड्ज उदाहृतः॥'

अर्थः॥ धांश इति। धैवतांश इत्यर्थः। षड्जोदीच्यवती जातेरिति। जातयो

एवं कलान्तरेष्वप्युदाहार्यम् ।

चतुर्वर्गे धर्मशास्त्रविरुद्धत्वं यथा—

'सततं स राजसूयैरीजे विप्रोऽश्वमेधैश्च ।'

अत्र विप्र इति । क्षत्रियस्य हि तत्राधिकारः ।

अर्थशास्त्रविरुद्धत्वं यथा—

'अहंकारेण जीयन्ते द्विषन्तः किं नयश्रिया ।'

द्विषज्जयस्य हि नयमूलत्वं स्थितं दण्डनीतौ ।

कामशास्त्रविरुद्धत्वं यथा—

'तवोत्तरोष्ठे बिम्बोष्ठि दशनाङ्को विराजते ।'

उत्तरोष्ठमन्तर्मुखं नयनान्तं च मुक्त्वा चुम्बनवद्दशनस्थानानि इति हि कामशास्त्रे स्थितम् ।

मोक्षशास्त्रविरुद्धत्वं यथा—

'देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसंपदः ।'

एतस्यार्थस्य मोक्षशास्त्रेऽस्थितत्वाद्विरुद्धत्वम् ॥

त्यक्तपुनरात्तत्वम् । यथा—'कर्म रागावृताङ्ग्या—' इति । अत्र विदितं तेऽस्त्वित्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः ।

क्वचिद्गुणः —

'क्षीराब्धेरमृतच्छटा यदि करा कस्मान्मनो मे भृशं
संपुष्णात्यथ कालकूटपटलीसंवाससंदूषिताः ।

---

[illegible]। तथा हि मुनिः —'षाड्जी चैवार्षभी चैव धैवत्यथ निषादिनी। षड्जोदीच्यवती चैव तथा स्यात्षड्जकैशिकी ॥ स्यात्षड्जमध्यमा चैव षड्जग्रामसमाश्रयाः। अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयान् ॥ गान्धारी मध्यमा चैव गान्धारोदीच्यवा तथा । पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ॥ मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च। कर्मारवी च विज्ञेया तथान्ध्री कैशिकी मता ॥' एतेषामेकस्या वा षड्जोदीच्यवती जाति[illegible] ॥ कलान्तरेष्वप्युदाहार्यमिति । तत्र चित्रकलाविरोधो यथा—'[illegible] लिखितमिदं वयस्य पार्श्वं [illegible]' '[illegible] पति[illegible]' इति [illegible] । एवं कलान्तरेष्वप्यूह्यम् ॥ क्षत्रियस्य हीति । तथा च स्मृतिः—'राजा राजसूयेन स्वाराज्यकामो यजेत । राजा सर्वतो विजयी अश्वमेधेन यजेत' इति ॥ देवताभक्तित इति । चतुर्विधा भजन्ते मां जनाः सुकृ-

किं प्राणान्न हरन्त्यतिप्रियतमासंजल्पमात्राक्षरे
रक्ष्यन्ते किमु मोहमेमि हहहा नो वेद्मि का मे गतिः ॥'

अत्र ससंदेहालंकारस्त्यक्त्वा त्यक्त्वा पुनरुपात्तो रसपरिपोषाय ॥

परिवृत्तौ विनियोजितौ नियमानियमौ सामान्यविशेषौ विध्यनुवादौ च यत्र । तद्भावस्त्वम् ।

तत्र परिवृत्तो नियमोऽनियमेन । यथा—

'यत्रानुल्लिखिताक्षमेव निखिलं निर्माणमेतद्विधे
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्संपद
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥'

अत्र 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति नियमे वाच्ये तस्याभासेत्यनियम उक्तः ।

परिवृत्तौ नियमोऽनियमेन । यथा—

'वक्त्राम्भोजे सरस्वत्यधिवसति सदा, शोण एवाधरस्ते,
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं,
स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥'

अत्र शोण इत्यनियमे वाच्ये शोण एवेति नियम उक्तः ।

---

शिवः सदा । जातौ त्रिपुरपांथौ ज्ञानी च भरतर्षभ । तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥ इत्युक्तमीशा ज्ञानिस्थेन एक भक्तिः । सा मम विवक्षिता । अपि त्वा- त्तत्वाभिमिलितस्या ॥ अनुल्लिखितासमिति । अवशिष्टमाकारम् ॥

इति श्रीहेमचन्द्राचार्यविरचिते विवेके तृतीयोऽध्यायः ।

---

१ 'पार्श्वमे' प्रकाशे २. 'वक्त्राम्भोजे च' प्रकाशे

१ पार्श्वमे' प्रकाशे

परिवृत्तं सामान्यं विशेषेण। यथा—

'कल्लोलवेल्लितदृषत्परुषप्रहारै
　　रत्नान्यमूनि मकराकर मावमंस्था।
किं कौस्तुभेन विहितो भवतो न नाम
　　याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि॥'

अत्र 'एकेन किं न विहितो भवतः स नाम' इति सामान्ये वाच्ये कौस्तुभेनेति विशेष उक्तः।

परिवृत्तो विशेषः सामान्येन। यथा—

'श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
　　र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम्।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
　　येन द्रष्टुमहं क्षमो दश दिशस्तद्वक्त्रमुद्राङ्किताः॥'

अत्र ज्योत्स्नामिति विशेषे वाच्ये श्यामामिति सामान्यमुक्तम्।

परिवृत्तो विधिरनुवादेन। यथा—

'अरे रामाहस्ताभरण भसुपश्रेणिशरण
　　स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
　　सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना॥'

अत्र विधौ वाच्ये विरहिप्राणदमनेति अनुवाद उक्तः।

परिवृत्तोऽनुवादो विधिना। यथा—

'प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा
　　मकेशवमपाण्डवं भुवनमद्य निःसोमकम्।
इयं परिसमाप्यते रणकथाद्य दोःशालिना
　　मपैतु रिपुकाननातिगुरुरद्य भारो भुवः॥'

अत्र शयित इत्यनुवादे वाच्ये शेषे इति विधिरुक्तः। प्रयत्नेन परिबो

१ 'मकराकर' प्रकाशे　२ 'नाम' प्रकाशे　३ 'हरत श्वेतो' प्रकाशे

न्यसे इति विधौ वाच्ये परिमोषित इत्युक्तमिति परिवृत्तविधेयत्वमपि । अत्र चान्वर्थमत्वादेवाविगते पदादिदोषाणां विशेषलक्षणं न प्रणीतम् ॥

अथापवादानाह—

नानुकरणे ।

दोषा इत्यनुवर्तते । अनुकरणविषये निरर्थकादयः शब्दार्थदोषा न भवन्ति । उदाहरणं प्रागेव प्रदर्शितम् ॥

वक्त्राद्यौचित्ये च ।

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना न दोषो न गुणः । तथोदाहृतम् ॥

क्वचिद्गुणः ।

वक्त्राद्यौचित्ये क्वचिद्गुण एव । तथैवोदाहृतम् ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ दोषविवेको नाम तृतीयोऽध्यायः ।

चतुर्थोऽध्यायः ।

सगुणौ शब्दार्थौ काव्यमित्युक्तम् । गुणानां च रसोत्कर्षहेतुत्वं सामान्यलक्षणं प्रतिपादितम् । इदानीं तद्भेदानाह—

माधुर्यौजःप्रसादास्त्रयो गुणाः ।

त्रयो न तु पञ्च दश वा, लक्षणस्य व्यभिचारादुच्यमानगुणेष्वेवान्तर्भावात्, दोषपरिहारेण स्वीकृतत्वाच्च । गुणा इति रसस्य गुणाः शब्दार्थयोस्तु भक्त्या इत्युक्तमेव ।

न तु दश पञ्च वेति । अयं भावः—माधुर्यौजःप्रसादा एव गुणाः, ते च गुणस्वरूपा रससंबन्धेति प्राक् सामान्यलक्षणे निर्णीतम् । तत्रैवैते शब्दार्थोभयवृत्तेनान्ये च गुणा यत्नेन प्रतिपाद्यन्ते तत्र युक्तमिति । तथा हि— 'ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणा दश' इति केचित् । तत्र अवनीतस्य

1 टीकायां तु 'दश पञ्च वा' इत्युपलभ्यते व्याख्यायते च तेनैव क्रमेण, तस्मात् 'पञ्च दश' इति पाठे लेखकप्रमादजो भवेत्.

1 मूले तु 'पञ्च दश वा' इत्युपलभ्यते

विभक्तवाच्यवाचकयोरप्यनुरूपयोरपि शब्दार्थयोः प्रतिपत्तिः प्रसाद इति भरतः । यत्पु-
नरिह तदर्थव्यक्तिरिति शब्दार्थयोर्भेदपम् । यथा— 'यस्यात्युरतिगम्भीरजलप्रतिबिं-
बकम् । स वः करोतु निःशङ्कुशत्वं प्रतिभङ्गुरम् ॥' एवं विशेषणपदा विशेष्यपदात्तु
क्लिष्टिरिति वामनीयाः । तस्मात् 'वैमल्यं प्रसादः' । ओजोविपर्ययात्मा धर्मो गुण इति ।
गाढत्वसंपृक्तं शैथिल्यमेव गुण इति चेत् । परस्परविरोधित्वाद्गाढत्वशैथिल्ययोः क-
थमेकत्र संनिवेशः संभवतीति । अनुभवादेव विरोधप्रतिषेध इति चेत् । यदाह—'क-
रुणप्रेक्षणीयेषु संभ्रमः सुखदुःखयोः । यथानुभवतः सिद्धस्तथैवौजःप्रसादयोः ॥' एवं
दृष्टान्तस्यैव तावत्सिद्धिः । दृष्टान्तविघातश्च दार्ष्टान्तिकमपि प्रतिहन्ति । तथा हि—सा-
माजिकजनो नाट्यकर्मणि करुणरसभावितचेताः प्रथमं दुःखाभिमानमयोपपत्त्यैवारवेण
च पश्चात्सुखमेति । ओजःप्रसादयोः पुनर्युगपदेवानुभवप्रसिद्धिः । यदि च तत्त्वं विवि-
च्यते तदा सर्वेषामपि रसानां प्रतीतिचमत्कारसारत्वात्सुखधर्मैवेति दृष्टान्त एव न संग-
च्छते । तस्माद्विश्वासहेतुः सर्वत्र प्रसाद इति । अर्थगुणस्तु 'वैमल्यं प्रसादः' इति ।
प्रयोजकमात्रपरिग्रहो हि वैमल्यम् । तथाविधपदत्वदोषनिराकरणस्वीकृतमेव ॥ 'स
मापयन्तं विचारमहत्तं वचः स्फुटम्' इति भरतः । 'क्षणं स्थिताः पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः । वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमो-
दबिन्दवः ॥' एवमभिधानाभिधेयव्यवहारे वैदर्भी न पुनः संदर्भधर्मः । एवमास्थया
हि पुनस्त्वार्थ्यमिति वामनीयाः । तस्मात् 'मसृणत्वं श्लेषः' । तदाह—यस्मिन् सति
बहून्यपि पदानि एकवद्भासन्ते स श्लेषः ॥ यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा'
इति । मसृणमसृणतारा(?) हि रीतिरैवासोपनिपातः । स चान्यतररसनिर्वाहे निवेश्यते ।
तस्मात् 'घटितं श्लिष्टम्' इति वैदर्भी ॥ यथा—'प्रेङ्खासमुदयमिनयाङ्गुपकर्म्य दर्प-
मम्भोदनादरभसान द्रवे मयूरः । सम्यग्गिरे सरलकण्ठमकण्ठकूजगुम्फाधिकीकृतपिक-
ध्वनमक्रम एव ॥' सोऽयमोजः प्रकार एव । मरकतपञ्जरसंहतेर्वा यदेवमित्युपेक्षणी-
यम् । यदा हि विविक्तमात्रियन्ते । यथा—'ओजस्विकासमसम्पत्तमिलिताक्षकपक्ष-
विलसमाम्लीमाप्य अकम्पनमिव पदु ॥' इति । अर्थगुणस्तु 'घटना श्लेषः' । क्रम-
कौटिल्यानुल्बणत्वोपपत्तियोगो हि घटना । यथा—'दृष्टैकासन-' इति । संविधानकमर्थ

१ भरते तु यथानुक्तो बुधैर्यत्र शब्दार्थः प्रतीयते । सुखशब्दार्थसंयोगात्प्रसा-
दः परिकीर्त्यते ॥ इति २ अत्र 'चेत्' इति भवेत्. ३ अत्र 'चेत्' इति न भवेत्.
४ अत्र 'चेत्' इति भवेत्. ५ अत्र 'चेत्' इति न स्यात्. ६ 'दुःखमिति पाठ-
भ्रमो' इति स्यात्. ७ वामनसूत्रे तु 'अर्थवैमल्यं' इत्युपलभ्यते. ८ भामपरि इति
वामनसूत्रवृत्तौ ९. भरते तु 'विचारमहतं यत्स्यात्स्फुटं चैव समासतः । यत्र प्रसि-
द्धिमद् च किंचित्तत्कीर्तितम् ॥' इति. १ 'स्थिताः क्षणं' इति कुमारसंभवे.
११. 'यत्रैकपदवद्भाव पदानां भूयसामपि । अनालक्षितसंधीनां स श्लेषः परमो गुणः ॥'
इति वामनसूत्रवृत्तौ १२. काव्यादर्शे तु 'श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम्' इति.

ऽवमतिसंबोधिविशेष इति वामनीयाः । तस्मात् आरोहावरोहक्रमः समाधिः ।[1] तत्रारोहपूर्वोऽवरोहो यथा—'सद्योत्खातमुखः क्रान्तमहीपालमण्डलं सर्वमयं भुवैक-चक्रमठगर्जितमयं कुद्धोऽस्मि भ्रकेसरी । संगीतासववक्षत्रमयतरमो प्रेक्षापराहारि च प्रेम स्कन्धविरम्भितं चकितयो कस्मान्मुखं स्मयति ॥' अवरोहपूर्व आरोहो यथा—'चतुर्मार्गमिर्वाणे गुरुस्तनकुसुमस्तबकत्रासाद्याम्यमोस्तम्भितामिर्दिशि दिशि सरितां दिग्जयप्रक्रमेषु । अम्भोयम्भीर क्रुद्धरवकल्लोलमुखिवर्यविकोलसंघ्योल्लसद्भुग-धनिचकितवनकुसुमं क्षमिमीमि ॥' तदिदं गुरुस्फुटंवबयोरन्योन्यान्तरमिति दण्डी । तस्मादन्यधर्मसाम्यत्र समाधानात्समाधिः । यथा— प्रतीच्छसारपोर्ण निसर्ग-चपरागतिमधरं कपोलः पाण्डुरत्वादवतरीरितालीपरमतिम् । परिम्लानप्रायमनुपदवि रतिः कमलिनीमिवीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥' शेषमुपचरितो व्रति-रिति चेद्गुणः योगरूपा किमपरद्धमिति ॥ अर्थगुणस्तु अर्थदृष्टिः समाधिः ।[2] यथा—'अभावपि मध्यावपि मूलवपि सर्वतोऽथ लोकस्य । पिशुनस्त्वमिव रहस्यं भवतश्चो निर्भेदं कुसुमम् ॥ अर्थस्य योनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यं स्यात् । तत्र एकस्थस्तवितः काव्यार्थं समाधिः स्यादिति नार्थगुणः समाधिः ॥ बहुशो यच्छ्रुतमभिहितं वाक्यमनुद्वेजकं मनसः तन्मधुरमिति भरतः । दमितजमर-वागरोपेक्षवचनेऽपि तत्समासममिति वामनीयाः । तस्मात् पृथक्पदत्वं माधुर्यम्' । त-दिदमनुभवविरुद्धमिति दण्डी । समासेऽपि माधुर्यस्य दर्शनात् । यथा— अनवरत नयनजललवनिपतनपरिमुषितपत्रलेखान्तम् । करतलनिषण्णमबले वदनमिदं कं न ताप-यति ॥ इति । तस्माद्रसवन्मधुरम् । रसस्तु द्विधा—··· । वाच्यस्तु शिवस्तोत्रे । तयोः श्रुतिवर्णानुप्रासाभ्यां वाच्यस्य । अनुप्रासो व्यञ्जकः । कर्ण रस गुणत्वम् । अग्राम्यार्थाभिधेयता तु मधुरस्य । असभ्यार्थाभिधानं हि ग्रा-म्यता । यथा— कन्यकावर्णयन्तोऽहं त्वं च कीदृग् कुमुदनी । अत्रे भवत मां तूर्णं तव दास्याम्यहं यत्नम् ॥ ग्रोमिलोम्नमायो न गुणः । एतेनोपविभिन्न रूपं माधुर्यं वामनोक्तोऽर्थगुणो निरस्त एव । तस्मादश्लाघ्यत्वं माधुर्यमिति ॥ सुखप्रयोज्यं सुकुमारमिति भरतः । यथा— अङ्गानि चन्दनरसपरिधूसराणि ताम्बूल-रागसुभगोऽधरपल्लवः । अच्छाञ्जने च नयने वसनं तनीयः कान्ताप्रभूषणमिदं विभ-वावशेषः ॥ 'सुखशाल्यमेव' इति वामनः । यथा—'हरे कुमारोऽपि कुमारविक्रम'

---

१ 'ति तात्पर्य-' स्यात्. २ 'तोऽन्यथो' स्यात्. ३ 'अर्थस्यायोर्मे' स्यात्. ४ 'बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः । नोद्वेजयति तस्माद्धि तन्माधुर्यमुदाहृतम् ॥' इति भरतोक्तवनुसारेण 'च काव्य' स्यात्. ५ 'स वै दोषाभाव' इति स्यात्. ६ सुप्रयुक्तैर्मिलन्मोऽभिर्युक्तं प्रश्लिष्टसंधिभिः । सुकुमारार्थसंयुक्तं सुकुमारं तदुच्यते ॥ इति भरतपाठः. ७ अजरठत्वं सौकुमार्यम् इत्येवं वामनसूत्रेपूपलभ्यते तत्र अजरठत्वं परुषत्वं श्रुतिकटुत्वमिति यावत्.

सुरद्विपास्फालनकर्कशाङ्गुलौ । भुजे शचीपत्रविशेषकाङ्किते स्वनामचिह्नं निचखान साय कम् ॥ सोऽयं श्रुतिकटुत्वदोषाभावो न गुणः । माधुर्यप्रकार एवाऽयम् । अर्थे तु वस्तु अपारुष्यम् सौकुमार्यम्' । यथा—'स निकेन्द्रमुखेन सौरिणा भूमिनन्दनः । चक्रपातोपरिगताश्वा नीतास्त्रस्तपर्योस्तताम् ॥ सोऽयममङ्गलरूपाश्लीलत्वदोषाभावो न गुणः ॥ यदि वा उक्तिविशेषः पर्यायोक्ताख्यालङ्कारविषय एवासौ ॥ बहुभिः सूक्ष्मैश्च विशेषैः समेतमुदारमिति भरतः । यथा—'ये पूर्वं यवसूचिसूत्रसदृशो ये केतकाग्रच्छद च्छाया श्याम(?)पुर्म्मुखाक्षतिकक्ष्मयमासोऽत्र ये । ये धाराम्बुविलम्बिनः क्षणमयो ये तारहारश्रियस्तेऽमी स्फाटिकदण्डडम्बरजितो जाताः तुषाराः कथं ॥ सोऽयमग्राम्यमर्थं कथं गुण इति वामनीयाः । तस्माद् 'विकटत्वमुदारता' । यस्मिन् सति नृत्यन्तीव पदानीति वर्णना भवति । यथा—'स्वच्छान्तरे रणितहारक्वणितनूपुरसंवाहन स्वाभिनवेन्द्ररीतिभाजी । दैवी अपास्य स्वयं शतमखनन्दनं पुरं प्रयाती सह सौमित्रिणा ॥' सोऽयमपीपमवशोऽनुप्रासभावो न गुणः । ओजःप्रकार एवायम् । अर्थे तु—'अग्राम्यत्वमुदारता' । यथा—'त्वमेवंसौन्दर्या स च रुचिरताया परिचितः कलानां सीमान्तं परमिह युवामेव भजथः । अपि द्वन्द्वं दिष्ट्या तदिह सुभगे संवदति वामतः शेषं चेत्स्यादितमथ तदानीं गुणितया ॥ सोऽयं दोषाभावो न गुणः ॥ यस्मिन्नथ तथास्थितोऽपि तथास्थित एवार्थः प्रतिभाति सोऽर्थव्यक्तिर्गुण इति भरतः । यथा—मृणालमिन्दोर्बिम्बं रविकरसमं न सन्ध्य इदं नवीकृत्य प्रथितमुखी शैल- तनया । अधोवक्त्रं पश्यत्यपगतु स शिवः सा च गिरिजा स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥ सोऽयं प्रसादादभिन्न इति वामनीयाः । तस्माद्यत्र पुरस्थमिव वस्तुनो- ऽभिव्यक्तिः यथावित्य वाच्या सार्थव्यक्तिः । यथा—'महेश्वरे वा जगतां महेश्वरे जनार्दने वा जगदन्तरात्मनि । न वस्तुभेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥ सोऽयमकुमुत्थान्तरामिहित प्रसाद एवेति धन्वी । तस्मात्तेनार्थस्यव सार्थव्यक्तिः । तत्र वाच्यमनुदाहरणम् । दोषाभावोऽयं कथमिव गुणः । तथा वैशद्युत्कारोपाणां सर्वं गुणाः सु । अर्थगुणस्तु 'वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः' । यथा—'पृष्ठेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः । गोरोचनाहरितबभ्रु बहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥ कविप्रत्यक्षस्वरूपतो वस्तुनः स्फुटत्वमभिहितम् । तदुक्तम्—'निवेशयति हृदयं तथापि तमेति वा । महाकवीनां दिव्यं वाणी विजयतामसौ ॥' अपि च । जातिर्नामायमलंकार इति ॥ ओजस्वि शब्दसम्पन्नं कान्त

---

१ 'नीतो' स्या०, २. 'वासितम्' स्या०, ३ 'विकटमाधवपदीर्ध पम्पूर्णारम्भतयोचितम् । अनेकभावसंयुक्तमुदारं तत्प्रकीर्तितम् ॥ इत्येवं भरते पाठः. ४ 'श्याम' स्या०, ५. 'रणिति' वामनसूत्रवृत्तौ ६ 'शुभमिदा पाङ्गना(?)तु शेषण्मेयकस्थिता । या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्तिता ॥' इत्येवं समुपलभ्यते ७ 'वस्तुस्वभावस्फुटत्वं' वामनसूत्रे

वर्गा टठडढरहिता वर्गा', ह्रस्वान्तरितौ च रेफणकारौ। असमास' इति समासाभावोऽल्पसमासता वा, मृद्वी च रचना । तत्र माधुर्ये माधुर्यस्य व्यञ्जिकेत्यर्थः । यथा—

'शिञ्जानमञ्जुमञ्जीराश्चारुकाञ्चनकाञ्चयः ।
कङ्कणाङ्कभुजा भान्ति जितानङ्ग तवाङ्गनाः' ॥'

'दारुणरणे रणन्तं करिदारुणकारणं कृपाण ते ।
रमणकृते रणरणकी पश्यति तरुणीजनो दिव्यः' ॥'

न पुनरेव यथा—

'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्या क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥'

अत्र शृङ्गारप्रतिकूला वर्णाः ।

'वाले मालेयमुच्चैर्न भवति गगनव्यापिनी नीरदानां
किं त्वं पक्ष्मान्तवान्तैर्मलिनयसि मुधा वक्त्रमश्रुप्रवाहैः ।
एषा प्रोद्वृत्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभा
दावाग्नेर्व्योम्नि लग्ना मलिनयति दिशां मण्डलं धूमलेखा ॥'

अत्र दीर्घसमासः परुषरचना च विप्रलम्भशृङ्गारे विरुद्धा ।

ओजसो लक्षणमाह—

दीप्तिहेतुरोजो वीरबीभत्सरौद्रेषु क्रमेणाधिकम् ।

दीप्तिरुज्ज्वलिता । चित्तस्य विस्तार इति यावत् । क्रमेणेति वीराद्बीभत्से ततोऽपि रौद्रे । तेषामङ्गेऽद्भुते च सातिशयमोजः ।

---

वीरैकरसहेतुतया ओजोऽप्यस्ति । तथापि शृङ्गारतया माधुर्यमेव प्रकर्षं प्राप्नोतीत्यर्थः ॥ न पुनरेवमिति । अत्र भावः—यथान्यः प्रतिकूलवर्णत्वाद्भवेद्दोष उचितत्वान्न वाच्य एवानुकूलविपर्ययेणैव लोकितत्वात् ॥ यथा इति । समासरचनयो-

---

१ 'दारुण' इति भवेत्. २. 'कण्ठिताम्' इति वाग्भटालंकारपाठे. ३ 'उ-ज्ज्वलता' इति भवेत्.

एतद्व्यञ्जकानाह—

आद्यतृतीयाक्रान्तौ द्वितीयतुर्यौ युक्तो रेफस्तुल्यश्च टवर्गशषा वृत्तिदैर्घ्यमुद्धतो गुम्फश्च ।

आद्येन द्वितीयस्तृतीयेन चतुर्थ आक्रान्तो वर्णस्तथाध उपरि उभयत्र वा येनकेनचित्संयुक्तो रेफस्तुल्यश्च वर्णो वर्णेन युक्तस्तथा टवर्गोऽर्थात् णकारवर्जः, शषौ च, दीर्घसमासः, कठोरा रचना च । अत्र ओजसि । ओजसो व्यञ्जक इत्यर्थः । यथा—

'मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा
　धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् ।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
　दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः ॥'

न पुनरेवं यथा—

'देवः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
　क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति नो
　यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥'

अत्र यथोक्तवर्णाभावोऽनुद्धता रचना असमासश्च विरुद्धः ।

अथ प्रसादलक्षणमाह—

विकासहेतुः प्रसादः सर्वत्र ।

विकासः शुष्केन्धनाग्निवत्स्वच्छजलवच्च सहसैव चेतसो व्याप्तिः । स सर्वत्रेति सर्वेषु रसेषु ।

एतद्व्यञ्जकानाह—

इह श्रुतिमात्रेणार्थप्रत्यायका वर्णसंघटनागुम्फाः ।

श्रुत्यैवार्थप्रतीतिहेतवो वर्णसमासरचनाः । इह प्रसादे । प्रसादस्य व्यञ्जका इत्यर्थः । यथा—

---

रसव्यञ्जकमिदम् । माधुर्यौजःप्रसादव्यञ्जकेषु च वर्णादिष्वभिहितेषु वक्त्रो पितवाच्य-

'दातारो यदि कल्पशाखिभिरलं, यद्यर्थिनः किं तृणैः,
सन्तश्चेदमृतेन किं, यदि खलास्तत्कालकूटेन किम् ।
किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया
संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥'

माधुर्यौजःप्रसादव्यञ्जकाश्च वर्णा उपनागरिका परुषा कोमला च वृत्तिरुच्यते ।

वैदर्भी गौडीया पाञ्चाली चेति रीतय इत्यन्ये ।

यदाह—

'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा, कोमला परैः ।
केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ॥'

यद्यपि गुणेषु नियता वर्णादयस्तथापि—

वक्तृवाच्यप्रबन्धौचित्याद्वर्णादीनामन्यथात्वमपि ।

तत्र वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव वर्णादयो यथा—

'मन्थायस्तार्णवाम्भःप्लुतिकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः,
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥'

अत्र यद्यपि वक्तृवाच्यं क्रोधादिव्यञ्जकम्, काव्यं चाभिनेयार्थम् । तथापि भीमसेनस्य वक्तुरौचित्यादुद्धता वर्णादयः ।

---

मिहितः एतद्व्यतिरिक्तास्त्वसाधवः ॥ अत्रेति । यदि हि क्रोधादिव्यञ्जकं वाच्यं भवेत्तदा उपपद्येरन्नुद्धता रचनादयः । न चैतदभिनेयार्थे चैव कोमलप्रसृम- ग्धेत रचनादीनाम् । किं त्वभिनेयार्थमिदम् । न च तत्र रौद्रादावप्युद्धता रचनादय

---

१ 'ओज्यते' क. प्रत. २. 'अथौचित्या' क. प्रत. ३ 'कुहर' इत्यादि- निर्घातवात ४ 'चण्ड' इति भवेत्. ५. 'सिंह' इति प्रत्यये ६ 'हि' क. प्रत. ७ 'इति' क. प्रत.

---

१ 'अत्रेति' स्यात्.

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव। यथा—

'प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात
त्रासाकृष्टाश्व तिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम्॥'

क्वचिद्वक्तृवाच्यानपेक्षा प्रबन्धोचिता एव। यथा आख्यायिकायां शृङ्गारेऽपि न मसृणा वर्णादयः। कथायां रौद्रेऽपि नात्यन्तमुद्धताः। नाटकादौ रौद्रेऽपि न दीर्घसमासादयः। एवमन्यदप्यौचित्यमनुसर्तव्यम्॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ
गुणविवेचनश्चतुर्थोऽध्यायः।

---

उपपन्नः। अतो वक्त्रौचित्यादेव रचनादीनामन्यथात्वमदुष्टम्॥ न मसृणा इति। गद्यस्य विकटबन्धत्वेनैव शोभावत्त्वात्॥ नाटकादौ रौद्रेऽपीति। न केवलं करुणविप्रलम्भयोः। रौद्रेऽपि न दीर्घसमासादयो निबन्धनीयाः॥ कथमिति चेत् उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतीतौ व्यवधायका विरोधिनश्च सर्वात्मनैव परिहार्याः[1]। एवं च दीर्घसमासः। समासानामनेकप्रकारसंभावनया रसप्रतीतिं व्यवदधातीति तत्राभिनिवेशः शोभते विशेषतोऽभिनेयार्थे काव्ये। तत्रापि करुणविप्रलम्भयोः[2]। तयोर्हि सुकुमारत्वात् स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति। रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ मध्यमसमासोऽपि। कदाचिद्धीरोद्धतनायकव्यापाराश्रयेण दीर्घसमासोऽपि वा तदाक्षेपाविनाभावि रसोचितवाच्यापेक्षया न विगुणो भवतीति। सोऽपि नात्यन्तपरिहार्यः। सर्वत्र प्रसादाख्यो गुणो व्यापी। स हि सर्वरससाधारण इत्युक्तम्। प्रसादातिक्रमे हि असमासोऽपि करुणविप्रलम्भशृङ्गारौ न व्यनक्ति। तदपरित्यागे मध्यसमासोऽपि न प्रकाशयति। तस्मात्सर्वत्र प्रसादोऽनुसर्तव्यः। अत एव च—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा। यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥' इत्यादौ प्रसादाख्य एव गुणो न माधुर्यं नाप्योजः समासाभावात्। न चाचारुत्वमभिप्रेतरसप्रकाशनात्॥ एवमन्यदपीति। मुक्तकेषु रस

---

१ 'एव ते। तथाहि' क प्रत  २. 'मध्यम' क प्रत

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव । यथा—

'प्रोद्यच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात

त्रासाकृष्टाश्व तिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।

कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां

भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥'

क्वचिद्वक्तृवाच्यानपेक्षा प्रबन्धोचिता एव । यथा आख्यायिकायां शृङ्गारेऽपि न मसृणा वर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । नाटकादौ रौद्रेऽपि न दीर्घसमासादयः । एवमन्यदप्यौचित्यमनुसर्तव्यम् ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ

गुणविवेचनस्तृतीयोऽध्यायः ।

---

कथया । अतो वाच्यौचित्यादेव रचनादीनामत्यन्तमपायमत्रेक्षणम् ॥ न मसृणा इति । मधुरा विप्रलम्भाख्यस्य तत्र प्रयासत्वात् ॥ नाटकादौ रौद्रेऽपीति । न केवलं करुणविप्रलम्भयोः । रौद्रेऽपि न दीर्घसमासादयो नियमनीयाः ॥ कथमिति चेत् उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतिपत्तौ व्यवधायका विरोधिनश्च सर्वात्मनैव परिहार्याः[1] । एवं च दीर्घसमासः । समासानामनेकप्रकारसंभावनया रसप्रतीतिं व्यवधापयतीति तस्मिन्नात्यन्तमभिनिवेशः शोभते विशेषतोऽभिनेयार्थे काव्ये । तत्रापि करुणविप्रलम्भयोः । तयोर्हि सुकुमारतरत्वात् स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति । रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ मध्यमसमासोऽपि । कदाचिद्धीरोद्धतनायकसंबन्धव्यापाराश्रयेण दीर्घसमासोऽपि वा तदाक्षेपाविनाभावि रसोचितवाच्यापेक्षया न विगुणो भवतीति । सोऽपि नात्यन्तपरिहार्यः[2] । सर्वत्र प्रसादाख्यो गुणो व्यापी । स हि सर्वरससाधारणः स्वरूपम् । प्रसादातिक्रमे हि असमासोऽपि करुणविप्रलम्भशृङ्गारौ न व्यनक्ति । तदपरित्यागे मध्यमसमासोऽपि न प्रकाशयति । तस्मात्सर्वत्र प्रसादोऽनुसर्तव्यः । अत एव च—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदात् पाण्डवीनां चमूनां यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा । यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥' इत्यादौ प्रसादाख्य एव गुणो न माधुर्यं चाप्योजः समासाभावात् । न चाप्रसन्नमभिप्रेतरसप्रकाशनात् ॥ एवमन्यदपीति । मुक्तकेषु रस

---

१ 'एव ते । तयोर्हि' क प्रत ।　२ 'मध्यम' क प्रत ।

पञ्चमोऽध्यायः ।

'शब्दार्थौ सालंकारौ काव्यम्' इत्युक्तम् । तत्रालंकाराणाम् 'अङ्गाश्रिता अलंकाराः' इति सामान्यलक्षणमुक्तम् । अथ विशेषलक्षणमवसा-वसर । तत्रापि शब्दालंकाराणां षण्णां तावदाह—

व्यञ्जनस्यावृत्तिरनुप्रासः ।

व्यञ्जनस्येति जातावेकवचनम् । तेनैकस्यानेकस्य वा व्यञ्जनस्यावृत्तिः । पुनः पुनर्निबन्धो रसाद्यनुगतः प्रकृष्टोऽदूरान्तरितो न्यासोऽनुप्रासः । तत्रैकस्य सकृदावृत्तौ न किंचिद्वैचित्र्यमतोऽसकृदावृत्तिर्लक्ष्यते । अनेकस्य तु सकृदसकृच्च ।

तत्रैकस्यासकृदावृत्तिर्यथा—

'मनोहरक्रमप्रतिम तवत्रं मञ्जीमिरशीकृतमानताङ्गधा ।
कुर्वन्ति यूनां सहसा यथैता स्वान्तानि शान्तापरचिन्तनानि ॥'

अनेकस्य सकृदावृत्तिर्यथा—

'ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी ।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥'

स्पन्दमन्दीत्यादेरनेकस्य सकृदावृत्तिः ।

---

अन्यासंगेन च दीर्घसमासरचना । अन्यथा तु कामचारः । संदानितकादिषु विकटबन्धत्वौचित्याद्दीर्घसमासा एव रचना । प्रबन्धाश्रितेषु तु मुक्तकादिषु यथोक्तप्रबन्धविशेषौचित्यमेवानुसर्तव्यम् । पर्यायबन्धेषु पुनरसमासमध्यमसमासे एव । कदाचित्त्वर्थौचित्यापेक्षया दीर्घसमासायामपि संघटनायां परुषा ग्राम्या च वृत्तिः परिहर्तव्या । परिकथायां कामचारः । तत्रेतिवृत्तमात्रोपन्यासेनात्यन्तं रसबन्ध(!)मि-निवेशते । खण्डकथासकलकथयोस्तु प्राकृतप्रसिद्धयोः कुलकादिनिबन्धनभूयस्त्वाद्दीर्घ-समास योरपि न विरोधः । वृत्त्यौचित्यं च यथारसमनुसर्तव्यम् । सर्गबन्धे तु रस-तात्पर्ये यथारसमौचित्यम् । अन्यथा तु कामचारः । द्वयोरपि मार्गयोः सर्गबन्धविधायिनां दर्शनाद्रसतात्पर्यं साधीय इति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके चतुर्थोऽध्यायः ।

---

१ 'चद्' टीकासंमतः

---

१ 'निविशते' इति स्यात्,

यथा वा—

'नितम्बगुर्वी गुरुणा प्रयुक्ता वधूर्विधातृप्रतिमेन तेन ।
चकार सा मत्तचकोरनेत्रा लज्जावती लाजविसर्गमग्नौ ॥'

अत्र द्वयोर्द्वयोस्त्रयाणां त्रयाणां च व्यञ्जनानां सकृदावृत्तिः ।

यथा वा—'धूसरितसरिति—' इति ।

अनेकस्यासकृदावृत्तिर्यथा—

'सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि
ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ व्रजन्जीवसि ॥'

अत्र रुधीत्यादौ ।

तात्पर्यमात्रभेदिनो नाम्नः पदस्य वा लाटानाम् ।

शब्दार्थयोरभेदेऽपि अन्वयमात्रभेदिनो नाम्न पदस्य वा एकस्यानेकस्य वा सकृदसकृच्चावृत्तिर्लाटानां सम्बन्धिनी लाटजनवल्लभोऽनुप्रासः ।

तत्रैकस्य नाम्न सकृदावृत्तिर्यथा—

'स एष भुवनत्रयप्रथितसंयमः शङ्करो
बिभर्ति वपुषाधुना विरहकातरः कामिनीम् ।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयञ्जयति जातहासः स्मरः ॥'

अत्र करेति नाम ।

असकृद्यथा—

'दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः ॥'

अत्र दशेति नाम ।

अनेकस्य सकृद्यथा—'जयति क्षुण्णतिमिरः—' इति ।

असकृद्यथा—

'यन्नायन्ते नदीनां सितकुसुमधराः शक्रसंकाशकाशाः
काशाभा भान्ति तासां नवपुलिनगताः श्रीनदीहंसहंसाः ।
हंसाभाम्भोदमुक्तस्फुरदमलवपुर्मेदिनीचन्द्रचन्द्र
चन्द्राङ्कः शारदस्ते जयकृदुपनतो विद्विषां कालकालः ॥'

पदस्यैकस्य सकृद्यथा—

'वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥'

'न भवति भवति च न चिरं भवति चिरं चेत्फले विसंवदति ।
कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥'

अनेकस्य सकृद्यथा—

'यस्य न सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता, दवदहनस्तुहिनदीधितिस्तस्य ॥'

असकृद्यथा—

'किंचिद्वच्मि न वच्मि वच्मि यदि वा किं वच्मि वच्मीदृशं
दृश्यन्ते न भवादृशेषु पतिषु स्वेषामदोषे क्षमा ।
ते किं सन्ति न सन्ति सन्ति यदि वा के सन्ति सन्तीदृशाः
सर्वस्तेऽप्य गुणैर्गृहीतहृदयो लोकः कुतो वर्तते ॥'

सत्यर्थेऽन्यार्थानां वर्णानां श्रुतिक्रमैक्ये यमकम् ।

आवृत्तिरिति वर्तते । सत्यर्थे भिन्नार्थानां वर्णानां स्वरसहितव्यञ्जनाना-

---

यदीति । अनुप्रासयमकचित्रश्लेषवक्रोक्तिपुनरुक्तावभासान् ॥ यस्य न सविधे इति । अत्र पूर्वार्धे दवदहनत्वं विधेयं तुहिनदीधितित्वमनुवाद्यम् । तदुभयमप्युत्तरार्धे विपरीतं ज्ञेयमिति ॥ किंचिद्वच्मीति । भवादृशेषु पतिषु सत्सु स्वेषामस्मीनामस्मद्दोषैरस्मद्दोषं विना सर्वापराधिष्ट केऽपि न दृश्यन्ते केवलं त्वदीया एव गुणा हृदयं हरन्ति । एतदेव पर्यालोच्याह—ते किं सन्तीति । इदं हि सर्वेषु सर्वं

मुपलक्षणाच्च वर्णस्य वर्णयोश्चावृत्ति श्रुत्यैक्ये क्रमैक्ये च यमौ द्वौ सम-जातौ तत्प्रतिकृतिर्यमकम् । तेनैकस्याक्षरस्य द्वयोर्बहूनां चाद्वितीय सदर्थं निरन्तरं सान्तरं वा श्लोमानमकमलंकार । 'मधुपराजिपराजितमानिनी–' इत्यादावुभयेषामनर्थकत्वे 'स्फुटपरागपरागतपङ्कजम्–' इत्यादावेकेषामर्थ वत्त्वेऽन्येषामनर्थकत्वेऽन्यार्थानामिति न युज्यते यत्कृमिति सत्यर्थ इत्यु क्तम् । न च सर्वथैव शब्दस्य पुन शब्दप्रयुच्चारणम्, पौनरुक्त्यमसक्ते इति सामर्थ्यलब्धेऽपि भिन्नार्थत्वे यत्र स एवार्थ प्रसङ्गेन पुन प्रतिपिपा दयिषितो भवति बन्धुर्बन्धुरित्यादिना च प्रयुक्त एव शब्द पुन प्रयुज्यते 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादौ तत्र पौनरुक्त्यदोषा भावात् यमकत्व केन निवार्यतेत्यन्यार्थानामित्युपात्तम् । श्रुत्यैक्यग्रहणं लोकप्रतीतिसुस्पष्टपरिग्रहार्थम् । तेन दन्त्यौष्ठ्यौष्ठ्यवकारबकारादिवर्णभेदे, लघुप्रयत्नतरालघुप्रयत्नतरकृते च भेदे, सयोगस्तयो सजातीययोर्व्यञ्जनयो र्वास्त्वे विशेषे यमकमन्यो न विरुध्यते । यथा—

> 'तम्यारिवातं नृपतेरपश्यदवरुम्बनम् ।
> ययौ निर्भरसभोगैरपश्यदबलं वनम् ॥'

---

मुखमेवेति । सर्वस्येति । वर्णस्य पादान्तरगतत्वेनावृत्तिर्न वैचित्र्यमावहतीति तस्मि-मेव पादे मात्रान्तरविविधावा भैरन्तर्येणावृत्तौ यमकता ज्ञेया । यथा—'नागाका-रेण यन्त्रभूराजितमयोमुखा । विविक्तेन विकसेन ततश्च हृदयं नृणाम् ॥' मध्या न्तयोरपि—'उदारस्वारोऽभिमोद्भुत राजते कथा । अबकद्रमत्व मिन्दुमौले मतिं मम ॥' यथा वा—'विविधधवला मगपर्यन्तेनानाभिवितत गमनागमनमन्मना-ना । सकलमन्मना पापयन्तु मुमाना मम हि हितसमानानमन्सनाना ॥ विविधानि धवलानि यासाम् । नाम्मन् हरिणो पृश्निम्ति अभिक्मन्ति धवलाम्बरा महान्तो वा नानाप्रकारा ये यतः पक्षिणो व्याहारप्रसरोर्म्यास्तं यस्य यस्याम् । अविधमाचो पामो यमर्म यत्र तथाभूतं कृत्वा मयन्तो जना यत्र । अनिर्वाणमा संस्कृरेति यावत् । श्रीरूपिणी वा । वर्णानां रम्या च कम्पं यस्याम् । मो भापयो । भवन्तु सन्तु मु माना । मम मस्माहितं तनोति । ममुच आत्मीय मम एव मान प्राणा यस्याः । तेन सम्पूर्णभूमिर्मा हरस्वरं प्रसमिमीयत ॥ वर्णयोर्यथा—'भ्रमर द्रुमपुष्पाणि मम प्रीत्यै पिबन्तु । च कुन्दकुसुमे प्रीति भङ्गं कृत्वा विरौषि यत् ॥' तस्मिन्नेव पादे यथा— इन्द्व इन्दुरराजीना वीर वीरर्भिता तव । क्रमं यमन्त्वेर्न्यादिरस्य रसा

भवलम्भनं पार्ष्णिग्रहाक्रन्दासारादि । प्रपातपानीयान्यादे पानीयानि तनूकुर्वत् । अबलं सैन्यरहितम् । वनं काननम् । अत्रैकत्र—बवौ दन्त्यौ ष्ठ्यौष्ठ्यौ, अपरत्र—ओष्ठ्यदन्त्यौष्ठ्यौ । अपदमित्यत्रैक श्कार, अपरत्र द्वौ । यथा—

'भवानि य निरन्तर तव प्रणामलालसा ।
मनस्तमोमलाप्सा भवन्ति नैव ते कचित् ॥'

चित्तमोहमलेन सदा । अत्र लालसेति प्रथमलकारोऽलघुप्रयत्नतरः । मलालसेत्यत्र लघुप्रयत्नतरः ।

तथा नकार-मकारयोरन्त्यमकार-नकारयोर्विसर्जनीयस्य भावाभावयोरपि न विरोध इति केचित् । यथा—

'वेगं हे तुरगाणां जयलसावेति भैक्ष हेतुरगानाम् ।'
'पात्यान्तु रमं भीर समीरसमरहसम् ।
द्विपता ब्रहि निःशेष प्रसना समर हसन् ॥'
'द्विपतां मूलमुच्छेत्तुं राजवंशादयामया ।
द्विपन्त्यलसति कथं वृकयूथादना यथा ॥'

कर्मैक्यग्रहणात्सरो रस इत्यादौ

'प्रवण प्रणवो यत्र प्रथम प्रथमेषु यः ।
रणवान्वारणमुखः स व पातु विनायकः ॥'

इत्यादौ च यमकत्वं मा भूत् ॥

तत्पादे भागे वा ।

तद्यमकं पादे तस्य च भागे भवति । तत्र पादजं पञ्चदशधा । तथा हि—प्रथमो द्वितीयादावावर्तते । द्वितीयस्तृतीयादौ । तृतीयश्चतुर्थ इति षट् । प्रथमो द्वितीयतृतीययोः द्वितीयचतुर्थयोः, तृतीयचतुर्थयोः, द्वितीयस्तृतीयचतुर्थयोरिति चत्वारः । प्रथमस्त्रिष्वपीत्येकः । प्रथमो द्वितीये ।

---

१ अत्र विसर्जनीयपरम् 'यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्। नानुस्वारविसर्गौ च चित्रभङ्गाय संमतौ ॥ इति वामनटीकश्लोकोत्तरार्धस्यचित्रपदस्य यमकापुप्लक्षकत्वं सूचयन्ननुस्वारपदमत्र स्मारयति. २. महेन्द्र' स्यात्.

तृतीयश्चतुर्थे इति । प्रथमश्चतुर्थे द्वितीयस्तृतीय इति द्वौ । अर्धा वृत्तिः श्लोकावृत्तिश्चेति । द्वे इति । यथा—

'चक्र दहतारं चक्रन्द हवारम् ।
खड्गेन तवाजौ राजन्नरिनारी ॥'

कश्चिद्राजानमाह—समूहम् । प्रता । अरिसबन्धि । रुरोद । ममाद्या मत्स्यर्थम् ॥

'संयत याचमानेन यस्मा मापि द्विषा वध ।
सयत या च मानेन युनक्ति प्रेमतान्नम् ॥'

रणम् । देव्या' । जितेन्द्रियम् । पूजया ज्ञानेन वा ॥

'प्रभावतोऽनाम न वासवस्य प्रभावतो नाम नवासवस्य ।
प्रभावतो नाम नवा सवस्य विच्छित्तिरासीत्त्वयि विष्टपस्य ॥'

प्रभावात् । शक्रस्य । तेजस्विन । नाम नमते कारकः । अनाम नमनरहितः । अतश्च विष्टपस्य प्रभौ स्वामिनि त्वयि नवसोमरसस्य सवस्य यज्ञस्य नवा विच्छित्तिरासीत् । नवेत्येक एव निपात प्रतिषेधार्थ । नामेत्यभ्युपगमे निपातः । इत्यादि ॥

अर्धावृत्तिर्यथा—

'सा रक्षतादपारा ते रसकृद्गौर वाधिका ।
सारक्षतादपारास्तेरसकृद्गौरवाधिका ॥'

सा देवी । त्रायताम् । अनन्ता । तव । रागकृदभिमत वस्त्विस्त्यर्थ । वामूपा । पाश्विनी । उत्कृष्टक्षते । अपगतविपक्षात् । अविरतम् । गौरवे वाधिका सर्वेषां गुरुरित्यर्थ ॥

श्लोकावृत्तिर्यथा—

'स त्वार भरता वश्यमवद्यं वितवारवम् ।
सर्वदा रणमानैषीदवानक्समस्थित ॥

---

१ 'कश्चिन्नृपमाह—हे राजन्, तव संबन्धिना खड्गेनाजौ रणे भारं रिपुसंबन्धि चक्र समूहं दर्प शीघ्र दहता प्रता अरिनारी रिपुस्त्री हता मनुजवैव ताडिता सती चक्रन्द चन्दितवतीत्यर्थः' इति साराकंकारव्याख्या २. 'प्रथमं शकम्' स्यात्

सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम् ।
सर्वदारणमानैषी दवानस्समस्थित ॥'

महापुरुष । पुन । शत्रुसमूहम् । भरात् । धन्ने वर्तमानम् । वत्सर हितम् । दीर्घाक्रन्दम् । सर्वकालम् । संग्रामम् । आपयामास । भवानलम् अपि तु त्वरितं गच्छन् । अस्थीनि तस्यास्युपक्षिणोति । सत्त्वेन ये ते आरम्भास्तेषु रत । सर्वथा आश्रित तरुत्वग्वसन येन शत्रुसमूहेन । सर्वेषां वारणे यो मानसमिच्छति । दवाग्निना सम स्थित यस्य ॥

तथा भागजस्य द्विधा विभक्ते पादे प्रथमपादादिभाग पूर्ववद्द्वितीयादि पादादिभागेषु, अन्तभागोऽन्त्यभागेष्वित्यष्टाविंशतिर्भेदा । श्लोकान्तरे हि न भागावृत्तिः संभवति । तद्यथा—

'सरस्वति पदं चित्तसरस्वति विधेहि मे ।
त्वां विना न हि शोभन्ते नरा काया इवासुभि ॥'
'करेण ते रणेष्वन्त करेण द्विषतां हता ।
करेणव क्षरद्रक्ता भान्ति सन्ध्याघना इव ॥'
'परागतरुराजीव वातैर्ध्वस्ता भटैश्चमू ।
परागतमिव क्वापि परागततमम्बरम् ॥'
'पातु वो भगवान्विष्णु सदा नवघनद्युति ।
स दानवकुलध्वंसी सदानवरदन्तिहा ॥'
'भवानि च विधेहि मे भवानिश्च कृपापरा ।
उपासनानि यज्जनोऽभवानि क्षसति त्वयि ॥'

---

विधानिशम् ॥ इति ॥ चित्तसरस्वतीति । चित्तसमुद्रे ॥ अन्तकरेणेति । द्विषतामन्तविधायिना ॥ परागतेति । परा प्रतिपक्षभूता पर्वते तरुपङ्क्तिरिव । अत्र च व्यतिकारपरागेण रणरेणुना व्याप्त मम्बरं परागतमिव न जाने क्व गतमित्यर्थ ॥ सदेति । सर्वदा । स इति विष्णुः । सदानस्य कुवलयापीडाख्यस्य वरदन्तिनो हन्ता ॥ भवानीति । हे गौरि मे सुखम् । अनिशमनवरतम् । न विद्यते जन्म येभ्यस्तान्यभवानि ॥

---

१ सव्यासंकारश्यामस्यायां तु— भवान् भगाच्छम् । कम् । अकर्तव भिभिकर्म जगम्' इत्येवमुपलभ्यते. २ 'अन्तकरेण' इति स्यात्.

---

१ 'अन्तकरेणेति' स्यात्.

एतस्य च कविशक्तिख्यापनमात्रफलत्वेन पुरुषार्थोपदेशानुपायत्वात्का व्यगडुभूततेति भेदलक्षणं न कृतम् । काव्यं हि महाकवयः सुकुमारमतीनां पुरुषार्थेषु प्रवर्तनाय विरचयन्ति । न च पृथग्यत्ननिर्वर्त्यं यमकादि निरुद्धरसं तत्त्वा सुखोपायः । सरित्सर्वतसागरादिवर्णनमपि वस्तुवृत्त्या रसमङ्कोद्धुरेव, किमङ्गनकटकाव्यम् ॥

तथा च लोल्लटः—

'यत्तु सरिदद्रिसागरनगतुरगपुरादिवर्णने यत्न ।
कविशक्तिख्यातिफलो विततधियां नो मत प्रबन्धेषु ॥
यमकानुलोमतदितरचक्रादिभिदोऽतिरसविरोधिन्यः ।
अभिमानमात्रमेतद्गड्डरिकादिप्रवाहो वा ॥' इति ।

**स्वरव्यञ्जनस्थानगत्याकारनियमच्युतगूढादि चित्रम् ।**

स्वरादीनां नियमच्युतगूढादिश्च चित्रं साहस्यादाश्चर्यहेतुत्वाद्वा चित्रम् ।

तत्र स्वरचित्रं यथा—

'जय मदनगजदमन वरकलमगतगमन ।
गतजननगदमरण मदमयगनरशरण ॥'

ह्रस्वैकस्वरम् ॥

एवं दीर्घैकस्वरद्वित्र्यादिस्वरनियमे उदाहार्यम् ॥

यमकसाम्यत्वात् इत्यर्थः ॥ न च पृथग्यत्ननिर्वर्त्येति । यदाह ध्वनिकारः— रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् । अपृथग्यत्ननिर्वर्त्यः सोऽलंकारो ध्वनौ मतः ॥' इति ॥ दीर्घैकस्वरद्वित्र्यादिस्वरनियमे इति । दीर्घैकस्वरनियमे यथा— भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः । भैभैभेभं भैभं भैभं भैभं भैभं ... 'रेव' भेभे भेभेभे ॥ विविर्विपिः । ईक्सीकसा इणो मर्ता विष्णुः । ईशः शिवः । इनो इनिः । ईनः कन्दर्पः । इम भू. । जिनोऽर्हन् । शिद्रा देवविशेषाः । मित्रो रविः । रीरो मदनः । देवा सुराः । देवा संबन्धिभिः देवै । अनेकैर्वैर्यैः बीविरैव न स्फुटं प्रभु । समन्ता- देवे ममददो भवान्यदम् ॥ द्विस्वरनियमे यथा— क्षितिस्थितिमितिक्षिप्तिविधिविधि

१ 'मितो हि र' स्वरव्याख्याने  २ अभिमान' रुद्रटव्याख्याने

१–२. 'पृथग्यत्न' इति मूलव्याख्याने च  ३ 'देवै' सात्  ४ देवो' सात्

व्यञ्जनचित्रं यथा—

'न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥'

रणपराङ्मुखा गणाः कुमारेण जगदिरे इति प्रक्रमः । हे नानानना अनेकरूपवदना, स न ना न पुरुषो य ऊनेन हीनेन जितः विजितहीनोऽपि पुरुषोऽपुरुष । ननु संबोधने । जितोऽप्यजित एव यो न जितप्रभुः । सोऽपि पाप एव, यो जित जित नुदतीति ॥

एकव्यञ्जनम् ॥

एव द्विव्यादिव्यञ्जननियमे उदाहार्यम् ॥

---

पिपिद्रिषिट् । मम म्याङ ममद्धहरे सरहर मार ॥ पृथिव्या पाकपरिच्छेदप्रेरण- ह्नशीर्वेति निधिसिद्धीर्षेति चेति क्विपि संबोधने मां स्मरेति ॥ त्रिस्वरनियमे यथा— 'क्षितिविधिजितसितिविहिक्षितिमत्तरतम परपवन' । उद्र स्वखुर्देव तुलुतु(?)लुमि कुरम र्मे मरिकुमम् ॥ भूमेर्विजयस मर्यादामाम विधाने नियमपरा । विस्तीर्णम् । स्व वन्त । दुर्धरम् । विलिसवन्तम । तुमिचिरायम ॥ आदिमत्यपादुःसरानियमे ऽप्यन्यूनम् ॥ द्विव्यादिव्यञ्जननियमे इति ॥ द्विव्यञ्जननियमे यथा—'भूरिभि-

१ किरातार्जुनीयस्य पञ्चदशे सर्गे चतुर्दशस्यास्य श्लोकस्य व्याख्यावसरे मल्लिनाथस्तु—"नेति । पदच्छेदस्तावत्—न ना. ऊननुन्नः नुन्नोनः ना. नाना. नानानना ननु । नुन्नः अनुन्नः ननुन्नेनः ना अनेना नुन्ननुन्ननुत् ॥ अथ योजना—हे नानानना नानाप्रकाराण्याननानि येषां ते । नानाविधास्य इत्यर्थः । ऊनेन निकृष्टेन नुन्नो विद्ध ऊननुन्नो यः स ना न पुरुषो न । तथा नुन्न ऊनो येन स नुन्नोनो ना पुरुषोऽना अपुरुषः खलु । ऊनात्पीत पलायमानस्तु किं वक्तव्यमिति भावः । किंच नुन्न इनः स्वामी यस्य स नुन्नेनः स न भवतीति ननु नेनः । नञर्थस्य नशब्दस्य 'सुप्सुपा' इति समासः । स नुन्नो विद्धोऽप्यनुन्नोऽविद्ध एव । स्वामिनमनुन्नस्वामिकत्वादनुन्ना एवेति भावः । तथा नुन्नमनुन्नमनुद्धतमितिरूपेण नुन्ना नुन्ननुन्न- नुदतीति नुन्ननुन्ननुत्पीडितपीडको ना पुरुषोऽनेना निर्दोषो न भवतीति । किंतु सदोष एवेति । नात नातिपरिक्षतम्' इति निषेधादित्यर्थः । अयं तु नैतादृश इति न पला- यितव्यमिति भावः । अयमकव्यञ्जनः । अनुस्वारविसर्गास्तु न दोषावहः । 'नास्वारवर्णेषु भवेद् दुष्करत्वमुदाहृतम्' ॥ इत्येवं स्फुटं व्याख्यातवान्.

१–२ विसर्गाभावो लेखकप्रमादजो भवेत्. ३ 'विजिति' स्यात्. ४ 'नं' स्यात्.

स्थानमुरःकण्ठादि । तन्नियमं यथा—

'अगा गां गाङ्गकाकाकगाहकाघककाकहा ।
अहाहाङ्कखगाङ्कागकङ्कागखगकाकक ॥'

कश्चित्पुरुषः स्तूयते—हे गाङ्गकाकाकगाहक गङ्गासम्बन्धिपङ्ककुटिलगतिविलोडक, त्वं कुत्सितपापान्येव वायसास्तेषां हन्ता । जिहीते किमपि हान हा । न हां गतिं अहाङ्कि यत्नयाविषमङ्क यस्य स खग सूर्येभिश्च यस्य स गिरिरर्थान्मेरुस्तत्र कङ्कास्त्या पर्वतपक्षिणः काकका स्वच्छकारिणो यस्य स त्व पापहा मेरुनिवासिभि पक्षिभिरपि प्रख्याप्यमान कीर्तिर्गम्भगाः स्वर्गं गतोऽसीत्यार्यसाया मूलनिर्देशः । कायति शब्दम भिधत्ते इति काकः शब्द औणादिके । स करोति इति णिचि तदन्तात्के च काकक ॥ कण्ठस्थानम् ।

एवं द्वित्र्यादिस्थाननियमे उदाहार्यम् ।

गतिर्गतप्रत्यादिका । तन्नियमं यथा—

'नारणागगभीरा सा सारागीगगणारवा ।
कारितारिवधा सेना नावेधा परितारिका ॥'

---

भेरीभिर्भीता भूभारैरभिरेभिरे । भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥' भूभि । भूभारपराभिभारहुके । भयप्रदाः । भुवो भारभूनः । अभिरेभिरे । संजग्मिरे इति यावत् । दुन्दुभिवत्सनशीलैः । मेघश्यामः । निर्भयैर्गजैः । गजाः ॥ त्रिस्थाननियमे यथा— 'देवानां नन्दनो देवो नोदनो वेदनिन्दिनाम् । देव दुनाव नादेन दावे दानवनन्दिन ॥' देवो विष्णुः । यस्त्रैनुपतापमामास किमिसुपजातचाहमकरोत् । नादेन वचोविशेषेण । दावे विदारणे । दानवनन्दिनो हिरण्यकशिपो ॥ व्याजेम धाचतुर्व्यञ्जनाभिरिति यमेऽप्यन्यूनम् ॥ द्वित्र्यादिस्थाननियम इति । द्विस्थाननियमे यथा— मनरु वरनागमनगाठा धवद्गम । सरागव सदानन्दिमतातादसदर्थव ॥ कंसितक्रमिश- यन्नासेचनियमपूमिमितं साधुनयं कथिराह—हे क्लवमपाप सदामजनन्दकारिन्, प्रय- तोऽभ्युदयगुण सा सेना कमानमयविक्रमानेकपीडा वर्तते । तत्तां रक्षेत्यर्थं ॥ दन्त्यकण्ठ्यमयं स्यानहृष्यमम ॥ त्रिस्थाननियमे यथा— मणिनीकण्ठकण्ठ के न हस्ति

---

१ 'प्रमाप्ता' स्यात्.

---

१ 'रिरैरिभः' स्यात्. २ 'रिव' स्यात्. ३ 'सर्व' स्यात्. ४ 'सन्ना' स्यात्.

देति प्रियाह्वाने ॥ व्यासो यथा—अधोध' क्रमेण वर्णचतुर्दशकम्। ततोऽक्षरद्वयं च-
क्रमार्ध साधारम्। तत ऊर्ध्वक्रमेणाक्षरचतुर्दशकम् ॥ बन्ध यथा—प्रथमपादेन ऊर्ध्व
क्रमेण चर'। तत ऊर्ध्वं फलसारो दे'। तदूर्ध्वं च वाममार्गे 'धीम्'। मध्ये 'स'।
दक्षिणतो 'श्र'। ततो मध्यस्थाक्षर एव ह्रि'। तदुपरि फलमध्ये ममौ। अतनेर्वामत ऊ-
र्ध्वक्रमेण ममौ'। मूले सा' साधार। दक्षिणतोऽप क्रमेण दरम्'। दक्षिणपार्श्वे
ऊर्ध्वक्रमेण 'मरवा सर्वे। तत चरे साम्य'वर्णयोरन्तरे 'वा' साधार'। वामपार्श्वेऽप
क्रमेण 'समद्रताम् ॥ अर्क यथा—'त्वं पाद पालसरिम्भा मासि पाहि दिवीकस'।
तपादेपालसंस्कारामवन्ति वरदे हिप ॥ हे अभिमर्षितदायिनि पाद सपक्षपरपक्ष
रिमहे पालसदायां मारसा त्वम्। शोभसे। तथा देवा रिपूम् अभिभवन्ति। कृत
तपोविवार्य विनाशयामिमभिर्त द्रम्यं उद्भावनाया देतो' ॥ अत्र पञ्चाक्षरगमने
ऽप्यप्रथमभिशमावप्रथमभिशायमक्रम् ॥ सदाम्भाजपक्षिण्याता: सदातनपविक्षिता'।
सदासजसं क्षिपता सुरतोजसिदि स्थिता।।' सर्वदा अभ्यासं प्रितेन्द्रियैर्गीता।
शोभनं कृत्वा गृहीतमशर्वरीरम्भरता। भेगस्थानि सुपूजितं विष्णुस्थानं परं यत्र
तत्र स्थिता ॥ गोमूत्रिका चेतुरियं क्रमम्युत्क्रमाभ्यां चतुर्विधातिप्रकारा। तथा हि—
चतुर्ष्वपि पादेषु पङ्क्तिशो लिखितेषु प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च क्रमवैपरीत्याभ्यां
प्रकारचतुष्टय्यार। एवं प्रथमतृतीययो लिखितयोश्च प्रथमचतुर्थयो लिखितयोश्च द्वितीय
तृतीययो लिखितयोश्च द्वितीयचतुर्थयो लिखितयोश्च तृतीयचतुर्थयो लिखितयोश्च चत्वारश्च
त्वार इति षट्कत्वेन चतुश्चतुष्का इति ॥ हरे' ससारं देवित्वा जगतामिम तत्पत'।
वेति ससारं देवि त्वा योगेन क्षपिताशुभा ॥' हे देवि भगवती गोविन्दस्य भगिनीषु
पास जगत्समूहो भिन्नमुत्कर्षे परमार्थतो जानाति। कथम्। चित्तवृत्तिनिरोधेन ध्यानेन।
शीररञ्जनता। विनाशितकिल्बिषा। तथा च मनु:—'प्राणायामैर्दहेद्दोषान्धारणाभिश्च
किल्बिषम्। ध्यानेनानीश्वरान्भावान्धारणाभिश्च किल्बिषम् ॥ अनित्यतामपर्ण जगत
भेतत् ॥ सदाप्नोति पतिस्नेहोतिवर्धितं त्वत्प्रभावत। प्रभावत समो येन लभ्यते
मोहदुरित ॥ शोभनम्। मानिक्षस्य तुल्य'। मोहविनाशात्। एतेन ज्योतिरूपा
भगवतीति प्रतिपादितम्। यदुक्तम्—'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ मम्मयमलमन्तादिकमिदम् ॥ 'त्वं सहति
सितापारा परविद्योतितीर्थत'। 'संसा रम भाम्य त्वं [सत्वं पाहि विपत्तित'] ॥' त्वं
शोभना गति'। निर्मला अनन्ता महती तत्त्वज्ञानम्। अत्र मते। हे मात'। प्राणिनाम-
पद'। गूढचतुर्थं ॥ परमा वा तपोद्दीप्तितापीयास्त्वां स्तुति जना'। परमत्वात् पोषय
चिदं धारणमारता ॥ हे जगत: असमर्थ साधरा जन्त' येभ्यास्त्वां स्तुति धारणमयपक्षव।

१ सुरात्ताज इति देवीशतके. २ वहि इति देवीशतके ३ 'पराभि- इति
देवीशतके ४ संसारा' इति देवीशतके ५. प्राणिनम्। भा' स्यात्. ६ मां'
इति देवीशतके

त्रिविधा । या स्तुतिः प्रकृष्टा तपोऽस्ति । देवीस्मरणमेव परमं तप इत्यर्थः । अनि
यतावयवं यमकमिदम् ॥ 'प्रवादिमतभेदेषु दर्शनेषु महिमाश्रय' । मान्ति त्वयि
यस्येव विज्ञानामसमाश्रय ॥' दर्शनानि महिमाश्रय' । यानि प्रवादिनां भिन्नानि
ज्ञानानि तास्त्वदीया एव इति तात्पर्यम् । मधुभिद्धृत्तस्य कोटीनां विषमभाग एव । अन्त
यमकम् ॥ यतेऽया तव स्फीतमुदारमधु धामत । तवेतो वासवभिर्द मुदा रम्यु-
धामत ॥ यदेतत्तव भक्त्यभिम्लानाध्यमनाम्भ्यापारेण भिक्षवितं सावधानं च । अत
एव धामतयनरूपम् । तवतो दर्पेन्द्रोपलक्षितं धामतोऽन्यो मोहध्वंसनात् चक्षुषी
वत्यनुत्तं धाम्नप्रयोगेऽर्थं भाति । गोमूत्रिकाबन्धो यमकं वा ॥ सुरदेवस्य ते कीर्तिम्
ध्वनन्तं वयन्ति वै । वरदे वस्त्वते धीरैर्मता भुवि देवता ॥ यमर्थस्य । ते भुमांस ।
हे वरदे । धीरैरपि विज्ञस्त्विते । तेषां कीर्तिः सर्वं यातीति भावः । अनियतावयवं यम-
कम् ॥ पादपरावृत्त्या गोमूत्रिकापि ॥ तत्त्वं धीतावततगुणत्वं ततवती तत । चित्तं
चित्तं च विततं धीताधीवयती यत ॥' ततस्त्वं भवती ततत्वं परमप्रधानरूपम् । धीताव
ततगुणत् विभ्रतविवृतीपैम्मयम् । विततुरितवती । सांख्यानां त्वमेव यस्मात्सर्वत्र प्रधान-
मित्यर्थः । ततो हेतोर्हे चित् चित्ते 'धीतसंज्ञाम सांख्यानां प्रधानपुरुषसंज्ञावया यया
देवतयाद्भुतां सांख्यानां तव विततं चित्तं भवत्या यत्नत्वं प्रतीतम् । त्वं यतं प्रसिद्ध
मित्यर्थः । यतेत्वाभर्वे । यथार ॥ तारे धरणम्भुम्पम्धी सुरेश्वरमनुपमे । त्वं
योध्यपाशिवोदमसरोषा पासि मोदने ॥' हे तारास्मि देवि विमले यस्त्वं धारणं सती
भामितशापावोसितम्मागा । सकलस्य संग्रामम् । व्यापारे । दोषवेविण्य निजबाहुना रक्षसि ।
प्रेरणकाले पक्षपितारो देवा भवती शरणमेत्य पुनः संग्रामसमर्थाः संपद्यन्त इति
भावार्थः । उपन्तीसमय भुंग् विन्त्य । अनियतावयवं यमकम् । पादगोमूत्रिकापि ॥
प्रयुक्तेन 'सुरदेवस्य ते कीर्ति-' इत्यमेव पादपरावृत्तिगोमूत्रिकाबन्धेन सह अमुना
पादगोमूत्रिकाबन्धमतुल्यबन्धेयम् । तथा हि । प्राक्तनश्लोकस्य प्रथमतृतीयपादाक्षरै
रयोग क्रमेण पठिद्वये कृते गोमूत्रिकया भाविसम्पद्यते । अथानुत्पात्स्यवर्णान्यां
मुक्तम् । तदुपरिष्टात् 'तारे' इत्यादिश्लोकपादैरर्थक्रमेण पठितद्वये कृते पादगोमू-
त्रिकया भुक्तम् । अन्यस्यां वर्णानामन्यास्या धराकर्पणार्थं द्वारप्रवेशपदकम् ।
इति ॥ 'सुमातरतवाभ्येकरवयातमहामम' । सं वैर्यजननी पाति अवनीरिपुनस्थिति ॥
अकथकानरक्षणेन । एहीतं महम्मनो यथा । वैर्यमुत्पादिश्य । अनियतावयवं सत्याविध
यमकम् ॥ 'कान्तातिक्रमनवदैव त्वं सामगर्भमुपामित' । यथा परमस्थां सुरक्रदानभाया
महसितति ॥' कान्तातिरेकत्र वेदमामन्त्र दानवानां क्रमनं छेदनमिति । अभिद्धीया ।

---

१ 'चाते' इति देवीशतके. २. 'भितव' इति देवीशतके. ३ 'धीतसंज्ञा-अधीत-संज्ञा च सांख्यानाम्' इति देवीशतकव्याख्यायां कैयटः ४ धमाता वैयम रेणवे- इति देवीशतकव्याख्यायां कैयटः ५. 'ततुतां' इति देवीशतकव्याख्या- ६ सुवन्ती' इति देवीशतके ७. 'तुम्' स्यात्.

च्युतं मात्रार्धमात्राबिन्दुवर्णगतत्वेन चतुर्धा ।

तत्र मात्राच्युतकं यथा—

'भूतियोषितमर्त्येभ्यः कृपाणाक्रान्तमण्डल ।
महापदशुभावास स्वस्तमः कुपतिः कुत ॥'

अत्र कृपणेति । विभूतिर्मिस्व च । महापदेति शुभावासेति संबोधने पदद्वयम् । महापदोऽशुभस्यावासेति पदमेकं च ॥

अर्धमात्राच्युतं यथा—

'पयोधरभराक्रान्ते विद्युल्लेखानिराक्रिते ।
कान्तः सर्वजनामीष्टो काले दुःखेन लभ्यते ॥'

अत्र 'न्तु' इत्यत्र नकारो व्यञ्जनं च्युतम् ॥

बिन्दुच्युतं यथा—

'सहसा नन्दिनी ताराधारिता गगनावनिः ।
शोभते भूमिपाकानां सभा च विबुधाश्रिता ॥'

सह हसेन विकाशेनेत्यपि ॥

---

दीनमिदमर्धं । चत्वार एते नेमिश्लोकाः । एष्वाद्ये प्रथमे प्रथमं त्रीणि त्रीण्यक्षराणि लिख्यन्ते । चतुर्थं चारश्लोकप्रारम्भाक्षरं भवति । इत्थं नेम्यर्धनिमीलनम् । पुनरनुक्रमे मध्यलिखिताक्षरश्लोकपादमध्यमेवान्त्यसमक्षरं त्रिषु लिखितेषु चतुर्थं भवतीति नेमेर्द्वितीयमर्धं मीलितं भवति । एवमेव चान्त्यक्षिलिखितैस्त्रैरेव नेमिश्लोकैर्नेमिनिमीलनं भवति । अत एव चारश्लोकवित्ततो नेमिस्थानामाश्रितो वा तृतीयं तृतीयं चाक्षरमादाय वर्णद्वात्रिंशत्कः श्लोकोऽयमुत्पद्यते ॥ 'देव्या वक्त्रोत्पन्नविदेवीधतक्षक्षया । देवितानुपमामाभारतो नानद्युतो गुणिम् ॥' देव्या वापीभर्या सम्प्रामिमर्धि चाक्षित्य या देवी धातकमिति रोदा तथा देवो मिर्देवो विपदेऽसावसमा भावो देविता तथानुपमा देवीयोजवया सर्वोत्तिधाविनी नोनद्युत भीमानामन्वर्धमनामा गुणिमिमामस्पर्धीरिति ॥ नर्मे यथा— मालवे प्रतिमाधार रसामाताशताविभ्र । मानितास्मा धुमा वारे देवामा यत ते समा ॥ हे प्रतापितर्मोत्तर वारे रवेन समस्तातोसा इता वसोमा यया । एकामीस्वावरवा वारे एव । देवैर्विजिगीषुभि पम्मितैरामा वसा । यतेस्तावर्धे निपात । एषोऽक्षरक्रमबन्धः । तथा हि—मानवत् कर्णिकास्थाने । ततोऽक्षरद्वयेनैक दिग्दलनि सरणक्रमेण विदिग्दलं चाक्षरद्वयेन प्रवेशक्रमेण । तत च एव मानवत् । ततोऽक्षरद्वयेन दिग्दलं निर्गमप्रवेशाभ्यां मानवत् वाचनम् । ततोऽक्षरद्वयेन विदिग्दलं निर्गमेन तावदेव दिग्दलं प्रवेशेन मानवत् वाचनम् । पुनर्भागन्तो निर्गमेण च तदेवाक्षरमिकालिना क्रमेण एवाक्षरमनुत्पादमिति दिग्दलवर्णानां द्विर्भावस्य चाक्षरस्य भावना ॥

वर्णच्युतं यथा—

'सितनृशिरःस्रजा रचितमौलिशिरोमणिमौक्तिकैस्तया
शिशिरुचिरोर्ध्वरन्ध्रयुगलाटतटे तिलकक्रिया च सा।
स्फुटविकटाट्टहासललितं वदनं स्मितपेशलं च तं
क्षमिनवमीश्वरो महति वेपमहो तुहिनाद्रिधार्थयुक् ॥'

अत्र गौरीश्वरवर्णने सिद्धिच्छन्दसि प्रतिपादमाद्याक्षरद्वयपातेऽन्त्याक्षरसप्तकच्युतौ केश्वररूपवर्णनमेव प्रमिताक्षरावृत्तेन। यदि वा आद्याक्षरसप्तकच्युतौ अन्त्याक्षरद्वयपाते च गौरीवर्णनं द्रुतविलम्बितवृत्तेन ॥

गूढं क्रियाकारकसंबन्धपादविषयत्वेन चतुर्धा।

क्रियागूढं यथा—

'स्तनजघनाभिराममन्दं गमनमिव मदिरारुणेक्षणायाः।
कथमिव सहसा विलोकयन्तो मदनशरज्वरजर्जरा युवानः ॥'

'हे युवानः, कथमिव यूयं न स्थ' इति क्रियागूढम् ॥

कारकगूढं यथा—

'केनेमौ दुर्विदग्धेन हृदये विनिवेशितौ।
पिबतस्ते शरावेण वारिकहारशीतलम् ॥'

अत्र 'शरौ' इति कर्मणो गूढत्वम् ॥

संबन्धगूढं यथा—

'न मया गोरसाभिज्ञं चेतः कस्मात्प्रकुप्यति।
अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥'

अत्र 'मे चेतसा गोरसाभिज्ञम्' इति संबन्धगूढम् ॥[1]

पादगूढं यथा—

(१)(१) (१) (१)(१)( )( ) ( )
'धुवियद्गामिनीतारसंरावविहतश्रुतिः।
हैमेषुमाला शुशुभे······ ······ ·· ··· ॥'

अत्र 'विद्युतामिव संहतिः' इत्यस्य गूढत्वाद्गूढत्वम् ॥

---

१ मे चेतः आगोरसाभिज्ञम्' स्यात्.

गूढादीत्यादिपदेन प्रश्नोत्तर-प्रहेलिका-दुर्वचकादिपरिग्रहः ॥

एतच्च कष्टकाव्यत्वात्क्रीडामात्रफलत्वाच्च न काव्यरूपतां दधातीति न प्रतन्यते ॥

अर्थभेदभिन्नानां भङ्गाभङ्गाभ्यां युगपदुक्तिः श्लेषः ।

'अर्थभेदाच्छब्दभेदः' इति नयेन वाच्यभेदेन भिन्नानामपि शब्दानां तन्त्रेण युगपदुच्चारणं भिन्नस्वरूपापह्नवेन श्लिष्यन्ति शब्दा अत्रेति श्लेषः । स च वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययवचनविभक्तिरूपाणां शब्दानां भङ्गाच्च भङ्गाच्च द्वेधा भवति ।

यथा—

'अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी, वसु च वृष एको बहुवयाः ।,
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो
विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥'

अत्र विधुर्विधिश्चेत्युकारेकारयोर्वर्णयोर्भङ्गः ॥

'ते गच्छन्ति महापदं भुवि पराभूतिः समुत्पद्यते
तेषां तैः समलङ्कृतं निजकुलं तैरेव लब्धा क्षितिः ।
तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिता नित्यशो
ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥'

---

पादिग्रहणाद् एक-द्वि-त्रि-चतुष्क-वाच्यावाचकयो ज्ञेया ॥ प्रश्नोत्तरेति । यथा आह—'पशु पर्यनुयोगस्य निर्भेदः क्रियते बुधैः । विदग्धगोष्ठ्यां वाक्यैर्यत् तद्धि प्रश्नोत्तरं विदुः ॥' यथा—कस्मिन्नस्मि गुहा वक्ति प्रश्नेऽस्मिन्निन्दुत्तरम् । कम्बुधं न जानाति कर्दमकि यत्सखे ॥' अत्र कर्दमसीत्येतद् कर्णपीभ्यां मुख्य दर्शयति उत्तरम् ॥ एतच्च अन्तःप्रश्न-बहिःप्रश्न-जातिप्रश्नादिभेदैरनेकप्रकारं महता-ग्रन्थोऽल्पफलविपत्तिकलापप्रसङ्गभयान्न प्रतन्यते ॥ प्रहेलिका यथा—'पद्मिनीनां मेघानां मातृकं प्राप्य विघटितम् । दम्पतोऽप्यस्य निमीय शशीकैवं एवं मतः ॥' येऽन्या अन्यासाम् ॥ एवमन्येऽपि प्रहेलिकाप्रकाराः अभ्यूह्याः ॥ तथा दुर्वचं दुर्भगं दुर्गेयमपि क्रीडायां न निरूप्यते । यथा—'नाग्रा त्वाभूरिपद्वे न माद्रे मार्दभूमो जनः । या देवपूजा कुरुद्वे न महाराजे तु गोपिन ॥' नागाः राजधा । त्वद्वरणमिति त्वाभूरे

अत्र महतीमापद महत्पद वेत्यादि पदाना भङ्ग ॥

'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमिनी नेत्रे तनुर्वा हरेः ॥'

अत्र च 'नीता ईहितमाप्तये' इति च स्त्रीनपुंसकलिङ्गयो श्लेष ॥

'कुरु त्वत्समूलेहे महिमोहहरे तुहारिविच्छित्ते ।
हरिणारिसारदेहे वरे वर हर उमे मावम् ॥'

कश्चिद्युगुत्सुर्ध्यानोनीना भवानीं सकान्तां च संस्कृतप्राकृतया वाचा तुष्टुवे—हे उमे, हरे रुद्रे मावं भवतां विधेहि । भवान्मम । कीदृशे हरे । कामसमर्थान्मनस्तुष काम छेदि स यस्त्वत्र । महिमैव वितर्कहर्यरि । हरसंनिधौ हि सर्वज्ञानामिमव इति श्रुति । तोऽहन्त्यर्वन्ति येऽस्यस्तैर्वि रहिते सिंहमलश्वरीरे परिणेवरि भेदम् । उमायामा एव इमानि संबोधनपदानि ॥ प्राकृते तु—हे वरे कान्ते, ते तव सबन्धिनि कुरुलालसमूलेस्ते महीमोहगृहे हारिणि विच्छित्ते च तनुमध्यत्वात् । हरिप्रियामभानवपुषि(?) यद्वरं नयनाननस्तनजघनादि तन्मेऽभिलायं हरतु कामं पूरयतु ॥

एवं भाषान्तरभङ्गेऽप्युदाहार्यम् ॥

हरमरसारिरिन्द्रस्य राष्ट्रे सर्वे ॥ भाषान्तरभङ्गेऽपीति । संस्कृतभाषाया प्राकृत्या समावेशो यथा—'कुस्मभलियवलोके सलिले घे लाघवास्मिन्नपुरे । कमलस्य कलिके मालेरि धमस्तके विषमे ॥' कश्चिभावसंधारमयो वक्ति—कुसुमालिनो मरद

१ 'समनं' क प्र २ 'ध्यानोभीता' स्यात्. ३ कुरु त्वत्समूलेहे महिमो हरे तुहारिविच्छिने हरिणारिसारदेहे वरे वरं हरे उमे मावम्' इत्येवं संस्कृतपक्षे पदानि

४ कुरुत्वलसमूलेहे महीमोहगृहे ते हारिविच्छिन्ने ।
हरिनारीसारदेहे वरे वरं हरतु मे मावम् ॥' इति प्राकृतपक्षे छाया

१ कुरराविरावलोके सलिले तस्मारसाम्रिरपपुरम् ।
कमलमधरसमधिरं मारयति वास्नतो विषमम् ॥' इति मागधीच्छाया

पत्ते । गुणक्रियासाम्ये सा भविष्यतीति चेत्, न । अर्थश्लेषस्य निर्विषयत्वप्रसङ्गात् । अत्र 'दिशः प्रसादयन्नेव' इत्यादौ वक्ष्यमाण उपमाविरहितोऽर्थश्लेषस्य विषयः कल्प्यते । तदा द्वयोरप्यन्यत्र लब्धसत्ताकयो रेकत्र संनिपाते संकरतैव प्राप्नोति । गुणक्रियासाम्यमुपमा शब्दसाम्यं तु श्लेष इति विशेषस्यानभिधानात् शब्दसाम्यमुपमाया विषयः । श्लेषस्तूपमया विरहित इति 'स्तय च पल्लवा–' इत्यादौ उपमैव न्याय्या ॥

एवं च—

'अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका ।'

इत्यादौ न विरोधप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुर्विरोध एव । अत्र हि श्लेषस्य प्रतिभामात्रं न पुनः प्ररोहः । न च विरोधाभास इव विरोधः श्लेषाभासः श्लेषः । तस्मादेवमादिषु श्लेषप्रतिभोत्पत्तिरलंकारान्तरमेव ॥

---

फले विश्रान्तौ यो न कुम्भकाद्विषये स्थितं प्रयाति ॥ अलंकारान्तरमिति । समासोक्त्यादित्वम् च तु श्लेष इत्यर्थः । तथा च— अनुरागवती संध्या दिवसस्तत्पुरःसरः । अहो दैवगतिश्चित्रा तथापि न समागमः ॥ इत्यत्र समासोक्तित्वम् । तत्पुरःसर इति भावप्रधानस्य इव संध्यायाः कामुक इव दिवसः पुरः संमुखं सरतीति व्याख्येयम् । न तु पदातिन्यायेनाग्रे दिवसो गच्छति संध्या पश्चादिति । एवं हि पर्यन्तेऽपि समागमो न भवतीति किं चित्रम् ॥ 'नाकस्य प्रसर–' इत्यादौ अन्योक्तित्वम् ॥ 'यो गोपीजनवल्लभ स्तनतटव्यासक्तकण्ठस्थलाभाभरणश्चको वामुकनिशितवल्लर्यैव' । कृष्णः सोऽपि हृतायधा व्यपहृत भक्त कथान्यथ न किं राधे मधुसूदनो यदि यदि प्रामाणिकयोक्तः ॥ इत्यत्र सर्वेश्वरत्वम् ॥ यदि वाच्योक्तेः सारस्यादि, सर्वेश्वरस्य च सारस्यादि श्लेषव्यतिरेकेण भिन्नोऽप्यस्ति विषयस्तथापि श्लेषस्यापोह्य सर्वेश्वरानुग्राहकत्वेन प्रकृतालंकारत्वं भवतु श्लेषत्वमिति । अलौकिकमहालोकप्रकाशितजगत्त्रय । स्तूयते देव सद्वंश मुक्तारत्न न कैर्भवान् ॥' आदाय चापमचलं कृत्वा हीनं गुणं विषमदृष्टिः । यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥ अचलं पर्वतं निश्चलं च । अहीनां सर्पाणामिनं स्वामिनं हीनं च । विषमा त्रिसंख्या असिता च । अच्युतः कृष्णः पतिश्च्युतश्च ॥ अचलमचलं भीमात्मनस्यैव पृथिवीपतिः । न भिन्ना कररपक्षु कृत्यैकस्यमाप्त ॥ इत्यादौ च एकविषयत्वमविरोधप्रतिभोत्पादक

---

१ इति- स्यात्. २. पत्रैव' क्व प्र

अथैक्ये त्र्यादिभाषाणां च।

द्वित्रिचतुःपञ्चषण्णां भाषाणामर्थमैक्ये युगपदुक्तिर्व्यादिभाषाश्लेषः।

तत्र संस्कृतप्राकृतमागधपिशाचशूरसेनापभ्रंशभाषाणां द्वियोगे पञ्चदश, त्रियोगे विंशतिः, चतुर्योगे पञ्चदश, पञ्चयोगे षट्, षड्योगे एक। सर्वमीलने भाषाश्लेषस्य सप्तपञ्चाशद्भेदाः। एवं च पूर्वोक्तभाषाश्लेषे मिश्रा भेदेऽपि द्रष्टव्याः॥

संस्कृतप्राकृतयोर्योगो यथा—

'सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम्।
विरसं विरहायासं वोढुं तव चित्तमसहं मे॥'

संस्कृतमागध्योर्यथा—

'शुर्ले शलन्तु श मा विशन्तु शवका वञ्च विशङ्कुा वा।
अशमदश दुःशीला विशन्ति काले लका अधिवम्॥'

शलन्तु गच्छन्तु। अभिरोहन्त्वित्यर्थः। शं शुभं वा यान्तु। संकीर्णाः पापकारिणः इति यावत्। विशङ्काः सन्तो वञ्चनपरा वा विशन्तु। यतोऽविद्यमानोपशमाववर्तं यथा भवत्येवमेते लका अकल्याणं दिशन्त्येव।

संस्कृतपैशाच्योर्यथा—

'चम्पककलिकाकोमलकान्तिकलापाय दीपिकानङ्गी।
इच्छति गजपतिगमना चपलायतलोचनालम्पितुम्॥'

संस्कृतशूरसेन्योर्यथा—

'अधरदलं ते तरुणा मविरामदमधुरवाणि सामोदम्।
साधु पिबन्तु सुपीवरपरिणाहपयोधरारम्भे॥'

सुपीवरेत्यापि सबोधनपदम्।

संस्कृतापभ्रंशयोर्यथा—

'क्रीडन्ति प्रसरन्ति मधु कमलप्रणयि जिह्नन्ति।
भ्रमरा भिन्न सुविभ्रमा मत्ता भूरि रसन्ति॥'

एवं द्वियोगान्तरे त्रिचतुर्णा च योगेषु चोदाहार्यम्।

१ 'कलोन्ध' इत्यर्थः. २. 'परिणाहि' इत्यर्थः.

पद्मयोगो यथा—

'भक्तोत्पलमले चित्तपद्मकमलालये ।
पाहि चण्डि महामोहभङ्गभीमबलामले ॥'

हे चण्डि देवि, रक्ष । भक्तपद्मश्रीके, मनःप्रसादनपद्मालये । महामोहस्य जन्मकष्टाम्पत्तायाः अविद्याया भञ्जने उग्र महद्बलं तेन अमलके ॥

उक्तस्यान्येनान्यथा श्लेषादुक्तिर्वक्रोक्तिः ।

अन्येन वक्त्रान्यथोक्तस्यान्येन प्रतिवक्त्रा श्लेषाद्भङ्गाभङ्गरूपादन्यथाभिधानं वक्रोक्तिः ।

भङ्गाद्यथा—

'किं गौरि मां प्रति रुषा, ननु गौरहं किं,
कुप्यामि कां प्रति, मयीत्यनुमानतोऽहम् ।
जानाम्यतस्त्वमनुमानत एव सत्य
मित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥'

अभङ्गाद्यथा—

'कोऽयं द्वारि, हरिः, प्रयाह्युपवनं शाखामृगस्यात्र किं,
कृष्णोऽहं दयिते, बिभेमि सुतरां कृष्णादहं वानरात् ।
कान्तेऽहं मधुसूदनो, व्रज लतां तामेव मध्वन्विता
मित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥'

काकुवक्रोक्तिस्त्वलङ्कारत्वेन न वाच्या । पाठधर्मत्वात् । तथा च

---

श्लेष इति संकर एवायम् । एवमन्यथाप्यूह्यमिति ॥ भत इति । भङ्गादभङ्गाच्च । न तथा भङ्गुरा अर्थस्तम्भा यस्य सत इमपि ॥ काकुवक्रोक्तिरिति । 'कक लौल्ये' इत्यस्य धातोः काकुशब्दः । तत्र हि साकाङ्क्षनिराकाङ्क्षादिक्रमेण पठ्यमानोऽयं शब्दः प्रकृतार्थादतिरिक्तमपि वाञ्छतीति लौल्यमस्याभिधीयते । यदि वा ईषदर्थे कु-शब्दस्य कादेशः तेन ईषदर्थप्रतीतेर्भूमिः काकुः । काकुर्भिन्ना तथा-पाठधर्मत्वात् । तद्रूपा वक्रोक्तिः काकुवक्रोक्तिरिति ॥ पाठधर्मत्वादिति ।

१ 'हरि' स्यात्. २ 'विस्पष्टं क्रियमाणादक्लिष्टा स्वरविशेषतो भवति । अर्थान्तरप्रतीतिर्यत्रासौ काकुवक्रोक्तिः ॥' इति रुद्रटे लक्षणं ज्ञेयम्. ३ 'पाठ' स्यात्.

१ 'भङ्गुरा' इत्येवं केचित्पाठ्योचित पाठः. २. 'पाठ' इति स्यात्. वाच

सा च काकुर्द्विधा—साकाङ्क्षा निराकाङ्क्षा च । वाक्यस्य साकाङ्क्षनिराकाङ्क्षत्वात् । यस्माद्वाक्यात् यादृशः संकेतबलेनार्थः प्रतीयते, न तादृश एव, किं तु न्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्तद्वाक्यं साकाङ्क्षम् । तद्विपरीतं निराकाङ्क्षम् । वक्तृगता चाकाङ्क्षा वाक्ये उपचर्यते । सा च प्रकरणबलादभिधीयते । विशिष्टविषयत्वं च तस्मात्तस्य एवावसीयते ॥

विषयोऽपि त्रिविधः—अर्थान्तरम्, तदर्थगत एव विशेषः, तदर्थाभावो वा । यथा—

'देशः सोऽयमरातिशोणितजलैर्—'[1]

इति । अत्र साकाङ्क्षकाकुप्रभावात् 'ततोऽप्यधिकं कुरुते' इत्यर्थान्तरे गतिः ॥

---

साकाङ्क्षमिति । यस्याभिलापस्यार्थपरिसमाप्तवर्णोच्चारं कण्ठोरःस्थामर्थं यथा भवति तथैतत्पठनीयम् ॥ तद्विपरीतमिति । यादृशो वाक्यार्थसंकेतबलेनार्थः प्रतीयते तादृश एव यत्राप्यूनाधिकः प्रमाणबलेन निर्णययोग्यस्तदिति ॥ निराकाङ्क्षमिति । यस्याभिलापस्य परिसमाप्तवर्णोच्चारं शिरःस्थावस्थं यथा भवति तथैव पठनीयमिति यावत् ॥ काकुप्रभावादिति । उपात्तकम्पितवर्णस्योच्चरितसाकाङ्क्षस्य पाठमात्रस्य वा काकुपठितिस्वभावादित्यर्थः । एवमुत्तरत्रापि साकाङ्क्षकाकूदाहरणद्वये व्याख्येयम् ॥ ननु श्रुतमर्थमनादृत्य कथं काकुरर्थान्तरं प्रतिपादयेत् । तथोक्तमन्यैः—'वस्तुस्वभावोऽत्र दूतः न हि दृष्टेऽनुपपन्नं नाम' इति । वयं तु ब्रूमः—इह येयं प्रकर्षेण संवित्सम्बन्धेन प्राप्तोत्कर्षा वर्णाभिव्यक्तिविशेषहीना यावज्जन्यते सा नादरूपा सती ह्यौ त्साहविस्तारात्ति विधिनिषेधावभिप्रायं वा तत्कर्षं भिन्नतया तादात्म्येन वा प्रत्याययतीति तावदित्यलम् । तथा च ग्राम्यन्तरस्य सुखस्पर्शमेवादेरपि नादमात्रस्य मधुरोपयोगादि प्रतिपद्यते तदर्थं नातापिततास्वादनयमोऽनुमानं तावत् । ये त्वेते वर्णविशेषास्ते तत्स्वरूपसामान्यात्मकत्वात्कम्बुमभिधयात्व इव प्राप्यप्रकाशप्रतीतिरिव निमित्तान्त

---

[1] 'अभिमन्यवः' पूरितः
> धनायैव तथाविधं परिभवकान्तस्य केशग्रहात् ।
> तान्येवाहितहेतिघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
> यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥

इति वेणीसंहारे पूर्णं श्लोको वेणीसंहारे. २. ततोऽप्यधिकं' स्यात्.

---

१ यनिपुणार्थमनिर्धारितवर्णा' मरत २. 'तथिति स्यात् ३ 'निपुणार्थ निर्धारित' मरते

'स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमवन्ध्यतामभिपयोधि सांध्यो विधिः।
तदात्मज इहाङ्गदः सहित एष सौमित्रिणा
क्व स क्व स दशाननो ननु निवेद्यतां राक्षसाः॥'

अत्र 'तदात्मज इहाङ्गदः' इति साकाङ्क्षया काका सगर्वता वालिपुत्रोचिता विशेषा गम्यन्ते॥

'निर्वाणवैरदहनाः —'

इति। अत्र भवन्तीति साकाङ्क्षाकाकुर्भवनाभावमाह। भवन्तीति च वचनोच्चारणं स्वर्गेऽसमावर्तां विद्यमानभावस्य निषेधात्मनो विषयं भवनलक्षणमर्पयति। न भवन्त्येवेत्यर्थः॥

**भिन्ना कृतेः शब्दस्यैकार्थतेव पुनरुक्ताभासः।**

भिन्नरूपाणां सार्थकानर्थकानां शब्दानामेकार्थत्वमिवामुखे, न पुनः परमार्थतः, पुनरुक्तवदाभासनं पुनरुक्ताभासः।

यथा—

'सस्वं सम्यक्समुन्मील्य हृदि भासि विराजसे।
द्विपामरीणां त्वं सेनां वाहिनीमुदकम्पयः॥'

---

तदपेक्षात्वात् एवमन्यत्राप्यभिप्रेतेऽन्यथापि प्रयोक्तुं शक्या। अत एव शब्दाभिधायाः। ग्रन्थस्तु हरिशुनिमशुचपशुच्छस्वागीयो नाम्नपाख्यं पार्थेन ईश्वरवाचिदोऽन्यथासिद्धं शब्दार्थे वाचत एव वा यथोक्तं मीमांस मयमिति। अन्यप्रकारता वा वाक्यशेष विशेषार्पणेन भिद्यते॥ वचनोच्चारणमिति। वचनस्य भवन्तीति रूपस्य॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके पञ्चमोऽध्यायः।

---

१ प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः॥'
इति शेषभागेन संपूर्णश्लोको वेणीसंहारे द्रष्टव्यः.

१–१ 'भवन्त्विति' स्यात्, पाठके वा भवन्ति' इति स्यात् विवेकसंवादात्.

---

१ 'इन्द्रवज्राभिदो' स्यात्.

हे देवि, विगतरजोविकारे हृदि सत्त्वास्य गुणप्रकाशस्य शोभसे । अरीणामखिलानां सनायका चमूरुत्कम्पितवती । अत्र 'भासि' 'विराजसे' इत्यादिशब्दाः सार्थकाः । 'तवकम्' 'पय' शब्दौ निरर्थकौ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ शब्दालंकारवर्णनः पञ्चमोऽध्यायः ।

---

षष्ठोऽध्यायः ।

अथार्थालंकाराणामेकोनत्रिंशतमाह—

**हृद्यं साधर्म्यमुपमा ।**

कार्यकारणयोरसंभवादुपमानोपमेययोरेव साधर्म्यं भवतीति तयोरेव समानेन धर्मेण संबन्ध उपमा । हृद्य सहृदयहृदयाह्लादकारि । तेन सत्त्वज्ञेयत्वप्रमेयत्वादिसाधर्म्यं नोपमा । तथा 'कुम्भ इव स्तनम्' इत्यादि शृङ्गारादौ । हास्यादौ तु न दोषः । हृद्यग्रहणं च प्रत्यलंकारमुपतिष्ठते । साधर्म्यं च देशादिभिर्भिन्नानां गुणक्रियादिसाधारणधर्मवत्त्वम् । अभेदे ह्येकत्वमेव स्यात् । तेन 'पुरुष इव पुरुषः' इति सत्यपि पुरुषद्वयस्य पुरुषत्वानुगमनलक्षणे साम्ये नोपमा । यदा तु द्वितीयः पुरुषशब्दः शक्तिमूलव्यङ्ग्यपरतयावदातकर्मवचन, तदानीं भिन्नत्वाद्भवत्येव ।

यथा—

> 'निम्नमभिमुखः शूरोऽनेकशो बहुशः परान् ।
> संग्रामे विचरत्येष पुरुषः पुरुषो यथा ॥'

एवं च यत्रासाधारणताप्रतिपादनार्थमेकस्यापि भेदः कल्प्यते, तत्राप्युपमा भवति ।

---

एकोनत्रिंशतमिति । उपमोत्प्रेक्षारूपकनिदर्शनादीपकान्योक्तिपर्यायोक्तातिशयोक्त्याक्षेपविरोधसहोक्तिसमासोक्तिजातिव्याजस्तुतिश्लेषव्यतिरेकार्थान्तरन्याससंसन्देहापह्नुतिपरिवृत्त्यनुमानस्मृतिभ्रान्तिविषमसमसमुच्चयपरिसंख्याकारणमालासंकराख्याः ॥ असाधारणताप्रतिपादनार्थमिति । एतत्सरूपमस्य चार्थीसमसाधारणतया तत्प्रतिपादनार्थमितरार्थे । यथा 'दमो यदि भोमि पुण्यप्रवाही' इत्यादौ कल्पितोपमायामस्य रूपाद्योपमेयपरेरतिशयोक्तिरिति च अपरेषामयो धर्मधर्मिणस्स बहुशः प्रासोत्कर्षस्य

यथा—

'न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव ।
यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः ॥'

तत्र देशेनोपमानोपमेययोर्भेदो यथा—'मथुरेव पाटलिपुत्रमाकन्दनपदम्' ।

कालेन यथा—'वसन्त इव हेमन्तः कामिनीसुखहेतुः' ।

क्रियया यथा—'नृत्यमिव गमनमस्याः सविलासम्' ।

गुणेन यथा—'गौरीव श्यामा सुभगा' ।

जात्या यथा—'विप्र इव क्षत्रियः श्रोत्रियः' ।

द्रव्येण यथा—'तीर्थकर इव गणधरः पूज्यः' ।

समवायेन यथा—'विपापित्वमिव वह्नित्वं हिंस्रम्' ।

अभावेन यथा—'मोक्ष इव समाधौ दुःखाभावः' ।

---

यथेह च साम्यसमन्वयमुद्भवजातिप्रभृतिविरहात्सर्वेषां पुराणानां पदार्थानां मूलमप धर्मितं किमपि काल्पनिकमुपमानं धर्मान्तरं वा विवक्षितजातिसमत्वसंपत्तये कल्प यन्ति तत्समन्वयेऽपि धर्ममात्रवशीकृतमार्यमाहात्म्यात्काल्पनिकमप्युपमानमुपपन्नम् ॥ ननु वाक्यस्य द्वित्वमभिधानत्वात् तमपि [illegible]योपमानोपमेयभावाभाव-स्थितेरुपमा [illegible] [illegible] न संभवतीत्याशङ्क्याह—एकस्यापि भेदः कल्प्यत इति । अयमभिप्रायः—समारोपितस्य द्वित्वसाम्युपगमादुपमानो पमेयभावसंबन्धविवक्षणत्वमुपमायाः [illegible] विषय एवेति [illegible] प्रयुक्तत्वात्तेन वाच्य इति ॥ विलासायुधः कामः । अत्र सैव नितम्बिनीत्येतत्तद्विलासा इत्येतयो पमानतया विभाव्यते [illegible] [illegible] ॥ विपापित्वमिव वह्नित्वमिति । अत्र 'समानकर्तृकेषु [illegible]' इति [illegible] सामान्यार्थीत्समवायस्य [illegible] गुणस्य हि भावाद्वा [illegible] 'गतस्य' इति लक्षणेन समवायस्याभिधानम् । तत्र च समन्वयेऽपि [illegible] भेदकत्वं व्याप्यम् । तथा विप्रापोपाधिकः समवाय उपमानं [illegible] इति ॥ मोक्ष इवेति । मोक्षे दुःखाभाव इव समाधौ दुःखाभाव इति भावः ॥ [नित्यसमास

---

१ भावत्वेन स्यात्. २. 'इत्यर्थः' ख. ३ अयं [illegible]पर्यन्तः पाठोऽत्र [illegible] भवेत्. अग्रे 'नितम्बिनी-' इत्येतत्पाठोत्तरमस्य 'इवेव विलास' [illegible] भवेत्.

सोपमानोपमेयधर्मोपमावाचकानामुपादाने पूर्णा वाक्ये वृत्तौ च ।

सेयमुपमा । प्रसिद्धमुपमानमप्रसिद्धमुपमेयम् । प्रसिद्ध्यप्रसिद्धी च कविविवक्षावशादेव । धर्मो मनोज्ञत्वादि । उपमावाचका इव-वा-यथा शब्दाः सदृशसनिभादयश्च । अमीषामुपादाने पूर्णा । सा च वाक्ये वृत्तौ च भवति ।

वाक्ये यथा—

> 'मम कामज्वरोच्छित्त्यै नृप सन्तापवृद्धये ।
> वियोगिनामभूचान्द्री चन्द्रिका मदन यथा ॥'

परार्थाभिमानं वृत्ति । सा च यद्यपि समासतद्धितनामधातुभेदेन त्रिविधा तृधामामुदाहरिष्यते, तथापीह समासतद्धितयोरेव सम्भवति । यथा—

> 'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
> तरुण्य इव भान्ति स्म चक्रवाकैः स्तनैरिव ॥'

अत्रैवेन नित्यसमासः ।

---

इति । ये त्विवेन समासं नेच्छन्ति तन्मते वाक्योपमायामिदमुदाहरणम् । समासोपमायां तु— 'अमितधमयोरपप्रधनेषु प्रगुणपरिमिमीतभी । सुरवरतरवः स मयाभिमत्तमीकः क्षितीश्वर न कस्य ॥' इत्युदाहार्यम् ॥] प्रसिद्धमिति । इन्दुमुखी कन्या इत्यादौ प्रसिद्धं चन्द्रादि उपमानम्, अप्रसिद्धं तु मुखाद्युपमेयम् । ननु 'तव कुमुदनाथेन कामिनीमम्पपाण्डुना । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥' इत्यादौ कामिनीमण्डादेरुपमानत्वं चन्द्रादेश्चोपमेयत्वमुपलभ्यते तत्कथमुच्यते प्रसिद्धमुपमानमप्रसिद्धमुपमेयमिति आह—प्रसिद्ध्यप्रसिद्धी चेति । तथा हि चौम्यस्य गण्डपाण्डुतायाः कल्पनाद्युपपत्ते । कामयते प्रियतममिति कामिन्या अवयवे कामिनीगण्डस्थलीयमानहृदयसितदुर्लभमनोहारिप्रियतमायां गण्डचन्द्रादस्याभिहितम स्वरगाविशेषेण प्रधानतया प्रसिद्ध इति कविविवक्षावशादेव प्रसिद्ध्यप्रसिद्धी अधिक्रियेते । न सर्वलोकप्रसिद्ध्यपेक्षया । यैरपि प्राकरणिकमुपमेयमप्राकरणिकमुपमानमिति पक्षः समाश्रियते तैरपि कविप्रसिद्धिरवश्यमाश्रयितव्यैव । तथा हि चन्द्रकामिनीगण्डस्थिना प्रसिद्धगुणत्वाप्राकरणिकेन प्राकरणिकं मुखचन्द्रादप्रसिद्धगुणमुपमीयते । उप समीपे मीयते क्षिप्यते स्वसादृश्यपरिमाणमाधुपनयं येन तदुपमानम् । यत्तु येन समीपे क्षिप्यते सौन्दर्यादिगुणयोगित्वेन तत्र प्राकरणिकेऽप्रसिद्धं वदनचन्द्रादि तदुपमे

१ 'कामिन्या' स्यात्.

'गाम्भीर्यमहिमा तस्य सत्य गङ्गाभुजङ्गवत्।
दुरालोकः स समरे निदाघाम्बररत्नवत्॥'

अत्रेवार्थे तुल्यार्थे च वतिस्तद्धित।

एकद्वित्रिलोपे लुप्ता।

उपमानादीनां मध्यादेकस्य द्वयोस्त्रयाणां वा यथासंभवं लोपे लुप्तोपमा। सा च वाक्ये वृत्तौ च।

एकलोपे वाक्यगता यथा—

'अनाविल्याभिसबाधममन्दानन्दकारणम्।
न किंचिदन्यदस्तीह समाधे' सदृशं सखे॥'

अत्र यद्यपि सदृशशब्दाभिधेयस्योत्कृष्टतरगुणत्वेनाप्राप्यताप्रतिपादनादुपमानत्व बलादायातम्, तथापि तस्य साक्षादनिर्देशादुपमानस्य लोपः।

तथा—

'धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः।
करणीयं वचश्चेतः सत्य तस्यामृत यथा॥'

अत्राह्लादकत्वादिधर्मलोप। उपमेयोपमावाचकयोस्तु वाक्ये लोपो न संभवति।

द्विलोपे यथा—

'ढुंण्ढुल्लन्तु मरीहिसि कण्टयकलिआइ केअइवणाइं।
मालइकुसुमेण समं भमर भमन्तो न पाविहिसि॥'

अत्र धर्मोपमानयोर्लोप।

वृत्तौ एकलोपे यथा—

'अनाविल्याधिसंबाधममन्दानन्दकारणम्।
न किंचिदन्यदस्तीह समाधिसदृशं सखे॥'

अत्र समासे उपमानस्यानिर्देश।

---

१ 'तुल्यार्थ' क्व घ

२ अन्वेषयन्मरिष्यसि कण्टककलितानि केतकीवनानि।
मालतीकुसुमेन समं भ्रमर भ्रमन्नपि न प्राप्स्यसि॥ [इति च्छाया।]

यथा—

'राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
रम्भास्तम्भाविवोरू च करिकुम्भाविव स्तनौ ॥'

अत्रैवेन नित्यसमासे धर्मलोपः ।

यथा—

'शरदिन्दुसुन्दरमुखी कुवलयदलदीर्घलोचना सा मे ।
दहति मनः कनकनिभा रम्भागर्भाभिरामोरूः ॥'

अत्र बहुव्रीहौ उपमावाचकलोपः ।

यथा—

'मृधे निदाघघर्मांशुदर्शं पश्यन्ति ते परे ।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥'

अत्र नित्यसमासे 'कर्मकर्त्रोर्णमि' इव-लोपः ।

यथा—

'हंसो ध्वाङ्क्षविरावी स्यादुष्ट्रक्रोशी च कोकिलः ।
खरनादी मयूरोऽपि त्वां चेद्वदसि वाग्मिनि ॥'

अत्र नित्यसमासे कर्तरि णिनि चोपमावाचकलोपः ।

यथा वा—

'पूर्णेन्दुकल्पवदना मृणालीदेश्यदोर्लता ।
चकोरदेशीयनयना सा स्वप्नेऽपि न दृश्यते ॥'

अत्र तद्धितवृत्तौ धर्मलोपः । इवार्थश्च कल्पबादिभिः साक्षादभिहितः । ईषदपरिसमाप्तः पूर्णेन्दुरिति पूर्णेन्दुसदृशमित्यर्थो न तु पूर्णेन्दुरेवेति ईषदपरिसमाप्तिविशिष्टेऽर्थे कल्पबादीनां स्मरणात् । ईषदपरिसमाप्तः पूर्णेन्दुरिति वचनवृत्त्या यद्यपि रूपकच्छाया भवति, तथापि प्रातीतिकेन रूपेणोपमैव ।

---

वम् । वचनवृत्त्येति । सामानाधिकरण्येनेत्यर्थः । वस्तु ईषदपरिसमाप्तिर्वैशिष्ट्यापन्नता पूर्णेन्दुकल्पेन पूर्णेन्दुमात्रमित्यत तदाकारो वा प्रत्ययः । तत्र जातिसामान्यैका

---

१. 'र्त' स्मृ.

यथा यत्र पूर्णेन्दुसदृशं वदनमित्ययमर्थः प्रतीयते, न त्वौपदपरिसमाप्तः पूर्णेन्दुरिति ।

यथा वा—

> 'सूर्यीयति सुधारश्मिमनायति मृतामले ।
> मृतस्तु कान्ताविरहे स्वर्गोऽपि नरकीयति ॥'

अत्र नामधातुवृत्तौ कर्माधारयो क्यनि कर्तृ क्विपि क्यङि च इव-लोप ।

द्विलोपे यथा—

> 'ढुण्ढुल्लिन्तु मरीहिसि कण्टयकलियाइ केयइवणाई ।
> मालइकुसुमसरिच्छ भमर भमन्तो न पाविहिसि ॥'

अत्र कुसुमसदृक्षमिति समासे धर्मस्योपमानस्य च लोप ।

तथा—

> 'परिपन्थिमनोराज्यशतैरपि दुराक्रम ।
> सपरायं प्रवृत्तोऽसौ राजते राजकुञ्जर ॥'

अत्र समासे धर्मस्येवस्य च लोप ।

---

निरवयवा चेति सर्वस्मिन्नाश्रये समाप्ता । द्रव्यमपि यस्तया संबद्धं तत्सर्वतः पूर्णत्वसमाप्तमेव । तस्मादुभयत्र व्याप्ता । सामानाधिकरण्यमपि पूर्णेन्दुत्वं वदनमिति वदनशब्देन प्राप्ताति तत्सामान्यान्तरबाधितमेव लोप । इद शब्दानुपरितद्वयं प्रतीयते । धर्मार्थो जातिर्द्रव्यं वा । अभिधेयसंबन्धेन वा अवयवार्थमूला अपि गुण्य । यत्र चैतदुभयमस्ति तत्र परिसमाप्ति । यत्र त्वन्यतरमात्रं तत्रैकपदपरिसमाप्ति । तत्रेह पूर्णेन्दुधर्म पूर्णेन्दुजातिहीन आह्लादकत्वादिगुणहीन वा द्रव्ये वर्तते इत्युपपद्यते । ईषदपरिसमाप्ति । सामानाधिकरण्यमुपपद्यत एव कथं यदा तावत्पूर्णेन्दुजातिहीने केनचित्सादृश्येन वदनशब्दाभिधेयेऽर्थे वर्तितात्पूर्णेन्दुधर्म [illegible] तदा वदनशब्देन सामानाधिकरण्य भवति । तयोरेकार्थवर्तित्वात् । यदा तु गुणहीन पूर्णेन्दुजातीय एव पूर्णेन्दुशब्दस्तदापि यथा धौम्यहीनक इति । सामानाधिकरण्यं तथा भवति । गुणहीना हि पूर्णेन्दु पूर्णेन्दुशब्दस्तेनोच्यते तत्र च तुल्यं वदनमिति तदपि

---

१ ढुण्ढुल्लन्त वा प्र

२ अन्वेषयन्स्मरिष्यसि कण्टककलितानि केतकीवनानि ।
मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि ॥ (इति च्छाया ।)

यथा वा—

'अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥'

अत्र नामधातुवृत्तौ सहस्रायुधमिवात्मानमाचरतीत्यात्मा उपमेयः । इवादिश्च लुप्तः । आचारलक्षणश्च धर्मः क्यच्प्रत्ययेन साक्षादभिहितः ।

तथा—

'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥'

अत्र नामधातुवृत्तौ धर्मस्योपमावाचकस्य च लोपः ।

त्रिलोपे यथा—मृगनयनेति ।

मृगस्य नयने इति प्रथमं तत्पुरुषः, ततो मृगनयने इव नयने यस्या इति उष्ट्रमुखादित्वाद्बहुव्रीहिः । अत्र गुणद्योतकोपमानशब्दानां लोपः । यदा तु मृगशब्द एव लक्षणया मृगनयनवृत्तिस्तदा मृग एव नयने यस्या इति रूपकसमासस्यैव विषयः, न त्वस्योपमासमासस्येति नास्ति स्थानमुपमायास्त्रिलोपिन्याः । केचित्तु—अयःशूलेनान्विच्छत्यायःशूलिक इत्यादौ क्रूरत्वाद्यारोपमेयतैक्ष्ण्यधर्मवादीनां लोपे त्रिलोपिनीमुपमामुदाहरन्ति, तदयुक्तम् । क्रूरस्याचारस्यार्थान्वेषणोपायादेरयःशूलतयाध्यवसानादतिशयोक्तिरेवायम् ।

एवं दाण्डाजिनिक इत्यादिष्वपि द्रष्टव्यम् ।

---

पूर्णेन्दुकल्पस्य वदनस्याभिधास्यते ॥ क्रूरत्वाद्यारोपमेयेति । तथा ग्रामायमाणमुपमानम्, धर्मान्वेषणोपायः कश्चिदुपमेयं तीक्ष्णत्वादि साधारणो धर्मः उपमानोपमेयभावश्चेति चतुष्टयमप्यस्य न भवति तस्मान्न शब्दस्तत्रमुपमानमयःशूलेनेति विग्रहस्तु त्रितयसापेक्ष-मर्थापत्तिगतिरिति ॥ दाण्डाजिनिक इत्यादिष्वपीति । तथा हि दम्भस्य दण्डाजिनत्वाध्यवसितस्य जीवनक्रियाकरणत्व दण्डाजिनेनार्थानन्विच्छति दम्भेन जीवतीति दाण्डाजिनिकः । दाम्भिक इत्यर्थः । एवं पार्श्वेनार्थानन्विच्छति । ऋजूपायेन जीवतीति पार्श्विकः । अनृतिको जालिक इत्यर्थः । तथा शीतक उष्णक इत्यत्राप्यलसदक्षयोः शीतोष्णत्वाभ्यामध्यवसितयोः करणक्रियां प्रति विशेषणत्वं धर्मत्वं च । शीतं करोति शीतकोऽलसः । जड इत्यर्थः । एवमुष्णकः शीघ्रकारी दक्ष इत्यर्थः । तथैव च भ्रा मुम्

मालोपमादयस्तूपमाया नातिरिच्यन्ते इति न पृथग्लक्षिता ।

तथा हि—

'सोह व लक्खणमुह वणमाल व वियर्ड हरिवइस्स उरम् ।
कित्ति व पवणतणय आण व बलाई से वेलग्गए दिट्ठी ॥'

इममभिन्ने साधारणे धर्मे

'ज्योत्स्नेव नयनानन्द सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥'

इति भिन्ने वा वस्तिनेकस्यैव बहूपमानोपादाने मालोपमा ।

तथा—

'याम इव याति दिवसो दिनमिव मासोऽथ मासवद्वर्षम् ।
वर्षमिव यौवनमिव यौवनमिव जीवितं जगतः ॥'

'नभ इव विमलं सलिलं सलिलमिवानन्दकारि शशिबिम्बम् ।
शशिबिम्बमिव लसद्द्युति तरुणीवदनं शरत्कुरुते ॥'

अत्र यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे रसनोपमा ॥

'अलिवलयैरलकैरिव कुसुमस्तबकैः स्तनैरिव वसन्ते ।
भान्ति लता ललना इव पाणिभिरिव किसलयैः सपदि ॥'

तथा—

कमलदलैरधरैरिव दशनैरिव केसरैर्विराजन्ते ।
अलिवलयैरलकैरिव कमलैर्वदनैरिव नलिन्यः ॥'

---

वेति । यस्मा ... 'सूक्ष्मं पिपठिषति' इत्यादि ॥ भाष्यकारस्यापि चैवमाद्यवति- ष्यदोषिभवत्वमेवेष्टम् । यदाह— न तिङन्तेनोपमानमस्ति' । आख्यातं नोपमानं भव तीत्यर्थः । एवं वर्तमानसामीप्याद्यवतिष्यदोषिभेदत्वं यथाप्रतीति बोध्यम् । तथा च— वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानसमीपे भूते भविष्यति च वर्तमानवत्प्रत्यया भवन्ति । कदा देवदत्त आगतोऽसि । अयमागच्छामि । आगच्छन्तमेव मां विद्धि । अयमागमम् । एषोऽस्म्यागतः । कदा देवदत्त गमिष्यसि । एष गच्छामि । गच्छन्तमेव मां विद्धि । एष गमिष्यामि । एष गन्तास्मि । एवमन्यदपि । हरिपद सुमीपदम् । ते इति

१ 'सौमेव लक्ष्मणमुखं वनमालेव विकटं हरिपतेरुरः ।
कीर्तिरिव पवनतनयमालेव बलान्यस्य विलगति दृष्टिः ॥' [इति च्छाया ।]

२ विलग्गए' सेतुबन्धे

अत्रोपमानोपमेययोरवयविनो समस्तविषया, अवयवानां चैकदेश विषया ॥

'तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
निलीनां नलिनीषण्डे कथ नु त्वां लभेमहि ॥'

अत्रोभयोरुपमेयत्वे उपमानत्वे चोपमेयोपमा ॥

'त्वन्मुख त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव ।
त्वन्मूर्तिरिव मूर्तिस्ते त्वमिव त्व कृशोदरि ॥'

अत्रैकस्यैवोपमानोपमेयत्वेऽनन्वयः ॥

'उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयस पतेताम् ।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्ष ॥'

अत्रासम्भूतस्योपमानसंभावनादुत्पाद्योपमा ॥

'तासां तु पश्चात्कनकप्रभाणा काली कपालाभरणा चकाशे ।
बलाकिनीनीलपयोदराजि पुर परिक्षिप्तशतह्रदेव ॥'

अत्र यथेष्ट विशेषणैरुपमेय परिकल्प्य तादृशमेव सिद्धमुपमानमुपात्त मिति कल्पितोपमेत्यादि । आसा हि पृथग्लक्षणकरणे एवविधवैचित्र्य सहस्रसम्भवादतिप्रसङ्ग स्यादिति ॥

असद्धर्मसंभावनमिवादिद्योत्योत्प्रेक्षा ।

प्राकरणिकेऽर्थे ये धर्मा गुणक्रियालक्षणास्तदभावलक्षणा वा तेषा समावनं तद्योगोत्प्रेक्षणमुत्प्रेक्षा । सा चेव-मन्ये शङ्के ध्रुव प्रायो-नूनमित्यादिभि शब्दैर्द्योत्यते ।

---

धर्मस । तदभावलक्षणेति । गुणक्रियाभावरूपम् । तद्योगोत्प्रेक्षणमिति । अप्रकृतधर्माणां प्रकृतधर्मीभूताद्वस्तुन उत्कलितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तरात्मतयैव सम्भवप्रकर्षाणामीकणमित्यर्थं । इदमप्यनादृतलोकप्रसिद्धिकान्तगोचरत्वमस्याभ्यनुज्ञातमेव । तत्र यत्र कृतविमिनिमित्तीकृतैव धर्माणां संभावना न तत्रोत्प्रेक्षा । न हि 'मारं वहतीव पुष्पम्' पचो रहतीव कीनिणी' इत्युत्प्रेक्षा प्रवर्तते अपेक्षितमन्त

यथा—

'बल जगघ्व्यसनरक्षणक्षम क्षमा च किं सगमके कृतागसि।
इतीव सचिन्त्य विमुच्य मानसं रुषेव रोषस्तव नाथ निर्ययौ॥'

अत्र रोपलक्षणस्य गुणस्योत्प्रेक्षा॥

'असंतोषादिवाकृष्टकणयो मासशासन।
स्वधाम कामिनीनेत्रे प्रसारयति मन्मथ॥'

अत्र सतोषगुणाभावस्य॥

'वियति विसर्पतीव कुमुदेषु बहूभवतीव योषितां
प्रतिफलतीव जरठशरकाण्डविपाण्डुषु गण्डभित्तिषु।
अम्भसि विकसतीव हसतीव सुधाधवलेषु धामसु
ध्वजपटपल्लवेषु ललतीव समीरचलेषु चन्द्रिका॥'

अत्र क्रियाया॥

'कपोलफलकावस्या कष्ट भूत्वा तथाविधौ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ॥'

अत्र दर्शनक्रियाभावस्य॥

एव च—

'हिरण्मयी सा लक्ष्मेन मङ्गमाक्सुता दिव स्थाणुरिवाचिरप्रभा।
शशाङ्ककान्तेरधिदेवताकृति सुता ददे तस्य सुताय मैथिली॥'

तथा—

'अकालसध्यामिव धातुमत्ताम्'।

तथा—

आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।
सुजातपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव॥'

तथा—

'अचिरामामिव विघनां ज्योत्स्नामिव कुमुदबन्धुना विकलाम्।
रतिमिवमन्मथरहितां श्रियमिव हरिवक्षस पतिताम्॥'

---

१ रतिमिव मन्म थाय.

तथा—

'स्थित पृथिव्या इव मानदण्ड' ।'

इत्यादावुत्प्रेक्षाबुद्धिर्न विधेया ॥

यद्यप्येषु स्वरूपतो विशेषणतश्चोपपाद्य(?) कल्पितम्, तथाप्युपमैव । उपमानोपमेययो साधर्म्यस्य तद्वाचकानां प्रतीयमानत्वात् ॥

**सादृश्ये भेदेनारोपो रूपकमेकानेकविषयम् ।**

सादृश्ये निमित्ते सति भेदेन विषयविषयिणोर्निर्देशेन आरोपोऽतथाभूतेऽपि तथात्वेनाध्यवसायो रूपयत्येकतां नयतीति रूपकम् । आरोप्यमाणरूपेणारोपविषयस्य रूपवत् क्रियमाणत्वात् । सादृश्यग्रहणं कार्यकारणभावादिनिमित्तान्तरव्युदासार्थम् । तेन 'आयुर्घृतम्' इत्यादौ न रूपकम् । भेदग्रहणमभेदारोपनिरासार्थम् । तत्र ह्यतिशयोक्तिर्वक्ष्यते । स च एकमनेकं चारोपस्य विषयो यत्र तद्यथा ॥

तत्रैकविषयं यथा—

> 'कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु य
> त्सखी कान्तोदन्तं श्रुतमपि पुन' प्रश्नयति यत् ।

गोचरतया एव संभावनाया उत्प्रेक्षागोचरत्वात् ॥ विषयविषयिणोरिति । अर्थादुपमानोपमेययो ॥ तथात्वेनाध्यवसाय इति । 'मुखं चन्द्र' इत्यादौ चौर्णीतिविषयत्वेऽस्यार्थः । तथा हि उपमेयवाच्यो धर्मिवाची । द्वितीयेनोपमानवाच्येन तथाभूतेनानुपपद्यमानसामानाधिकरण्यतयैवोपमानपदस्य स्वाभिधेयाभिमानमुद्गुणनिहितां भिनमधति । ततश्च सामानाधिकरण्यमप्युपपद्यते । अत एव च भेदेऽप्यभेदप्रतीतिरियं मापय्याव' । तथा ज्ञाते भेदे मिथ्याभेदप्रतीतिरेव यत्र तन्मिथ्याज्ञानम् । यथा शुक्तिकायां रजतप्रतीतिः । तथा भेदे ज्ञातेऽपि यत्राभेदप्रतीतिरिव सोपमा । भेदे ज्ञातेऽप्यामुखे किमभेदप्रतीतौ संभावनायामपि यथावर्णितविषये विशिष्टे साम्ये विश्रान्तिरूपकम् । अन्यथा भेदेऽप्यभेदप्रतीतावध्यास एव स्यात् । ततश्च मिथ्याज्ञानसाधर्म्यरहितत्वं रूपमुच्यते । अत्र च केचिदभ्यारोपपूर्वमपवारोपं ब्रुवते । अपरे विपर्ययम् । अन्ये चोभयथोभयम् । एष एव च मुख्य पक्ष इत्याहु । तथा हि—'सम्यापचारात्ताद्रूप्यं रूपके केचिदुच्यते । ताद्रूप्यारोपतस्तस्य सम्यारोपोऽत्र कथ्यते ॥ तस्मात्सुखेऽस्य चागुपमेयगुणानुगुणान् । यस्मात् सुखस्वरूपादि तत्र तद्वस्तुस्वरूपता ॥' तत्रेत्युपमेये । तदु-

---

१ सखी' का प्र

विनिद्र यथान्त स्वपिति तवहो पेक्ष्यमिनवां
प्रवृत्तोऽस्या सेक्तुं हृदि मनसिज प्रेमलतिकाम् ॥'

यत्र चैकस्मिन्विषयेऽनेकान्यारोप्याणि, तदप्येकविषयम् ।

यथा—

'सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गम
कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
प्राणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥'

यत्र चैकत्र विषये आरोप्यं श्रौतं विषयान्तरे तु गम्यं तदप्येकविषयम्।

---

स्येति । उपमानसमारोप उपमानसमारोपस्य ॥ प्रेमलतिकेति । प्रेमैव लतिकेति । मयूरव्यंसकादित्वादेवायमत्रापि समासः ॥ ननु व्याघ्रादिद्वारेण समस्यमानोऽपि समासो लुप्तोपमया दृश्यते । तदयोगमप्रास्तेरयस्यमाविनीत्वाद्युपमामत्र संदेहसंकरः प्राप्नोति । उच्यते—अन्यतरपरिग्रहे साधकप्रमाणाभावस्थितस्य वा परिहारे न व्यवस्थापकं प्रमाणं तत्रैवोभयप्रसक्तिरनिवार्येति स एव संदेहसंकरोऽवकाशस्य विषयो भवति । इह तु लतायाः[1] सेचनमयुक्तस्यारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्ति तत्संकरशङ्का न कार्या । एवं बाधकेनापि प्रमाणेन संदेहाभावप्रदर्शनात्परोक्तप्रतिज्ञा निरवकाशतैव संदेहस्य । यथा— मधुकरमिव मदपरेण पुष्पे मुख इव साञ्जनमपूर्व ।
मुख इव पुष्पे मधुकरेण चुम्ब्यते स्म' इति विवक्षायामिव व्यङ्ग्येन वाक्यार्थोपपत्तिर्बाधकं प्रमाणं समासे लुप्तोपमायाः । न तु साञ्जनतायामुपमयोपिमी मुख इव मदपरेण चुचुम्बे' इति रूपकस्य । तथा हि मुख इव पुष्पं इत्यत्र सदृशस्य पुष्पस्य प्रतिपत्तौ मुखायोपमानविशेषता पुष्पाभिता पूर्वमेव प्रतीतौ समवेपारोहति । तेन मुखसामर्थ्यातिशयस्य कथा कयापि भवितव्यमिति । सात्र व्याप्तिवीयते । तस्मात्वेन मधुरिसानाथवी रूपके प्रतिपत्तिः । उपमाप्रतिपत्तेस्तस्माद्वक्त्रं मुखोपमितिसामर्थ्योचितपुष्पगतरूपविशेषाद्युपयोगित्वात् । तथा चात्रोपमेये पुष्पविशेषे मुखोपमितिसामर्थ्योचिते पुष्पगापारस्तावी न साञ्जनताया उपयोगोऽस्ति यथा एव तत्रोपयोगित्वात् । तेन मधुरत्र प्रधानम्, तदुपयोगिनी तु साञ्जनता साञ्जनत्वेन मधूर्वि तनया रूपकप्रमयया संगति प्रतिपद्यत इति । तस्मादत्र विशेषावसाये निमित्तमस्ति तत्र रूपक समासाभिविशेषमा बाध्यत संकर इति ॥ सौन्दर्यस्येति । अत्र तरङ्गि-

---

१ 'मनि' का प्र

---

१ 'साञ्जनताया' स्यात्.

यथा—

'जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलयम्।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा॥'

अत्र रणस्यान्तःपुरत्वारोपः श्रौतो मण्डलाग्रलताया नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वमर्थसामर्थ्यादवसीयते।

अनेकविषयं यथा—

'यस्या बीजमहंकृतिर्गुरुतरो मूलं ममेति ग्रहो
नित्यत्वस्मृतिरङ्कुरः सुतसुहृज्ज्ञात्यादयः पल्लवाः।
स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः
सा मे त्वच्चरणार्हणापरशुना तृष्णालता लूयताम्॥'

यथा वा—

'इन्द्रस्य तव बाहू जयलक्ष्मीद्वारतोरणस्तम्भौ।
खड्गः कृतान्तरसना रसना च सरस्वती राजन्॥'

एवं च येऽन्ये रूपकप्रभेदा वर्ण्यन्ते।

यथा—

'ललना: सरोरुहिण्यः कमलानि मुखानि केसरैर्दशनैः।
भ्रमरैर्वलैश्च तासां नवबिसनालानि बाहुलताः॥'

इदं सहजावयवं रूपकम्।

'गजो नगः कुचा मेघाः शृङ्खला: पन्नगा अपि।
मन्त्रा सिंहोऽपि शोभन्ते भ्रमरा हरिणास्तथा॥'

इदमाहार्यावयवं च।

'अलिकुलकुन्तलभारा: सरसिजवदनाश्च चक्रवाककुचाः।
रामन्ति हंसवसना: सम्प्रति वापीविलासिन्यः॥'

---

१　'यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।
रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥　[इति च्छाया।]

२. 'भिन्ना' इत्यन्ये.

इदमनुमयानवयवमित्यादि ॥ ते न लक्षिताः, उपमाग्रहणेनैव संगृहीतत्वात् । एवंविधवैचित्र्यसहस्रसंभवाच्चातिप्रसङ्गः स्यात् ।

यदाह—

'न पर्यन्तो विकल्पानां रूपकोपमयोरत ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥'

इति ।

इष्टार्थसिद्ध्यै दृष्टान्तो निदर्शनम् ।

इष्टस्य सामान्यरूपस्य विशेषरूपस्य वा प्राकरणिकस्यार्थस्य सिद्ध्यै यो दृष्टान्तः स निदिश्यते प्राकरणिकोऽर्थोऽत्रेति निदर्शनम् ।

यथा—

'होइ न गुणाणुराओ जडाण णवरं पसिद्धिसरणाण ।
किरपण्हुवइ ससिमणी चन्दे पियामुहे दिट्ठे ॥'[1]

यथा वा—

'उपरि घन घनपटलं दूरे दयिता तदेतदापतितम् ।
हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि ॥'

---

न्यादेरारोप्यस्य प्रियामुखस्य एक एव विषयः । दृष्टान्तमिति व्याख्यानम् ॥ इष्टस्येति । ननु तत्र विशेषस्य सामान्येन समर्थनेऽर्थान्तरन्यासत्वं वक्ष्यते । तत्कथमिष्टार्थस्य सामान्यरूपस्य विशेषरूपस्य चेति कथ्यते । ननु चार्थान्तरन्यासोऽपि निदर्शनलक्षणेन संगृह्यते[1] । किं तस्य पृथग्लक्षणकरणेनेत्याशङ्क्याह—यो दृष्टान्त इति । दृष्टोऽन्तो निश्चयो यत्र स दृष्टान्तः । निश्चयश्च विशेषादेव संभवतीति विशेषस्य एवासौ । तेन 'यत्र सामान्यस्य विशेषस्य वा विशेषेण समर्थनं तन्निदर्शनम् । यत्र तु विशेषस्य सामान्येन समर्थनं सोऽर्थान्तरन्यासः' इति विवेक उत्पद्यते ॥ होइ न गुणाणुराओ इति । अत्र सामान्यं विशेषेण साध्यते ॥ उपरीति । अत्र विशेषो विशेषेण

---

१ 'भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् ।
~ शशिमणिश्चन्द्रे प्रियामुखे दृष्टे ॥' [इति च्छाया ।]

---

१ 'संग्रही' स्यात्

यथा वा—

'देवीभावं गमिता परिवारपदं कथं भजत्येषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥'

यथा वा—

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥'

यथा वा—

'अत्युच्चपदाध्यासः पतनायेत्यर्थशालिनां शंसत् ।
आपाण्डु पतति पत्रं तरोरिदं बन्धनग्रन्थेः ॥'

एते साधर्म्येण निदर्शनप्रकाराः ॥

वैधर्म्येणापि यथा—

'गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं जीवति गौर्गलिः ॥'

'त्वमाहवे साहसकर्मनर्मणः पाणिं कृपाणान्वितमानिनीषत ।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥'

इति ॥

---

उच्यते । देवीभावमिति क्व सूर्येति, अत्युच्चपदाध्यास इति । उदाहरणत्रयस्यायमभिप्रायः । यथा कैश्चिदविपस्तूपमा प्रकारद्वयेन निदर्शना च पृथक् कथिता तथा न कर्तव्य इत्यर्थः । निदर्शनालक्षणेनैव व्याप्तत्वात् । तथा हि 'देवीभाव-' इति 'क्व सूर्य-' इत्युदाहरणद्वये विशेष एव दृष्टान्तेन साध्यमानः उपलभ्यते । यद्यपि वस्तुसम्बन्धेऽपि निदर्शने । निदर्शनाविशेषस्तु कथमन्यथाभिव्यक्तिः । तस्य असम्भवद्वस्तुसम्बन्धः उपमापरिकल्पकः' इत्येवं लक्षणत्वात् । यथोच्यते—क्व सूर्यप्रभवो दार्ष्टान्तिके वस्तुसम्बन्धस्य असंभवः उपमेये च अल्पविषयया मत्या सूर्यवंशस्य वर्णनमप्यशक्यमिति दार्ष्टान्तिके वस्तुसम्बन्धासंभव इति चेत्, न । यत्र वाक्येऽसम्भवद्वस्तुसम्बन्धेनार्थः प्रतिपद्यते तत्र सम्भवद्वस्तुसम्बन्धता । स्यादेवं यदि प्रतिपद्यमानस्यार्थस्य वाक्यार्थस्य सम्बन्धः स्यात् । तस्मात् दार्ष्टान्तिके वस्तुसम्बन्धासंभवः दार्ष्टान्तिकप्रतीति

---

१ यथेदं च प्र साहसकर्मणा कर्म इव गच्छति विग्रहः' इत्युदाहरणवन्निदर्श

प्रकृताप्रकृतानां धर्मैक्यं दीपकम्।

बहुवचनं समस्तव्यस्तपरिग्रहार्थम्। तेन प्रकृताप्रकृतानां प्राकरणिकाप्राकरणिकानामर्थादुपमानोपमेयत्वेन प्रकृतानामप्रकृतानां च केवलानां धर्मः क्रियादिर्यदेक एव प्रयुज्यते तदा दीपवदेकस्थानस्थमनेकदीपनाद्दीपकम्।

यथा—

'चन्दमऊएहिँ निसा णलिणी कमलेहिँ कुसुमगुच्छेहिँ लआ।
हंसेहिँ सरअसोहा कव्वकहा सज्जणेहिँ कीरइ गरुई॥'

अत्र काव्यकथा प्रकृता शेषाण्यप्रकृतानि। गुरुकीकरणमेका क्रिया।

---

न्यस्यत्वाच्च दृष्टान्तस्य दृष्टान्तेऽप्ययमेव न्यायः। यदयति विततोर्ध्वरश्मिरश्मी-
त्यादौ तु प्रतिवस्तूपमाभेदत्वं वक्ष्यते। वस्तुप्रयपदार्थयोः इवत्र तु सामान्यं दृष्टा-
न्तेन समर्प्यते। साधारणक्रियापि तद्धर्मान्वयव्यापारं कुर्वतीति न दृष्टान्ताशङ्कावकाश
इति॥ चन्दमऊएहिँ इति। चन्द्रमयूखादीनामपि न निशादिना विना कोऽपि
परभागलाभः। सज्जनानामपि काव्यकथां विना कीदृशी साधुजनता। चन्द्रमयूखैश्च
निशाया गुरूकरणं भास्वरत्वसेव्यत्वादि नलिन्या कमलैर्नलिन्याः शोभा परिमल-
रम्यत्वादि कुसुमगुच्छैर्लताया अभिगम्यत्वमनोहरत्वादि हंसैः शारदशोभाया मधुर-
कलरवमनोहरत्वादि तद्वत् काव्यकथाया सज्जनैरित्येतावानवगमो गुरूकरणे क्रियते
इत्येतद्दीपकस्य लक्षणम्। कथाचन्द्र इत्यस्य—कामता तावत्काव्यस्य केवलं सुष्ठु
विशेषाः सज्जनैर्विना काव्यकथा धन्यमित्यन्य कन्योऽपि निर्वहते। तेषु तु सत्सु
बाह्यौ सुमर्यं काव्यं काव्यरागस्य व्यपदेशसामायपि सम्यक्संदर्शयान्त तथा तथा ते कि-
यते यथादरणीयतां प्रतिपद्यते॥ ननु यदि क्रियापदोपनिबन्धो दीपकम्, तर्हि न त-
दलंकारः। क्रियापदे हि सति वाक्यपरिसमाप्तिः प्रतीयते न पुनरन्यातिशयः विना
क्रियापदं वाक्यमेव किंचिदस्ति यदुक्तम्। 'सविशेषणमाख्यातं वाक्यम्' इति
वाक्यलक्षणेन वाक्यस्याख्यातपदमुच्यते तस्यैव क्रियावाचकत्वात्। तेनात्र कु-
कस्यातिशयः प्राकारम्भवैयर्थ्यात्। तथा हि—अलंकाररहितं काव्यं मा भूदिति
कवीनामलंकारमुत्पत्तिः क्रियते। क्रियापदस्य च दीपकत्वे सर्वं काव्यं सालंकारमिति
नार्थोऽन्येन प्रयत्नेन। अलंकारभेदप्रकल्पनार्थोऽयं यत्न इति चेत्, तेनैव तावन्मा
पिदेन कोऽर्थः यदेवा सालंकारं काव्यं विधेयम्। तत्र यदलंकारान्तरं काव्यात्मीयेन

---

१ चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता।
हंसैः शारदशोभा काव्यकथा सज्जनैः क्रियते गुर्वी॥ [इति च्छाया।]

यथा वा—

'मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम् ।
स प्रियासंगमोत्कण्ठां सासह्यां मनसः शुचम् ॥'

अत्र मदादौ यथाकारणिकतया विवक्ष्यते तदुपमेयं शेषाण्युपमानानि । न च कर्मैकत्वमुपमां रुणद्धीति वाच्यम् ।

'राम इव दशरथोऽभूद्दशरथ इव रघुरजोऽपि रघुसदृशः ।
अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥'

इत्यादौ कर्मैकत्वेऽप्युपमादर्शनात् ।

प्रकृतानां धर्मैक्यं यथा—

'पाण्डुक्षामं वदनम्—' इति ।

यथा वा—

'[1]हंसाण सरेहिं सिरी सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं चिय एए अप्पाणं णवर गरुअन्ति ॥'

---

भवति तदा लोकनमेव नो चेद्दीपकमवस्थितमेव । किं च संकरसोऽप्येवमसह्याम क्रियापदं दीपकालंकार । पृथक् पृथक् लब्धात्मनामलंकाराणामेकत्वान्वयसंसर्गे संकर । न च क्रियापदस्य दीपकत्वे स्वकार्योऽलंकारो दीपकादुपमयस्थान लब्धुमुत्सहन्ते । तस्माद् क्रियापदं दीपकम् । एवम् । न क्रियापदमित्रमसमाक दीपकम् । किं तु बहुभिः समासजातीयैः कारकविशेषैरभिसंबध्यमानम् । तस्य चानेकेष्वर्थेष्वभिसंबध्यमानस्या र्थस्याविशेष वस्तुत्वाद्युच्यते । प्राकरणिकाप्राकरणिकत्वाभ्यां च तेषामर्थानामुपमानोपमेयभावो गम्यमानो न भीत । अत एव दीपकमुपमातो भिद्यते । यत्रापि प्राकरणिका एव अप्राकरणिका एव वा पदार्था एकधर्माभिसंबध्यन्ते तत्रापि तेषां परस्परं किंचित्साम्यं विवक्ष्यमेव ॥ ननु रुद्रटप्रभृतिभिर्दीपकमेवत्यापि दीपकं प्रतिपादितम्, तत्र च कथमौपम्यं स्यादित्याशङ्क्य निदर्शयति—मद इति । मदः सुरापानविकार विशेषः । मानभङ्गुरं मानभञ्जनशीलम् । यद्वा मानो भङ्गुरो यस्येति समासः ॥ क्रिया दीपकमेकमेव वाक्यार्थेष्वनेकेष्वपि साधारणतयोपात्तमानत्वादौपम्यं प्रत्यायपति । तत्रापि यद्विवक्षितं तदुपमेयमितरत्तूपमानमिति । अत एव रुद्रटोक्त औपम्य-रहितोऽपि दीपकमेव तुल्ययोगितात्वादिति ॥ हंसाणेति । अत्र हंसानां श्री स-

1　'हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।
अन्योन्यमेवैते आत्मानं केवलं गुरूकुर्वन्ति ॥ [इति च्छाया ।]

अप्रकृतानां यथा—

'कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥'

'क्षिपति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥'

इत्यादौ जातेरेव चमत्कारो न दीपकस्येति कारकदीपकं न लक्ष्यते ।

सामान्यविशेषे कार्ये कारणे प्रस्तुते तदन्यस्य तुल्ये तुल्यस्य चोक्तिरन्योक्तिः ।

सामान्ये प्रस्तुते तदन्यस्य विशेषस्य, विशेषे सामान्यस्य, कार्ये कारणस्य, कारणे कार्यस्य, सदृशे सदृशस्य चाप्रस्तुतस्योक्तिरभिधानमन्योक्तिः । अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेप इत्यर्थः ।

---

रोमि' सरसां च हंसैः सार्धत इति साधारण्यक्रियया एकयैव हंससरसोः प्राकरणिकयोः संबन्ध इति अन्योन्यनामालंकारो न दीपकत्वमतिक्रमति ॥ यथा वा— कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य । अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ इति । अत्र कण्ठमुक्ताकलापयोः प्राकरणिकयोरन्योन्यं भूषणभूषणभाव इति ॥ कुमुदेति । अत्र कुमुदादीनि अमृतादीनि चाप्राकरणिकानि एकोपादानस्य च प्रकृतस्य धर्मसाम्यात् । यथा वा—'वैरेण सा नवा वध्या सुषिता समयेन वे । इतं हृदयमेवैषामन्येषां जन्मनः फलम् ॥' अत्र प्रियतमा प्राकरणिकी प्रति च चक्षेकमितृष्णमनयोकम्पितृणां च प्राकरणिकानां सुषितत्वमेको धर्म इति । एवं च तुल्ययोगिता पृथङ् न वाच्या इति । ननु कारकदीपकमप्यत्रैव तर्हि नोच्यते इत्याशङ्क्याह—क्षिपतीत्यादि ॥ अप्रस्तुतस्येति । उपवर्णनापरतया पेक्षत्वादप्राकरणिकस्येत्यर्थः । अभिधानमिति । स्तुतिनिन्दोभयानुभयरूपम् ॥ ननु चाप्रस्तुतप्रार्थनस्योपादानपदसामर्थ्यात् प्राकरणगम्योऽपि । तथा हि । पर्वतोपवर्णनया कः समुद्रकरणमुपवर्णयेत् । उपवर्णने वा पिशाचैर्नर्तनमयत्नं मात्सर्यादुपप्लव अन्योक्तिवाच्यार्थं प्रत्यायितैर्बुधैः—अप्राकरणिकस्याभिधानेनेत्यादि । शान्तरेण च वाच्यापारेण प्रोचरीक्रियमाणः प्राकरणिको योऽर्थस्तेन सहाप्रस्तुतस्य कार्यकारणभावात संबन्ध इति सदृशसदृशभावगर्भमलंकारस्वरूपमेतस्या इत्यर्थः । तुल्ये प्रस्तुते यत्र तुल्यस्याप्रस्तुतस्याभिधानं तत्र विशेषो विशेषेण प्रतीयत इति पूर्वाभ्यां भेदः ।

---

१ तथा' च प्र

यथा—

'ऐरावण स्पृशति मन्मथते मरुद्भि
र्वज्रं परामृशति पश्यति योमसाजान् ।
मेरोस्तटानि विपमीकुरुते महेन्द्र
स्त्वच्छङ्कया निशि न याति नरेन्द्र निद्राम् ॥'

अत्र त्वय्युपुक्ते न कश्चित्सुखं शेते इति सामान्ये प्रस्तुते विशेष उक्त ।

'अहो ससारनैर्घृण्यमहो दौरात्म्यमापदाम् ।
अहो निसर्गजिह्मस्य दुरन्ता गतयो विधे' ॥'

अत्र कापि वस्तुनि विनष्टे विशेषात्मनि प्रस्तुते दैवसात्म्य सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितम् ।

'ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च ।
ते बान्धवास्ते सुहृदो लोक स्वार्थपरोऽपर ॥'

अत्र जरासंध कार्यरूपां भद्रेभवचनतां प्रस्तुतामात्मनोऽभिव्यङ्क्तुं सुहृद्बान्धवरूपत्वमप्रस्तुतं कारण वर्णयति ।

'संग्ग अॅप्पारियायं कुच्छुहलच्छिविरहियं महुमहस्स उरम् ।
सुमराभि महणपुरओ अमुद्धयन्दं व हरजडापब्भारम् ॥'

अत्र जाम्बवान् वृद्धसेवाचिरजीवित्वव्यवहारकौशलादौ मभिलाकारणे प्रस्तुते कौस्तुभलक्ष्मीविरहितहरिवक्षःस्मरणादिकमप्रस्तुतं कार्यं वर्णयति ।

तुल्ये प्रस्तुते तुल्यस्याभिधाने द्वौ प्रकारौ । श्लिष्टविशेषणता, सादृश्य मात्रं वा तुल्यान्तरस्याक्षेपहेतु ।

---

चम्योक्ती च वह्वाच्यं तस्य कदाचिद्विवक्षितत्वं कदाचिदविवक्षितत्वं कदाचिद्विवक्षिता विवक्षितत्वमिति त्रयी बन्धच्छाया । तत्र विवक्षितत्वं यथा—'परार्थे च पीडामनुभ वति भङ्गेऽपि मधुरो यदीय' सर्वेषामिह खलु विकारोऽप्यभिमत । न संप्राप्तो वृद्धि

---

१ स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथनस्योरः ।
स्मरामि मथनपुरतोऽमुग्धचन्द्र च हरजटाप्राग्भारम् ॥ [इति च्छाया ।]

२. अपारिजायं कौत्थुह' पेठा

---

१ अप्रस्तुतप्रशंसायां त्वच्यास्कोके

३१

यथा—

'नालस्यप्रसरो जडेष्वपि कृतावासस्य कोशे रुचि-
र्दण्डे कर्कशता मुखे च मृदुता मित्रे महान्प्रश्रयः ।
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥'

अत्राप्रस्तुतेनाम्बुजेन तुल्यविशेषणवशात्तुल्यः सत्पुरुष आक्षिप्यते ॥

'आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥'

अत्रार्णवस्य गर्हणमान्यायोपार्जितधनत्वादिप्रतीयमानसादृश्यं कश्चि-
त्पुरुषविशेष आक्षिप्यते ॥

---

यदि च यथासंख्येन पठितः क्रिमिकोर्णपोऽब्धो न पुनरन्यथा गम्येत ॥' इती पीतस्य पीता सत्पुरुषे तु परार्थोपयते तदर्थं लेश । महोऽपीही प्रश्चित्रोटमम्, सत्पुरुषे तु यथामानिमित्तो विग्रह । इन्दोर्मांसुर्यमानाधकसामो गुणः सत्पुरुषे तस्तुमानस्तम् । इन्दोर्विकार शर्करागुडक्षमादि सत्पुरुषे तु चित्तनिविकिया । न हि सत्पुरुषा विकृत-मसाधामलक्षेपा । समवलामावात् । इन्दोरक्षेत्रमूपरम् सत्पुरुष निर्विवेकानामा-विस्थानम् । यथा वा— अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता भवत्येषां यस्य क्षणमुपगतानां विषयताम् । निरालोके लोके कथमिदमहो चक्षुरधुना समं जातं सर्वैर्न सममथ वान्यैरवयवैः ॥' मन्विति । पर्मेममिदं भूषितमित्यर्थः । यस्य चक्षुषो वि-षयतां क्षण गतानामेषां सफलता भवति तदिदं चक्षुरिति संबन्धः । आलोके विवे-कोऽपि । न समनिति । इतो हि वरं स्पर्शादागादामनुपयोगी । अवयवैरिति । अविद्युपयार्थैरित्यर्थः । अत्र अविचारकजनयाकुले काले कश्चिन्महापुरुषः कुलामिमि रितरजनसमसत्कारतया ततोऽपि चाप्रयोजनया न्यूनसत्कारतया कदर्थितमनाः प्रस्तुत ॥ यथा च— प्राप्य येन समर्पितास्तव यशसेन त्वमुत्थापितः स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यां पुरः । तस्यास्य स्मितमात्रकेण जनयन्जीवाप-

१ 'दतस्य' प्रागिभक्षितम्, २. 'दृश्ये' क ख

१ न समर्मितमर्थः ख

विशेष्यस्थिरता तु अन्योक्तिप्रयोजकतमा न वाच्या ।

यथा—

> 'पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
> यायाद्यदि प्रणयनेन महानपि स्यात् ।
> अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
> केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥'

---

द्वारस्थित्या प्राप्तः प्रत्युपकारिणां धुरि परं वेतालमीलायते ॥ अत्र यद्यपि सादृश्यवशेन कृपणः कश्चिदन्यः प्रस्तुत आक्षिप्यते तथाप्यप्रस्तुतस्य वेतालवृत्तान्तस्यापि नाम स्मरणमिति न प्रत्येतमोपारम्भमवस्तेमाक्षममाणोऽसमर्थ इति । एषु वाच्यं विवक्षित-स्वरूपमेव न तु प्रस्तुतम् । आपयोर्हि योमीदृशमस्याविषयप्रतिष्ठत्वादप्रस्तपरमागस्य तृतीये च स्वयमस्य कस्यचित्स्वरूपं वर्णयितुं तात्पर्येण स्तुतमिति ॥ अविवक्षितत्वं यथा— कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते । वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे ॥ कथयामीत्यादि प्रत्युक्तिः । अनेन पदेनेदमाह—'अकथनीयमेतत् धूममार्ग हि निर्वेदाय भवति तथापि तु पेयसुजनसदृशं कथयामि । वैराग्यादिति । काक्वा दैवहतकमित्याभिनाया च सूचितं ते वैराग्यमिति भावः । साधु विदितमित्युत्तरम् । कस्मादिति वैराग्ये हेतुप्रश्नः । इदं कथ्यत इत्यादि सनिर्वेदस्मरणोपक्रमं कथं कथमपि निरूपणीयतमोत्तरम् । वामेनेति । प्रतिकूलेन कृपणेनोपलक्षित इत्यर्थः । वट इति । नाममात्रकरणादेव वटस्यापि प्रयोजकत्वमित्यर्थः । छायापीति । शाखोटको हि श्मशानाग्निज्वालाशमीपादपानामितरत्वविशेषः । न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती संभवत इति अविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपे वासिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्येण वाच्यार्थीकृतमिति प्रतीयते ॥ विवक्षिताविवक्षितत्वं यथा—'उप्पहजाआए असोहिणीए फलकुसुमपत्तरहिआए । बोरीए वइं देन्तो पामर हो हो हसिज्जिहसि ॥' अत्र वाच्योऽर्थो नात्यन्तं संभवी न चासंभवीति वा न चाऽत्यन्तम्, व्यङ्ग्यस्यापि भावात् ।

---

१ 'केऽपि' क्व प्र

---

१ 'पादि निर्वेद' ध्वन्यालोकलोचने २ 'कण्टकालितपुच्छा' ध्वन्यालोकलोचन

३ 'उत्पथजाताया अशोभिन्या फलकुसुमपत्ररहिताया ।
बदर्या वृतिं ददत्पामर भो भो हसिष्यसे ॥' [इति च्छाया ।]

४ 'हो हो हसिज्जिहसि' ध्वन्यालोके ५. 'वाच्य एव विषमो नास्तीति' ध्व न्यालोकलोचने

कश्चिदनुभयरूपा ।

यथा—

'इतो वसति केशवः पुरमितस्तदीयद्विषा
मितोऽपि शरणागता' शिखरिपक्षिण' शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपु' ॥'

अत्र निन्दा स्तुतिर्वा विस्मयोत्कावेशात्तन्मयत इत्यनुभयरूपा ॥

**व्यङ्ग्यस्योक्तिः' पर्यायोक्तम् ।**

व्यङ्ग्यस्य प्रतीयमानस्यार्थस्य अभिधानं यत्पर्यायेण भङ्ग्यन्तरेण कथनं पर्यायोक्तम् । अत एव चान्योक्तेरस्य भेदः । न हि तत्र गम्यमानस्यार्थस्य भङ्ग्यन्तरेणाभिधानम्, अपि त्वप्रस्तुतद्वारेण तस्याक्षेप इति ।

---

कमिति परिवेषितमिति अमीषां चतुर्णां वाक्यखण्डानामर्थस्य क्रमेण पाक्यसुन्दरतासर्व-
तथा प्रतीयमानत्वात् । तथा चायं विनिमयपारम्पर्ये धर्मवीरत्वार्थस्य श्लोक इति
प्रसिद्धिः । एतदर्थसंसूचकश्चापरो हि स्कन्द एव तस्य श्लोको विद्वद्भिः' परिपठ्यते । स-
च—'अमरवरवसितावगाहमलस्पर्शीधक्रियाम्बरस्यपरमोत्तरत्वमधिकमिवोमैरपि । मर्त्य
मम समस्तकल्पतरुप्रतिमाहर्षं प्रभासति पयोनिधे' पय इव लपदेह ज्वराम् ॥' अथवा
इत्यमध्यवसितमपि न यत्र चार्थो तस्य संपादनम् । परमे पदर्थतत्त्वे कौस्तुभाविर्भ्यो
ऽप्युत्तमम् । अवश्यं प्रयत्नपरीक्षितमपि न प्राप्तम्, यदसमस्य तथाभूत प्रतिग्रहम्
एकैकं प्राप्तो जलधर प्राची ऐरावणोच्चैःश्रवो धन्वन्तरिप्रायो यत्र तदनन्यसदृशप्रति
ग्राहकम् । इयति चार्थे सामान्योपमासंस्कारोऽनन्तरं तु कारमपि विस्मयधामतयाद्भुत
विश्रान्ति परस्य च श्रोतृजनसाक्षात्कारास्पदतया प्रकटप्रायतया चोत्साहजननैर्विष्टे
मूतमनन्तोपायैर्यं स्वकक्षीपयक्षसुचिरजनानुग्राहकं कृतमिति स्वात्मनि कृपाकलिता
प्रवर्तनया धर्मवीरस्पर्शनेन वीररसे विश्रान्तिरिति मन्तव्यम् । अन्यथा परिवेषितमात्रेण
किं कृतं स्यात् । अभिप्रायपूर्वकमेतत्समस्तमावेदितं चेत्कि तत्र' स्वार्थपरार्थोपमया-
मिति । तदनेन निर्विवादतदीयश्लोकेनैव तदभिप्रायस्य परिवेषितविषयस्य संवेदमात्र
त्वमपूर्णत्वात् व्याजोक्तिरेव संभाव्यते । तत्रापि चातुर्याचातुर्यानुसन्धेय वीररसविश्रान्तिपर

---

१ अप्रस्तुतप्रशंसोपमासमासोक्त्यलङ्कारयुक्तम्' लोचने २. 'नैर्मूल्य' लोचने ३. ह
त्वेषा लोचने

यथा वा—

'अयि दियर किं न पेच्छसि आयासं किं मुहा पलोएसि ।
जायाएं बाहुमूलम्मि अद्धयन्दाण परिवाडिम् ॥'

अत्र नखार्धचन्द्राणाम् ॥

अभेदस्य व्यस्तयो भेदो द्वितीया ।

यथा—

'अण्णं छडहत्तणय अण्ण च्चिअ कावि वत्तणच्छाया ।
सामा सामण्णपयावइस्स रेह च्चिअ न होइ ॥'

अत्र छटमत्वादेरभिन्नस्यैव भेदेनाभिधानम् ॥

योगस्य सम्बन्धस्य व्यत्ययोऽसंबन्धस्तृतीया ।

यथा—

'मल्लिकामाल्यमारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥'

अत्राभिसारिकाणां लक्षणक्रियायोगेऽपि ज्योत्स्नाबाहुल्योत्कर्षविवक्षया योग उक्तः ।

यथा वा—

'अपाङ्गसरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥'

अत्र मदोदयस्य लक्षणेऽपि स्वाभाविकविभ्रमाणामुत्कर्षविवक्षया लक्षणस्यायोग उक्तः ॥

---

१　अयि देवर किं न प्रेक्षसे आकाशं (आयासं वा) किं मुधा प्रलोकयसि ।
जायाया बाहुमूलेऽर्धचन्द्राणां परिपाटीम् ॥' [इति संस्कृतम् ।]

२. 'अइ दिअर किं ण' गाथासप्तशती,

३　अन्यत्सौकुमार्यमन्यैव कापि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥ [इति संस्कृतम् ।]

४ 'अण्णा' क प्र　५ 'पआवइणो' क प्र

यथा—

'शस्त्रच्छेदव्रहरेच्छस्य मुनेरुत्पथगामिनः ।
रामस्यानेन धनुषा देशिता धर्मदेशना ॥'

अत्र 'भीष्मेण भार्गवो जितः' इति व्यङ्ग्यस्य 'देशिता धर्मदेशना' इत्यनया भङ्ग्या भणनम् ॥

विशेषविवक्षया भेदाभेदयोगायोगव्यत्ययोऽतिशयोक्तिः ।

प्रकृतस्यार्थस्य विशेषवर्णनेच्छया भेदस्य व्यत्ययोऽभेदाभिधानमत्र दतिशयाभिधानादेकातिशयोक्तिः ।

यथा—

'सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरञ्ज्योत्स्नामच्छां लवलफलपाकप्रणयिनीम् ।
उपप्राकाराग्रं प्रहिणु नयने तर्कय मना
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥'

अत्र मुखचन्द्रयोर्भेदेऽप्यभेदः ॥

---

तानुदेयेयेति । यदि यत्र प्रकरणमेव त्रिविधादि तत्र कोऽलंकारः । यथा— निरवद्यो गुरारोहम्— इति । उच्यते । तयोरुभयोरलंकारयोरन्यतरपरिग्रहे दोषः नापि साधकं प्रमाणम्, तत्र संकरालंकारो भवति । अत्र च समस्तपर्यायोक्तयोरन्यतरस्या प्रकरणविरुद्धत्वाभावात् ज्ञायते । किमियं समासोक्तिरुतान्योक्तिरिति संकरालंकार एव । अन्ये त्वाहुः—अत एव प्रकरणापरिज्ञानमत एवात्र प्राधान्येन पादस्योपवर्णने क इव वस्तुपरिपोषः स्वमन्यपरत्वे प्रवृत्तिविरहात् प्रत्युपदेशाय शास्त्रमिव श्लोकः समस्त इति समासोक्तिपरिग्रहे कुतो दोषाभावः । तस्मादन्योक्तिरेवेयमिति ॥ व्यङ्ग्यस्येति योग्यतया निर्देशः । अनया भङ्ग्या भणनमिति । देशिता धर्मदेशनेति मात्सर्य रहितत्वधीरित्यर्थः । तत्र यद्यद्यप्यन्तरेणोच्यते तद्रूपद्वयम् । यथाप्येकपदस्थपठनास्व- प्रकारेण व्यङ्ग्यं प्रतीयते न तथा वक्तुं शक्यते । अन्यथाविधिविषयप्रवृत्तानां धर्माणां तथाभिधानव्यापाराभावात् । यथा मयि सुप्ते नन्दति रथे गतः सुप्रभात इति विकल्पो न वेद स्वमन्याधयस्थापेक्षी तदस्य विकल्पयति न तु कथादरम् । अभेदेऽपि [illegible] । तथा अभिप्रायवशादेव [illegible] भेदमेवोक्त्वा विकल्पयति । निरंशस्य वस्तुनो भेदसंसर्गयोरभावात् । तौ हि विकल्पस्यैव व्यापारः । स ह्यभिन्नमपि वस्तु धी [illegible] भिनत्ति । भिन्नमपि [illegible] मयं [illegible] संघट्टयति ॥ अभेदाभिधानमिति । नाम्ना [illegible] ॥

यथा वा—

'अयि[1] दियर किं न पेच्छसि आयास किं मुहा पलोएसि ।
जायाएँ बाहुमूलम्मि अद्धयन्दाण परिवाडिम् ॥'

अत्र नखार्धचन्द्राणाम् ॥

अभेदस्य व्यत्ययो भेदो द्वितीया ।

यथा—

'अण्ण[3] लडहत्तणय अण्ण विअ कावि वत्तणच्छाया ।
सामा सामण्णपयावइस्स रेह च्चिय न होइ ॥'

अत्र लटभत्वादेरभिन्नस्यैव भेदेनाभिधानम् ॥

योगस्य संबन्धस्य व्यत्ययोऽसंबन्धस्तृतीया ।

यथा—

'मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥'

अत्राभिसारिकाणां लक्षणक्रियायोगेऽपि ज्योत्स्नाबाहुल्योत्कर्षविवक्षया योग उक्तः ।

यथा वा—

'अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥'

अत्र मदोदयस्य लक्षणेऽपि स्वाभाविकविभ्रमाणामुत्कर्षविवक्षया लक्षणस्यायोग उक्तः ॥

---

१ 'अयि देवर किं न प्रेक्षसे आकाशं (आयासं वा) किं मुधा प्रलोकयसि ।
जायाया बाहुमूलेऽर्धचन्द्राणां परिपाटीम् ॥' [इति संस्कृतम् ।]

२ 'अइ दिअर किं ण' काव्यानुशासनम्,

३ 'अन्यत्सौकुमार्यमन्यैव अपि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥' [इति संस्कृतम् ।]

४ 'अन्या' क. प्र.　　५ 'पयावइणो' क. प्र.

यथा वा—

'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति चिरं कथमिव कवयो न ते वन्द्याः ॥'

अत्र दिवगतकविगुणानां रमणायोगेऽपि योग उक्तः ।

तथा—

'हृदये चक्षुषि वाचि च तव सैवाभिनवयौवना वसति ।
वयमत्र निरवकाशा विरम कृतं पादपतनेन ॥'

अत्रैकस्य युगपदनेकवृत्तित्वायोगेऽपि योग उक्तः ॥ एवंविधे च सर्वत्र विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते । तां विना प्रायेणालंकरणत्वायोगादिति न सामान्यमीलितैकावलीनिदर्शनाविशेषाद्यलंकारोपन्यासः श्रेयान् ॥

विवक्षितस्य निषेध इवोपमानस्याक्षेपश्चाक्षेपः ।

विशेषविवक्षेत्यनुवर्तते । वक्तुमिष्टस्य प्राकरणिकत्वात्प्रधानस्याशक्यवक्तव्यत्वमतिसिद्धत्वं वा विशेषं वक्तुं निषेध इव न तु निषेध एव । निषेधमुखेन विशेष एव तात्पर्यादित्येक आक्षेपः । उपमानस्य च समाक्षेपस्तिरस्कारः सोऽन्यः ।

---

अन्यथाप्यपि [illegible] दर्शनीयः ॥ अलंकरणत्वायोगादिति । तथा चाह—
यथा सर्वेऽपि [illegible] विभाव्यते । एकोऽसौ कविता धर्मः सोऽलंकारो [illegible] अनया विना ॥ इति ॥ सामान्येति । 'मलिन- [illegible]' सामान्यम्, 'अपाङ्गतरङ्गे' इति 'पताकि' इत्यनयोर्मीलितम्, 'पुरपि' इति 'न तथा[illegible]' इत्यनयोरेकावली उपपत्ति- [illegible] निदर्शना 'दिवमप्युपयातानाम्' इति 'हृदये चक्षुषि' इत्यनयोर्विशेष [illegible] प्रदर्शितत्वात् न दर्शनीय इति ॥ अशक्यवक्तव्यत्वमिति । वक्ष्यमाणविषयतामाह । अतिसिद्धत्वमिति । अतिप्रसिद्धत्वम् । अनेन उक्त

---

१ 'गिरः कथमिव' ख ट. २ 'अतिप्रसिद्धत्व' ख प्र.

---

१ 'सर्वत्र' इत्यारभ्य [illegible] सैव सर्वा' [illegible] इति पाठो भवेत्. २ 'एषा' मूले

यथा—

'एसो वि ण सच्चविओ भीसे पमरन्तपल्लवारुणराओ ।
मज्जणतम्बेसु मओ तह मदातम्बेसु लोयणेसु अमरिसो ॥'

इति ।

अयोगस्य व्यस्तयो योगश्चतुर्थी ।

यथा—

'पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेवात्र हरिणाक्षीणामुदीर्णो रागसागरः ॥'

अत्रानुद्गते चन्द्रे रागसागरस्योद्रेकयोगेऽपि चन्द्रस्योद्दीपनविभावनाति शयप्रतिपादनार्थं योग उक्तः ।

यथा वा—

'पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गयः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥'

तथा—

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुञ्जितं तन्न जहार यन्मनः ॥'

अत्र वराङ्गनादीनां पङ्कजादीनां च निःक्षेपतया पुरजलादिव्याप्तेरयोगेऽपि योग उक्तः ।

यथा वा—

'उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥'

अत्र वारणेन्द्रलीलां गिरिर्वहतीत्यसंबन्धेऽपि संबन्ध । यद्वा गिरिवारणेन्द्रगतयोर्लीलयोरभेदेऽप्यैक्यमध्यवसितम् ।

---

यथमिति । मज्जनाताम्रयोरस्मिंश्चवार्मरराग मदाताम्रयो लोचयोरपरागे च

१ एषोऽपि न [illegible] प्रसरत्पल्लवारुणराग ।
मज्जनताम्रेषु मदराग्रा मदाताम्रेषु लोचनेषु [illegible] इति संस्कृतम् ।

२ किरणानुदीर्ण स्यात्.

यथा वा—

'दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥'

अत्र दिवगतकविगुणानां रमणायोगेऽपि योग उक्तः ।

यथा—

'हृदये चक्षुषि वाचि च तव सैवाभिनवयौवना वसति ।
वयमत्र निरवकाशा विरम कृतं पादपतनेन ॥'

अत्रैकस्य युगपदनेकवृत्तित्वायोगेऽपि योग उक्तः ॥ एवंविधे च सर्वत्र विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते । तां विना प्रायेणालङ्करणत्वायोगादिति न सामान्यमीलितैकावलीनिदर्शनाविशेषाद्यलङ्कारोपन्यासः श्रेयान् ॥

विवक्षितस्य निषेध इवोपमानस्याक्षेपश्चाक्षेपः ।

विशेषविवक्षयेत्यनुवर्तते । वक्तुमिष्टस्य प्राकरणिकत्वादुपमानस्याशक्यवक्तव्यत्वमतिसिद्धत्वं वा विशेषं वक्तुं निषेध इव न तु निषेध एव । निषेधमुखेन विक्षेप एव तात्पर्यादित्येक आक्षेपः । उपमानस्य च य आक्षेपस्तिरस्कारः सोऽन्यः ।

---

अलङ्कारान्तरेऽपि लक्षणायोगो दर्शनीयः । अलङ्करणत्वायोगादिति । तथा चाह—'सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते । यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥' इति । सामान्येति । मलिका— इत्यादौ सामान्यम्, अपाङ्गतरङ्गे इति पद्योऽपि इत्यनयोर्मीलितम्, पुरापि' इति 'न तज्जलम्' इत्यनयोरेकावली उदाहृति— इत्यादि निदर्शना 'दिवमप्युपयातानाम्' इति हृदये चक्षुषि' इत्यनयोर्विशेष अलङ्कारा यथाक्रमं प्रदर्शितास्तथा न दर्शनीय इति । अशक्यवक्तव्यत्वमिति । वक्ष्यमाणविषयतामाह । अतिसिद्धत्वमिति । अतिप्रसिद्धत्वम् । अनेन उप

---

१ 'गिरः कथमिह सरः २ अतिप्रसिद्धत्वं' अ प्र

---

१ 'सर्वत्र ध्वन्यालोके अतिशयोक्तिरूपिता सैव सर्वा' लोचन व्याख्यो पलम्भात् 'सैव सर्वात्र' इति पाठो भवेत् २ एषो' मूले

निषेधो यथा—

'अहं त्वां यदि नेक्षेय क्षणमप्युत्सुका ततः ।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते ॥'

अत्र वक्ष्यमाणमरणप्रदयो निषेधात्माक्षेपः ।

उक्तविषयोऽपि यथा—

'ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥'

उपमानाक्षेपो यथा—

'तस्यास्तन्मुखमस्ति सौम्य सुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ च यदि ते[२] किं नाम नीलोत्पलैः ।
किंवा कोमलकान्तिभिः किसलयैः सत्येव तत्राधरे
ही धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥'

यथा वा—

'गर्वमसंवाह्यमिमं लोचनयुगलेन वहसि किं मुग्धे ।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥'

अत्र लोचनयुगलस्योपमानीकृतस्याक्षेपः ।

यथा वा—

'अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥'

अत्र हालाहलस्योपमानस्याक्षेप इति न प्रतीपमलंकारान्तरम् ॥

---

निरपवादः । 'किमुक्तेनाप्रियेण ते' इति [illegible] अवस्था वा [illegible] [illegible] प्रतिपद्यते । निमन्त्रमेति । [illegible]

१ 'मरणं' [illegible]. २ 'ये' [illegible]. ३ [illegible]. ४ [illegible].

१ [illegible]. २ [illegible].

अर्थानां विरोधाभासो विरोधः ।

जातिगुणक्रियाद्रव्यरूपाणां पदार्थानां सजातीयेन विजातीयेन वा वस्तुवृत्त्या विरोधेऽपि परस्परप्रतिबन्धलक्षणो व्याघातलक्षणो वा यो विरोधस्तद्वदाभासमानो विरोधः ।

तत्र जातेर्जात्या यथा—

'एकस्यामेव तनौ बिभर्ति युगपन्नरत्वसिंहत्वे ।
मनुजत्ववराहत्वे तथैव यो विभुरसौ जयति ॥'

गुणेन यथा—

'द्रोणाश्वत्थामयमेषु भुक्त्वा श्रुत्वा द्रुतं स्थितम् ।
आसम्यमथ शौर्यं वा को नु विक्रीयते पुमान् ॥'

क्रियया यथा—'सिंहोऽपि परिभूयते ।'

द्रव्येण यथा—

'सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥'

गुणस्य गुणेन यथा—

'सत्यं त्वमेव सरलो जगति जरागमितकुब्जभावोऽपि ।
अवनम्परमसि विमलो विततागुरुधूममलिनोऽपि ॥'

क्रियया यथा—

'पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥'

---

पारदोषस्य सा सपत्नीमतिप्रसिद्धोऽयमथ इत्यस्य प्रतिपादनाय व्याघात इति । एकत्वप्रतिबन्धकः तद्वदाभासमान इति । अयं भावः—विशेषविषयत्वेनात्रा-प्यनुपपन्नत्वात् यत्र भावान्तरेभ्यो वैशिष्ट्यं व्याप्यपित्तुमाशुके विरोधप्रतीतिकारि न तु विरोधपर्यवसायि तत्रायं विरोधालंकारः यत्र पुनः परिहारासंभवस्तत्र व्याहतदोष इति ॥ सत्यं त्वमेवेति । अत्र सरलविमलत्वयोरेकार्थत्वात् भिन्नता च समस्तीति संकराशङ्का न कार्या । येतयो हि परस्परमभिमतत्वात् सोऽपि सरल

---

१ एमेषु स्मात् २ महरित' क प्र ३ पेशल' क प्र ४ सतत्त्ववत्त्वसमो पर्यायो' क प्र टी

द्रव्येण यथा—

'क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते ।
अभूत्रवाम्भोजदलाभिमानः स भार्गवः सत्यमपूर्वसर्गः ॥'

क्रियायाः क्रियया यथा—

'बालमृगलोचनायाश्चरितमिदं चित्रमत्र यदसौ माम् ।
जडयति सतापमति च दूरे हृदये च मे वसति ॥'

द्रव्येण यथा—

'सीता ददाह नैवाभिर्हिम दहसि भूरुह ।
ताप्यन्ते शशिना चित्रं विरहे कामिनो भृशम् ॥'

द्रव्यस्य द्रव्येण यथा—

'समदमतङ्गजमदजलनिःसङ्गतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक त्वयि तटजुषि शंकरजूटापगापि कालिन्दी ॥'

एवं दश भेदाः । एषु परस्परप्रतिबन्धो विरोधः ।

व्याघातो यथा—

'अभ्यसज्जनसांगत्ये न वसत्येव वैकृतम् ।
अक्षाल्तिविशुद्धेषु हृदयेषु मनीषिणाम् ॥

अत्र क्षालनाभावे विशुद्धिर्व्याहन्यते ।

यथा वा—

'महर्धिनि कुले जन्म रूपं स्मरसुहृद्वयः ।
तथापि न सुखप्राप्तिः कस्य चित्रीयते न धीः ॥'

तथा—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥'

---

विभाव॰ तु विभावनेति । अभ्यसज्जनसांगत्ये' इत्यादौ विभावना महर्धिनि' इति

---

१ 'विरुन्द' क॰ प्र

तथा—

'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥'

एषु कारणसामग्र्ये फलाभावो व्याहन्यते ।

यथा वा—

'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातरा
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥'

अत्रान्यदेशस्थितेन कारणेनान्यदेशस्थकार्योत्पादो व्याहन्यते ।

यथा वा—

'विश्रामशीकालकभङ्गतां गतवधूकपतमालपल्लव ।
चकार यस्याम्बरधूमसंचयो मलीमसः शुक्लतरं निजं यशः ॥'

अत्र मलीमसेन शुक्लतरीकरणं व्याहन्यते ।

तथा—

'आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'

अत्रानन्ददानं शरीरतापेन व्याहन्यते ।

'शिरीषादपि मृद्वङ्गी केयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥'

अत्र मार्दवं कार्कश्येन व्याहन्यते ।

---

स एष' इति 'कर्पूर इव' इति च त्रिषु विशेषोक्ति　सा बाला' इत्यादावसंगति' 'विश्रामशीकालक' इति 'शिरीषादपि' इति आनन्दममन्दमिमम्' इति 'त्रिपुरेश' इति

---

१ मलक्षेत्रतये' च प्र　२ पीनोन्नतिमत्पयोधरयुगं' वामनवृत्ती　३ 'क्रम' च प्र　४ 'कुचाग्रे मदनानिलः' च प्र

द्रव्येण यथा—

'क्रौञ्चाद्रिरुद्दामदृषदृढोऽसौ यन्मार्गणानर्गलशातपाते।
अभूत्नवाम्भोजदलाभिमात स मार्गण सत्यमपूर्वसर्ग ॥'

क्रियाया क्रियया यथा—

'बालमृगलोचनामाश्चरितमिद चित्रमत्र यदसौ माम्।
जडयति सतापयति च दूरे हृदये च मे वसति ॥'

द्रव्येण यथा—

'सीतां ददाह नैवाग्निर्हिम दहति भूरुह।
ताप्यन्ते शशिना चित्र विरहे कामिनो भृशम् ॥'

द्रव्यस्य द्रव्येण यथा—

'समदमतङ्गजमदजलनि सक्ततरङ्गिणीपरिष्वङ्गात्।
क्षितितिलक त्वयि तटजुषि शकरजूटापगापि कालिन्दी ॥'

एव दश भेदा। एषु परस्परमतिमन्थो विरोध।

व्याघातो यथा—

'अप्यसज्जनसांगत्ये न वसत्येव वैकृतम्।
अक्षालितविशुद्धेषु हृदयेषु मनीषिणाम् ॥

अत्र क्षालनाभावे विशुद्धिर्व्याहन्यते।

यथा वा—

'महर्षिणि कुले जन्म रूपं स्मरसुहृद्वय।
तथापि न सुखप्राप्ति कस्य चित्रीयते न धी ॥'

तथा—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुध।
हरतापि तनु यस्य शंभुना न हृत बलम् ॥'

---

भिन्न० ॥ विभावनेति। अप्यसज्जनसांगत्ये इत्यादौ विभावना 'महर्षिणि' इति

---

१ 'निरपन्द' ध प्र

यथा—

'कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥'

एषु कारणसामग्र्ये फलाभावो व्याहन्यते ।

यथा वा—

'सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥'

अत्रान्यदेशस्थितेन कारणेनान्यदेशस्थकार्योत्पादो व्याहन्यते ।

यथा वा—

'विश्रामखीकाकमङ्गलां गतवयीवधूकणतमाकपलव ।
चकार यस्याम्बरधूमसंचयो मलीमसः शुक्लतरं निजं यशः ॥'

अत्र मलीमसेन शुक्लतरीकरणं व्याहन्यते ।

तथा—

'आनन्दममन्दमिमं कुवलयदलोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥'

अत्रानन्ददानं शरीरतापेन व्याहन्यते ।

'शिरीषादपि मृद्वङ्गी केयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥'

अत्र मार्दवं कार्कश्येन व्याहन्यते ।

---

ष एषु' इति 'कर्पूर इव' इति च त्रिषु विशेषोक्तिः 'सा बाला' इत्यादावसंगतिः 'विश्रामखीकाकम' इति 'शिरीषादपि' इति 'आनन्दममन्दमिमम्' इति त्रिपुवेषु' इति

---

१ 'मकरकेतवे' क प्र २ 'पीनोन्नतिमत्पयोधरयुगं' वामनवृत्ती ३ 'केयं' क प्र ४ 'कुकूलो मदनानिल' क प्र

तथा—

'विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥'

अत्र हीनेन गुरुकार्यकरणं व्याहन्यते ।

'किं ददातु किमथातु भर्तव्यमरणाकुलः ।
उदारमतिराप्तेऽपि जगत्त्रितयमात्रके ॥'

अत्राधिकेन स्वल्पकार्याकरणं व्याहन्यते ।

यथा वा—

'अहो विशाल भूपाल भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥'

अत्र मानाशक्यत्वेन मानं व्याहन्यते ।

तथा—

'मदर्थसंभावनोत्थाय परितोषाय मूर्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥'

अत्राङ्गानामतिविपुलतया परितोषाभानं व्याहन्यते ।

यथा वा—

'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥'

अत्र दृशैव दाहो जीवनं च व्याहन्यते ।

यथा वा—

धवलोसि जइ वि सुन्दर तह वि तए मज्झ रञ्जिअं हिअअम् ।
रायभरिए वि हियए सुहय निहित्तो न रत्तोसि ॥[1]

अत्र धवलेन रञ्जनं रागभृतहृदयेनारञ्जनं च व्याहन्यते ॥ एवं च विभावनाविशेषोक्त्यसंगतिविषमाधिकव्याघातादनुमा प्रभृतयोऽलंकार

'किं ददातु' इति च पद्यद्वयं विषमम्, 'अहो विशाल' इति 'मदर्थसंभावनोत्थाय' इति च द्वयोरधिकम्, 'दृशा दग्धम्' इति व्याघातः 'धवलोऽसि' इत्यत्राप्यनयेति पूर्वमलंकारा च

१ धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥' [इति संस्कृतम् ।]

यथा—

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥'

अत्र निशाशशिनोरुपमेययोरुपोढरागादिविशेषणवशान्नायकयो रुपमानयोः प्रतीतिः ॥

---

यमानोपमास्वरूपं नातिवर्तत इत्युपमैवैषा । हन्त तर्हि रूपकमप्युपमाप्रभेदत्वान्नाल- ङ्कारोऽपि पृथक् वक्तव्यः । तथाप्युपमानोपमेयभावप्रतीतेरपर्यवसानसंचारो व्याप्ये नालं- कारान्तरम् । यदाह वामनः—'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' इति ॥ अथ रूपकादिषु तत्त्वारोपादिलक्षणं विशेषमाश्रित्य व्यपदेशान्तरं प्रवर्तते । तर्हि समासोक्तावपि सहार्थसामर्थ्याक्षिप्तसाम्यसमन्वयो विशेषः समस्तीति समासोक्त्यादिभिः किमपराद्धमित्यलं बहुना ॥ उपोढरागेणेति । उपोढो धृतो रागः सान्ध्योऽरुणिमा प्रेम च येन । विलोले तारके ज्योतींषि नेत्रविभागश्च यत्र । तथेति झगित्येव प्रेमरभसेन च । गृहीतमा- भासितम्, परिचुम्बितुमाक्रान्तं च । निशाया मुखं प्रारम्भो वदनकमलं च । यथेति । यथा झटितिप्रवृत्तेन प्रेमरभसेन च । तिमिरं च अंशुकमेव सूक्ष्मा अंशवस्तिमिरांशुकं र- श्मिसमूहमिश्रं तमःपटलम्, तिमिरं वांशुकं नीलजालिका नवोढा शृङ्गारभूषिता । ननु तिमिरमेवांशुकमिति व्याख्येयम् । एकविषयत्वमेवतापत्ते । रागप्रकर्षसंख्यातत्वात्, तदनन्तरं प्रेमग्रहणं हेतो । पुरोऽपि पूर्वस्यां दिशि अग्रे च । गलितं प्रशान्तम्, पतितं च । तया रात्र्या करणभूतया । समस्तं निखिलमुपलक्षणत्वेन वा । न लक्षितं रात्रिप्रा- रम्भोऽयमिति न ज्ञातम् । तिमिरसंवलिताञ्शुदर्शने हि रात्रिमुखमिति व्यपदेश एव न तु स्फुटं भासेते । नायिकापक्षे तु तयेति कर्तृपदं रात्रिपक्षेऽनिशाख्या लक्षितमित्यस्या- नन्तरम् । अत्र च नायकेन पश्चादागत्य चुम्बनोपक्रमे पुरो नीलांशुकस्य पतनं पतनम् । यदि वा पुरोऽग्रे तथा गृहीतं नायकेन मुखमिति संबन्धः । एतस्याश्च समासोक्तेर्न श्लेष- मन्तरेण विविक्तविषयता उपलभ्यत इति श्लेषेण सह संकरासङ्गा न कार्या । नैषा प्रल- ङ्कारान्तं विविक्तविषयत्वसाम्यमस्मत्सम्म संभवति तयामेव परस्परसंकीर्णमायतायां संक- रस्य मुख्य । यथा विरोधव्यतिरेकयोः श्लेषस्य च । श्लेषाभावेऽपि हि एकस्यामेव तन्वी- दृष्टार्थो विरोधो यस्याश्चरणो निसम् दृष्टार्थो व्यतिरेकश्च दृश्यते । विरोधव्यतिरेका- भावे च श्लेषाऽदृश्यमानं दृष्टार्थो श्लेषधनि । अथतु विरोधश्लेषयोः श्लेषव्यतिरेकयोश्च संकरत्वम् । समासोक्तिस्तु समानविशेषणाभिधायिभिः श्लेषपदैरेवाम्नाये प्रतिलभ्यत इति नास्या विविक्तो विषय उपलभ्यते । अथासावर्तेनास्याः प्राधान्येऽति ॥ नायकयोरिति ।

---

१ 'निशांशु' इति स्यात् 'तिमिरनिशांशु' पाठ्यामेवमत्र च ने

स्वभावाख्यानं जातिः ।

अर्थस्य तादवस्थ्यं स्वभावः । स च संस्थानस्थानकव्यापारादिस्तस्य वर्णनं जातिः ।

तत्र संस्थानं यथा—

'पर्यायस्खलितस्फिचं करतलोत्क्षिप्तोत्तरीयां मया
मल्लाग्निस्तुरगैर्गता विधुरतामज्ञातमल्लामहा ।
नेपथ्ये कथयन्ति नूपुरतनयाह्नु स्लिष्टसपादिवे
निर्व्यक्त्यार्पितचक्षुषः परिचयोपात्ता प्रिय मोत्रिया ॥'

स्थानकं यथा—

'स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥'

व्यापारो यथा—

'अङ्गुलीं नयत सारामि ते शरसुतसङ्गनिषण्णपन्वन ।
मधुना सह समिता कथा नयनोपान्तविलोकितं च तत् ॥'

---

मयकव्य मात्मिक भस्येकस्य ॥ तादवस्थ्यमिति । सा मनुमर्यकगोचरा अवस्था यस्य स इत्यस्य भावस्तादवस्थ्यमिति । अयमर्थः —कविप्रतिभया निर्विकल्पकप्रत्यक्षकल्पया विषयीकृता वस्तुस्वभावा यत्रोपवर्ण्यन्ते स जातविषय । एव च अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः । अलङ्कार्यतया तयां किमन्यदवशिष्यते ॥ इति यदभिप्रायतिपादितम्, तभिरस्तमेव । वस्तुनो हि सामान्यस्वभावा लौकिकोऽर्थोऽनलङ्कार्य । कविप्रतिमासंरम्भविशेषविषयस्तु लोकोत्तरार्थोऽलङ्करणमिति ॥ यथा चाह— उभयं वस्तुनस्तावद्रूपमिह विद्यते । तत्रैकमस्य सामान्यं यद्विकल्पैकगोचरः ॥ स एव सर्वशब्दानां विषयः परिकीर्तितः । अत एवाभिधीयन्ते ध्यामलं बोधयन्त्यमुम् ॥ विशिष्टमस्य यद्रूपं तत्प्रत्यक्षस्य गोचरः । स एव सत्कविगिरां गोचरः प्रतिभासुवाम् ॥ यतः 'रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः । क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥ सा हि चक्षुर्भगवतस्तृतीयमिति गीयते । येन साक्षात्करोत्येष भावांस्त्रैलोक्यवर्तिनः ॥ अस्य स्वभावस्योक्तिर्या सालंकारतया मता । यतः साक्षादिवाभान्ति तत्रार्थाः प्रतिभार्पिताः ॥ यथा । अङ्गुलीमित्यादि । सामान्यस्तु स्वभावो यः सोऽन्यालंकारगोचरः । शिष्टमर्थमलंकर्तुमन्यथा को हि शक्नुयात् ॥ वस्तुमात्रानुवादस्तु पूरणकल्पे हि य । अर्थदोष स दोषेष्वपुष्ट इति गी

१ भावस्य स्यात् २ तनया तु — इति स्यात्

यथा—

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥'

अत्र निशाशशिनोरुपमेययोरुपोढरागादिसश्लिष्टविशेषणवशान्नायकयो रुपमानयोः प्रतीतिः ॥

---

तीयमानोपमास्वरूपं नातिवर्तत इत्युपमैवेष्यते । हन्त तर्हि रूपकापह्नुत्यप्रस्तुतप्रशंसा- योऽपि पृथङ् न वक्तव्याः । तत्राप्युपमानोपमेयभावप्रतीतेरुपमैवालंकारो नान्यो नालं- कारान्तरम् । यदाह वामनः — 'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' इति ॥ अथ रूपकादिषु तत्त्वारोपादिलक्षणं विशेषमाश्रित्य रूपकादिव्यवहारः प्रवर्तते । तर्हि सहोक्त्यादावपि सहार्थसामर्थ्यावसितसाम्यसमन्वयो विशेषः समस्तीति सहोक्त्यादिभिः किमपराद्धमित्यलं बहुना ॥ उपोढरागेणेति । उपोढो वृद्धो रागः लौहित्यमभिमा प्रेम च येन । विलोलाश्चञ्चलास्तारका ज्योतींषि नेत्रविभागाश्च यत्र । तथेति झगित्येव प्रेमरभसेन च । गृहीतमा- भासितम्, परिचुम्बितुमारब्धं च । निशाया मुखं प्रारम्भः वदनप्रदेशश्च । यथेति । यथा झगितिग्रहणेन प्रेमरभसेन च । तिमिरं च अंशुकमिव सूक्ष्मा अंशुकतिमिरांशुकं र- श्मिसमवलम्बितं तमःपटलम्, तिमिरं चांशुकं नीलवस्त्रमिव नवोढा प्रेमवशंभूता । यद्वा तिमिरमेवांशुकमिति व्याख्येयम् । एकदेशविवर्तिरूपकापत्तेः । रागात्प्रकाशसंबन्धात्, तदनन्तरं प्रेमरसाच्च हेतोः । पुरोऽपि पूर्वस्यां दिशि अग्रे च । गलितं प्रशान्तम्, पतितं च । तया रात्र्या कामुकभूतया । समस्तं तिमिरमुपलक्ष्यत्वेन वा । न लक्षितं रात्रिप्रा- रम्भोऽसौ इति न ज्ञातम् । तिमिरलक्षणस्यांशुकस्यादर्शने हि रात्रिमुखमिति ज्ञायेत न तु स्फुटे प्रकाशे । नायिकापक्षे तु तथाविधे चन्द्रोदये रात्रिपक्षेऽपि लक्षितमिसम्मा- नन्तरम् । अत्र च नायकेन पश्चाद्भागेन चुम्बनोपक्रमे पुरो नीलांशुकस्य गलनं पतनम् । यदि वा पुरोऽग्रे तथा गृहीतं नायकेन मुखमिति संबन्धः । एतस्याश्च समासोक्तेः श्लेष- मन्तरेण विविक्तविषयता उपलभ्यते इति श्लेषेण सह संकराशङ्का न कार्या । येषां पुनरलं- काराणां विविक्तविषयत्वमप्यस्ति तेषामेव परस्परसंकीर्णमाश्रयाणां संक- रता युक्ता । यथा विरोधव्यतिरेकयोः श्लेषस्य च । श्लेषाभावेऽपि हि एकस्यामेव तन्वे- त्यादौ विरोधो 'यस्यानर्घत्वतो नित्यम्' इत्यादौ व्यतिरेकश्च दृश्यते । विरोधव्यतिरेका- भावे च 'असमाप्तजिगीषस्य' इत्यादौ श्लेषस्येति । यत्तु विरोधश्लेषयोः श्लेषव्यतिरेकयोश्च संकरत्वम् । समासोक्तिस्तु समानविशेषणमित्यभिधेयैः श्लेषपदैरेवारम्भात् प्रतिलब्धेति नास्या विविक्तो विषय उपलभ्यते । श्लेषापवादत्वेनास्याः प्रवृत्तेरिति ॥ नायकयोरिति ।

---

१ 'तिमिरांशु' इति स्यात्. 'अंशुतिमिरांशु' पाठस्त्वसमञ्जसोऽपाठ्यत्वे

स्वभावाख्यानं जातिः ।

अर्थस्य सादवस्थ्यं स्वभावः । स च सस्थानस्थानकव्यापारादिरूपस्तस्य वर्णनं जातिः ।

तत्र सस्थानं यथा—

'पर्याणस्खलितस्फिज करसखोलितोत्तरीयां बला
　वल्गाह्निस्तुरगौर्गता विधुरतामज्ञातवल्गामहा ।
नेपथ्ये कथयन्ति भूपतेनयाद्युश्लिष्टसपादिते
　निर्लक्ष्यार्पितचक्षुषः परिचयोपात्तां श्रियं श्रोत्रिया ॥'

स्थानकं यथा—

'स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥'

व्यापारो यथा—

'मजुतां नमस सरगमि से स्मरमुखसङ्गनिषण्णघन्वन ।
मधुना सह समिता कथा नयनोपान्तविलोकितं च तत् ॥'

---

भावस्य भाविकम् चेन्चैवदीप ॥ तादवस्थ्यमिति । सा वस्तुनैकगोचरा अवस्था यस्य स इत्येव भावतादवस्थ्यमिति । अयमर्थः—कविप्रतिभया निर्विकल्पकप्रत्यक्षकल्पया निष्पीडय वस्तुस्वभावो यत्रोपवर्ण्यते स जातिविषयः । एवं च अलंकारकृतां येषां स्वभावोक्तिरलंकृतिः । अलंकार्यतया यथा भिन्नमपरिभाषित ॥ इति कविप्रतिभाप्रतिपादितम् तन्निरस्तमेव । वस्तुनो हि सामान्यस्वभावो लौकिकोऽर्थोऽलंकार्यः । कविप्रतिभासंरम्भविशेषविषयस्तु लोकोत्तरोऽलंकरणमिति ॥ तथा चाह— उभयत्र वस्तुनस्तादृक्य सिद्ध विषयः । तत्रैकमन्यत्सामान्यं यद्विकल्पैकगोचर ॥ स एव सर्वशब्दानां विषय परिकीर्तितः । अत एवाभिधीयन्ते ध्यामलं बोधयन्त्यलम् ॥ विशिष्टमस्य यद्रूपं तत्प्रत्यक्षस्य गोचरः । स एव सत्कविगिरां गोचरः प्रतिभाभुवाम् ॥ यतः रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः । क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥ सा हि चक्षुर्भगवतस्तृतीयमिति गीयते । येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्तिनः ॥ अस्य समासम्बोधिस्य रूपपरतया सत्य । यत्र सामान्यविधायिनि तत्रार्थो प्रतिभार्पितः ॥ यथा ( कुमारसम्भवादि । 'सामान्यस्तु स्वभावो यः सोऽन्यालंकारगोचर' । शिशुस्वभावकर्तृत्व इति अनुमात ॥ वस्तुमात्रानुवादस्तु पूर्वकल्पे हि च । अर्थैवेष स सार्थकत्व [illegible]

१ भावस्य' स्यात् २ तनवा तु - इति स्यात्

**स्तुतिनिन्दयोरन्यतरपरता व्याजस्तुतिः ।**

स्तुतेर्निन्दापरता निन्दायाश्च स्तुतिपरता यत्रोच्यते सा व्याजरूपा व्याजेन वा स्तुतिः व्याजस्तुतिः ।

यथा—

'विनमवसितं विश्रान्ता अस्त्वया मरुकूप हे
परमुपकृतं शौर्यं बद्धु ह्रिया वयमक्षमाः ।
भवतु सुकृतैरम्यान्यानामशोषकजो भवा
निममपि घनच्छाया भूयाद्यथोपरतं क्षमी ॥'

'किं वृथान्तैः परगृहगतैः किं तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥'

**वाक्यस्यानेकार्थता श्लेषः ।**

पदानामेकार्थत्वेऽपि यत्र वाक्यस्यानेकार्थता स श्लेषः ।

यथा—

'दिशः प्रसादयत्येष तेजोभिः प्रसृतैः सदा ।
न कस्यानन्दमसमं विदधाति विभाकरः ॥'

अत्राभिधाया अनियमनात् द्वावप्यर्कभूपौ वाच्यौ ॥

---

वत ॥' व्याजरूपेति । कपटरूपा निन्दाद्यारिकमर्थं ॥ व्याजेनेति । परमार्थेन तु निन्दैवेत्यर्थः । ननु निन्दापूर्विका स्तुतौ केनचिदुदाहृतम्— आसीन्नाथ पितामही तव मही माता ततोऽनन्तरं जाता संप्रति साम्बुराशिरशना जाया कुलोद्भूतये । पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा युक्तं नाम समस्तनीतिविदुषां किं भूपतीनां कुले ॥ इति तदस्माकं मनस्य प्रतिभाति । असम्भाव्यासम्भाव्यस्तुतिहेतुत्वात् । न चानेन स्तुतिः प्रकृता सं यथाक्रमेण रामेति हि किंचिदिमित्येवंप्रथा व्याजस्तुतिः सहृदयगोष्ठीषु निश्चितरूपेणैव ॥ अनेकार्थतेति । दिशो प्रसादयत्येष हि यौगिकमर्थं प्रतिपादयन् विभाकरशब्दः साधारणार्कभूपसाधारणार्थप्रतिपादको भवतीति दिक्प्रसिद्ध्या अनेकार्थप्रतिपादक एव शब्दोऽनेकार्थः । तथाहि—दिक्शब्देन एक पदार्थः एकत्र ककुभोऽन्यत्र तत्स्था प्रजा । प्रसादनं प्रसन्नतनम् हर्षाधानं च । तेजो ज्योतिः प्रतापश्च ॥ अभिधाया अनि-

उत्कर्षापकर्षहेत्वो साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्यं व्यतिरेक' ।

उपमेयस्य प्राकरणिकस्य यदाधिक्यमर्थादुपमानात्स व्यतिरेकः । स चोत्कर्षापकर्षहेत्वो क्रमेण युगपद्वोपादाने त्रिविधायामुक्तौ युगपदनुक्तौ चैकविधाया चतुर्विध । पुनश्च साम्यवाचकस्योक्तावनुक्तौ चाष्टधैव ।

यथा—

'यस्यानर्घ्यमतो नित्य रिपूनप्युज्ज्वलैर्गुणै ।
लक्ष्यते नेतरस्येव गाम्भीर्यैकनिधे' श्रम ॥'

अत्र गाम्भीर्यैकनिधित्वमुपमेयोत्कर्षहेतुरुक्त ।

'तुच्छस्यान्यजनस्येव न श्रयो हन्त लक्ष्यते'

इत्यत्रैव पाठे तुच्छत्वमुपमानापकर्षहेतुर्भवति ।

'असिमात्रसहायोऽस्य प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं धृतेर्निधि ॥'

अत्रोपमानोपमेयगतौ युगपदुत्कर्षापकर्षहेतू उक्तौ ।

'शीर्णपर्णाम्बुवाताशा कष्टेऽपि तपसि स्थिता ।
समुद्वहन्ती नापूर्वं गर्वमन्यतपस्विवत् ॥'

अत्रोत्कर्षापकर्षहेत्वोर्द्वयोरप्यनुक्ति । एव साम्योक्तौ चत्वारो भेदा ।

साम्यानुक्तौ यथा—

'नवीनविभ्रमोद्भेदतरङ्गितगति सदा ।
मुखेन स्मितमुग्धेन जयत्येषा सरोरुहम् ॥'

अत्रोपमेयोत्कर्ष' । इवादिपदविरहात्तु साम्यस्यानुक्ति । अत्र

---

यद्यपावित्ति । द्वयोरप्यर्थयो' प्राकरणिकत्वया विवक्षितत्वमिति भाव । उपमेयस्या धिक्यमिति । न तूपमानस्य । यथा— क्षीण क्षीणोऽपि शशी भूयो भूयोऽभिवर्धते सत्यम् । विरम प्रसीद सुन्दरि यौवनमनिवर्तिं यातं तु ॥' इत्यत्रापि उपमानस्याधिक्यमिति केनचिदुक्तम् तदयुक्तम् । यौवनगताऽस्थैर्यस्य हि अत्र विवक्षितत्वादिति

१ मद्यपाति' क प्र

१ 'मितराम्' ख प्र निम्बम्' घा ड

'विडम्बयति यकेण निस्येन सितमम्बुजम्'

इति पाठपरिणामे उपमानापकर्ष ।

'आननेनाकलङ्केन जयतीन्दु कलङ्कितम्'

अत्र युगपदुत्कर्षापकर्षौ ।

'अहो विडम्बयत्येषा वदनेन सरोरुहम्'

अत्रोत्कर्षापकर्षहेत्वोरनुक्ति । साम्यं त्वाक्षेपात्सर्वत्र प्रतीयते । श्लेषव्यतिरेकस्तु सकरालंकारविषय इति तत्रैवोदाहरिष्यते ॥

**विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्यां समर्थनमर्थान्तरन्यासः।**

साधर्म्येण वैधर्म्येण वा विशेषो यत्र सामान्येन समर्थ्यते सोऽर्थान्तरस्येव न्यसनमर्थान्तरन्यासः ।

तत्र साधर्म्येण यथा—

'रत्नसमालोक्य रथाङ्गपाणि स्थाने स्थिता श्रीरिति सोऽभिदध्यौ ।
वैरापि कार्योपनिबन्धनानि निर्मत्सरा एव गुणेषु सन्त ॥'

वैधर्म्येण यथा—

'अन्ययान्यवनितागतचित्त चित्तनाथमभिशङ्कितवत्या ।
पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतु ॥'

---

यथोक्तमेव श्लेष ॥ संकरालंकारविषयतीति । श्लेषव्यतिरेकयोरन्यत्रापि सम्भवसत्ता-भ्नावितिं भाव । ततश्च तद्देशा अत्र न प्रदर्शितमित्युक्तिता । यथान्यत्रुपमव्यतिरेकत्वापि तव माघ्युतसुधां सभत । स हरिर्नाभा यत्र स हरिर्नागरसुरगानिवहेन ॥ इत्यादावपतु श्लिष्टोक्तियोगस्य पृथगुपादाने वै भेदा संभवति उक्तस्यसंभवेनैव संगृहीता तत्र हि एकस्य पदस्य द्विरुपादानाम श्लेष । उपमानादुपमेयस्याधिक्यमस्तीति व्यतिरेको भवत्येव ॥ अर्थान्तरन्यासेति । यत्र हेतोर्वैकल्यता सह व्याप्तिर्गृह्यमाणत्वमिद्व्यतीयते न तु साहचर्यमात्रं तत्रार्थान्तरन्यासस्यासमानजातीयस्य वस्तुनो बाध्यसमर्थनमर्थान्तरन्यास । न तु यथानुरूपक्रम गतनिसर्गिणैवभवभवमित्यर्थ ॥ अन्यान्योक्तिनिवर्तनात्वा नाम मिथ्य । तथा हि— ऐरावण स्वधनि- इत्यादावस्योक्ती विशेषेण महेन्द्रहस्तान्तराणाभ्येन लघुत्वेन धर्मियुवा होत इति सामान्यं यन्यमान समर्थ्यत । तथा चेह 'न गुणानुपम्ये' इत्यादी

---

१ निन्दतीन्दु कलङ्कितम्' क्व प्र

---

१ यत्र प्रतीति स्यात

यथा—

'सरोजपत्रे परिलीनषट्पदे विशालदृष्टेः स्विदमू विलोचने ।
शिरोरुहाः स्विन्नतपक्ष्मसंततेर्द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥
अगूढहासस्फुटदन्तकेसरं मुखं स्विदेतद्विकचं नु पङ्कजम् ।
इति प्रलीनां नलिनीवने सखीं विदांबभूवुः सुचिरेण योषितः ॥'

अत्र रूपकगर्भीकारेण निर्णयान्तः संशयः ।

यथा वा—

'अथ जयाय नु मेरुमहीभृतो रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं समुदितं नु विलङ्घयितुं नभः ॥'

अत्रातिशयोक्तिगर्भीकारेणानिर्णयान्तः ।

यथा वा—

'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।

---

न्यसंदेहप्रसङ्ग प्रतिनियतप्रकारमात्राभावात्प्रसङ्गस्य अन्यनिरूपणात्प्रस्य स्तुतिपर्यवसायिता मिकेति संदेहो वाप एवेति दोषपरपदेति । तृतीयमुक्तमन्यसंदेहाभावप्रसङ्गेन यत्रोऽस्य मसंदेहालंकारस्य विषयोऽवगन्तव्य ॥ सरोजपत्रे इत्यादि । अत्र प्रकृतं नियमेनाक्ष यथा निश्चितमेव यदि परं रूपकसंस्कारापादनमाहात्म्यात्संदेहस्यैवप्राधान्येन रूपेणमवगति । तात्पर्यपर्यवसायिनावसाने तुल्यमात्रत्वेन विश्रान्तिः । संदेहवर्णनमात्रमात्रा तु तस्य वाच्यपरत्व ॥ अथ जयायेति । प्रतिपक्षेभ्याभावेन मरुप्रसंगमापन्ना ॥ रभसयेति । त्वरितया । अन्यथा दिग्विजयेनोत्तरभाग सर्वेन्द्रियभावनमप्युनस्य भविष्यत्येव । हिमाचलमिति । हिमाचलैकदेशमिन्द्रप्रस्थात्स्य तपोर्थमिति तात्पर्यम् । समुदितमिति । पिण्डीभूतम् । अथा(१)प्रवाभिव्यापारकम्पूत हिमाचलस्य माहात्म्यम् ॥ अतिशयोक्तिगर्भीकारणेति । तथा हि याऽसौ पौरुषेभ्यापारनिरस्कारेण तुल्यवस्तुप्रत्यवसायसमनन्तरा योगिन्द्रयोगस्य यावत्तस्य संभव प्रतिपादित स नभिरिर्निषाद्य तथाभिमानमौप्यूपम्यस्य पर्वत सदृशमाभिव्यापारम्प्रवर्तनमभमनयोपमाभिसमाक्षिप्तमसंबन्धेऽपि संबन्धाभिधानमतिशयोक्तिमभ्यस्यति ॥ अयं मार्तण्ड किमिति । अत्रोपमेयस्य तत्प्रवमुपमानत्वेन

---

१ 'नैव' का. प्र.

१ भगवति व्याप्त मत्स्यनुगमात अत्र जयादि व्याप्त

कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥'

अत्र रूपकगर्भीकारेण भेदस्योक्तौ ससन्देहः ॥

प्रकृताप्रकृताभ्यां प्रकृतापलापोऽपह्नुतिः ।

प्रकृतेन प्रकृतस्यापलाप एका अपह्नुतिः । अप्रकृतेन प्रकृतस्यापलापोऽन्या ।

तत्राद्या यथा—

'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥'

अत्र गिरिजाकरस्पर्शकारणौ पुलकवेपथू सात्त्विकरूपौ प्रकृतौ प्रकृतेनैव तुहिनाचलशैत्येनापह्नुतौ ।

द्वितीया यथा—

'नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥'

---

पद्मभेदे उपमाने वक्तव्यतामुखे स्वरूपमात्रे पदार्थातिरेकमात्रता तथापि नास्मिन्नस-म्भवद्वस्तुभिमान्ति । अपि तु कविसमर्पितद्योपादानात्वीह एव वाक्यार्थतया पर्यवस्यति । तत्र परिकरवत्त्वार्थं स्वरूप्यतिरेकमात्रमुखे प्रतिभासेते इति तत्संकरशङ्का न कार्या ॥ भेदस्योक्ताविति[1] । पूर्वोदाहरणद्वये तु भेदस्यानुक्तिरिति ॥ अप्रकृतेन प्रकृतस्यापलापोऽन्येति । अत्र पारमार्थिकस्याधस्वरूपस्यापारमार्थिकस्य असत्यतया स्थापनं स्वरूपतया बोद्धव्यम् । तात्पर्यं तु वाक्यस्य सादृश्ये एव । तथा अत्र पदार्थैकरूपविपर्यासोऽभिधीयते । न च तत्र स्वरूपस्य पुरस्तात् सामर्थ्यमस्ति तेनोन्मत्तवाक्यता प्रत्युत सौन्दर्यसाम्यमिथ्या सहृदयचमत्कारिता भवति । योऽयं वाक्यार्थपरिकल्पमापह्नुतस्तत्परो भवामिप्रायपरिग्रहः । उपमेयस्यापह्नुतत्वात् च स्फुटेन रूपेणोपमानोपमेयभावस्याभावादस्तीति रूपकशङ्का न कार्या ॥ अलङ्कारो निरोधरूपसमासो भवन् ॥ नेयं विरौतीति ।

---

१ 'भेदस्योक्तौ' स्यात्.

यथा—

'विलसदमरनारीनेत्रनीलाब्जखण्डा-
न्यधिवसति सदा यः संयमाधःकृतानि।
न तु ललितकलापे वर्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः॥'

यथा वा—'इदं ते केन—' इति। एवमियं भङ्ग्यन्तरैरप्यूह्या॥

पर्यायविनिमयौ परावृत्तिः।

एकस्यानेकत्रानेकस्य चैकत्र क्रमेण वृत्तिः पर्यायः। समेन समस्योत्कृष्टेन निकृष्टस्य निकृष्टेनोत्कृष्टस्य वा व्यतिहारो विनिमयः। तावेतौ परावृत्तिः।

यथा—

'जो तीए अहरराओ रत्तिं उव्वासिओ पिययमेण।
सो च्चिय दीसइ गोसे सवत्तिनयणेसु संकन्तो॥'

अत्रैकस्यानेकत्र वृत्तिः। रागस्य च वस्तुतो भेदेऽपि एकत्वमाध्यवसितत्वादेकत्वमविरुद्धम्॥

'तद्गेहं नतभित्ति—' इति। अत्रानेकं गृहाद्येकत्र क्रमेण वर्तते।

विनिमयः समेन समस्य यथा—

'आदाय कर्णकिसलयमियमस्मादत्र चरणमर्पयति।
उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये॥'

---

अत्र मदमुखमधुकराम्भोजनिदर्शनं विलसितस्य ह्रस्वभेदिता विशेषेण चामरमधुमत्तोत्पलेन समासमध्यवसाय तदैक्यारोपेण तथैवापहृतम् इति॥ जो तीए इति। अत्र च एतेषि ताम्बूलविजनितरागारोपनिर्वर्तनयोरभेदोपचारः॥ यथा वा—न लाभकलिकितिर्यं तत्र कलकूट केनोत्तरोत्तरविभिन्नपदोपपत्त्या। प्रथमर्भवस्य हृदये द्वयमस्मयोऽपि कण्ठेऽमुना

---

१ यस्तस्या अधररागो रात्रावुद्वासितः प्रियतमेन।
स एव दृश्यते प्रातः सपत्नीनयनेषु संक्रान्तः॥' [इति संस्कृतम्.]
२ 'मर्म चरणमचरणमर्पयति' काव्यप्रदीपे

---

१ 'ह्रस्वभेदितानिवेशेन' स्यात्. २. 'मन्ये' क. प्र.

'यो बली व्यासभूसीम्नि मसेन यां जिगीषति ।
अमर्मं स्वर्गसभम्यो दत्त्वा जगाह सर्वताम् ॥'

अत्रोत्कृष्टेनाभयेन निकृष्टस्य सर्वतस्य ।

'तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥'

अत्र निकृष्टेनोत्कृष्टस्य ॥

**हेतोः साध्यावगमोऽनुमानम् ।**

अन्यथानुपपत्त्येकलक्षणाद्धेतोः साध्यस्य विवक्षितार्थस्य प्रतीतिर्यत्र वर्ण्यते तदनुमानम् ।

यथा—

'सानुक्रममागमिष्यमून पतितोऽसि पादयोस्त्वसा ।
कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम् ॥'

यथा वा—

'निर्वेतुं शक्यमस्तीति मध्य तव नितम्बिनि ।
अन्यथानुपपत्त्यैव पयोधरभरस्थिते ॥'

यथा वा—

'संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥'

अत्र कमलिनीमीलनेन[१] निशासमयः प्रतिपाद्यत इत्यनुमानमेवेदम् ॥

भवसि यासि पुनः सज्जनाम् ॥' सर्वतामिति । सज्जनताम् ॥ स्वर्गिण इति । स्वर्गेयतां गतस्यार्थं ॥ मर्यस्येति । भावस्याभावस्य वा । तत्र भावस्य साध्यार्थप्रतीति साङ्गम्— इत्यत्र निदर्शिता । अभावस्य साध्यार्थप्रतीतिस्तु यथा— पण्णवति अन्नमण्णसि सव्वं विम सो तएण सम्म विमो । ण हु होन्ति तम्मि दिट्ठे　　सच्चम वच्चरे ॥' अत्रार्थस्य साधने ॥ निर्वेतुं शक्यमस्तीति । अत्र स्तननितम्बयोर्मध्ये मध्यं नोपलभ्यते स्तनभरावस्थानं न स्यात् तत्रैव पयोधरभरस्थिति साम्यानुपपत्ताव्यवहारकं मध्यमनुपलभ्यमानं बोधयति । उदाहरणान्तरस्य चायमभिप्रायः । यथा केनचित्पर्यापतितस्कन्धोऽध्वर पूर्वमवधिरितस्य न अन्यार्थोऽर्थापतितलक्षणा-पर्युषितस्येति । अनुमानमेवेदमिति । न तु सूक्ष्मम्　अनुमानान्तर्भूतत्वात्सूक्ष्मस्येति

१ 'कमलिनीमीलनेन' इति स्यात्.

सदृशदर्शनात्स्मरणं स्मृतिः ।

पूर्वोपलब्धस्यार्थस्य सादृश्यदर्शनात्संस्कारोद्बोधे सति यत्स्मरणं सा स्मृतिः ।

यथा—

'अदृश्यन्त पुरस्तेन सेला सज्जनपङ्क्तयः ।
अस्मर्यन्त च निःश्वस्य प्रियानयनवि[illegible]'

विपर्ययो भ्रान्तिः ।

सदृशदर्शनाद्विपर्ययज्ञानं भ्रान्तिः ।

यथा—

'नीलेन्दीवरशङ्कया [illegible]
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या [illegible]
लीयन्ते कबरीषु [illegible] मोह [illegible]
दुर्वारा मधुपाः कियन्ति भवती'

न चैतद्रूपकं प्रथमा वातिशयोक्तिः । तत्र वस्तुतः

क्रियाफलाभावोऽनर्थश्च विषमम् ।

न केवलं क्रियाफलाभावोऽपि तु कर्तुर्यो[illegible]नर्थश्च

यथा—

'उत्कण्ठा परितापो रणरणको [illegible]
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा ।

अत्र मृगलोचनादर्शनेन न केवलं सुखं न प्राप्तम्, [illegible]
ण्ठादिरनर्थः प्राप्तः ॥

योग्यतया योगः समम् ।

उत्कृष्टमुत्कृष्टस्य निकृष्टं निकृष्टस्य [illegible]ति [illegible]

यथा—

'धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
देवो रूपेऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।

१ 'बपो देवो' क. प्र. २ 'पमो' क. प्र.

जातं दैवादुचितमनयोः सङ्गतं यत्र तस्मि-
ञ्शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥'

यथा वा—

'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फातिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काककोकः ॥'

**हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः ।**

कस्यचित्कार्यस्य एकस्मिन्हेतौ साधके सति हेत्वन्तराभिधानम्, कार्ये चैकस्मिन्प्रस्तुते कुतश्चिन्निमित्तात्कार्यान्तराभिधानं च समुच्चयः । युगपद्गुणौ च क्रिये च गुणक्रिये च समुच्चयः । बहुवचनं व्याप्त्यर्थम् ।

हेतौ हेत्वन्तरं यथा—

'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽप्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।

---

मात्र ॥ समुच्चय इति । यद्यप्येकस्यतामपेक्ष्यैव समुच्चयः समुच्चय इति सामान्येन व्युत्पत्तिः कर्तव्या । एवं हि 'समाधिः सुकरं कार्यं कारणान्तरयोगतः' इत्येवं व्याख्यातः समाधिरपि समुच्चय एवान्तर्भवति । अन्यथा 'मानमस्या निराकर्तुम्' इत्युदाहरिष्यमाणे तुल्यकक्ष्यत्वाभावात् समुच्चयः स्यादिति । एष एव च समुच्चयः सद्योगे असद्योगे सदसद्योगे च पर्यवस्यतीति न पृथगुच्यते । तथा हि—'कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् । प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥' अत्र सतां योगः । 'दुर्वाराः' इत्यादौ त्वसतां योगः । यद्यप्यत्र प्रतीतिः तत्रापि शोभनत्वे सर्वेषामप्यशोभनत्वम् अशोभनत्वेनैव विरहिण्या भावितत्वात् । 'शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥' अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः । तथा हि—शशिनः शोभनत्वं प्रकृतिसौन्दर्यात्, अशोभनत्वं धूस

---

१ सतोपेतच्च' ख प्र

---

१ श्रुति' ख प्र

सदृशदर्शनात्स्मरणं स्मृतिः ।

पूर्वोपलब्धस्यार्थस्य तत्सदृशदर्शनात्संस्कारोद्बोधे सति यत्स्मरणं सा स्मृतिः ।

यथा—

'अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तयः ।
अस्मर्यन्त च निःश्वस्य प्रियानयनविभ्रमाः ॥'

विपर्ययो भ्रान्तिः ।

सदृशदर्शनाद्विपर्ययज्ञानं भ्रान्तिः ।

यथा—

'नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।
लीयन्ते कबरीषु बान्धवकुलव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति ॥'

न चैतद्रूपकं भ्रमो वातिशयोक्तिः । तत्र वस्तुतो भ्रमस्याभावात् ॥

क्रियाफलाभावोऽनर्थश्च विषमम् ।

न केवलं क्रियाफलाभावोऽर्थकर्तुर्यावदनर्थश्च भवति यत्र तद्विषमम् ।

यथा—

'उत्कण्ठा परितापो रणरणको जागरस्तनोस्तनुता ।
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा ॥'

अत्र मृगलोचनादर्शनेन न केवलं सुखं न प्राप्तम्, यावद्विपर्यये उत्कण्ठादिरनर्थः प्राप्तः ॥

योग्यतया योगः समम् ।

उत्कृष्टमुत्कृष्टस्य निकृष्टं निकृष्टस्य योग्यमिति योग्यतया योगः समम् ।

यथा—

'धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
देवो रूपेऽप्ययमनुपमो दत्तपत्रः स्मरस्य ।

१ 'म्यो येयो' क प्र. २ 'पमो' क प्र.

> जातं दैवादुचितमनयोः संगतं यत्र तस्मि-
> ञ्शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥'

यथा वा—

> 'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
> जातो दैवादुचितरचनासंविधाता विधाता।
> यन्निम्बानां परिणतफलस्फातिरास्वादनीया
> यच्चैतस्याः कवलनकलाकोविदः काककोकः ॥'

**हेतौ कार्ये चैकस्य हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाणां च समुच्चयः।**

कस्यचित्कार्यस्य एकस्मिन्हेतौ साधके सति हेत्वन्तराभिधानम्, कार्ये चैकस्मिन्प्रस्तुते कुतश्चिन्निमित्तात्कार्यान्तराभिधानं च समुच्चयः। युगपद्गुणौ च क्रिये च गुणक्रिये च समुच्चयः। बहुवचनं व्याप्त्यर्थम्।

हेतौ हेत्वन्तरं यथा—

> 'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽप्युत्सुकं
> गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम्।

---

यश्च ॥ समुच्चय इति । बहुत्वस्यसमुच्चयतामपेक्ष्यैव समुच्चयनं समुच्चय इति सामान्येन व्युत्पत्तिः करणीया । एवं हि 'समाधिः सुकरं कार्यं कारणान्तरयोगतः' इत्येवं लक्षणलक्षित समाधिरपि समुच्चय एवान्तर्भवति । अन्यथा मानमस्या निराकर्तुम्' इत्युदाहरिष्यमाणे तुल्यकक्षत्वाभावाच्च समुच्चय स्यादिति । एष एव च समुच्चय सद्योगे असद्योगे सदसद्योगे च पर्यवस्यतीति न पृथग्लक्ष्यते। तथा हि— कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् । प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥' अत्र सतां योगः । 'दुर्वारा' इत्यादौ त्वसतां योगः । नववयःप्रभृतिभिः सतामपि शोभमत्वे सर्वेषामप्यशोभनत्वम्, अशोभनस्यैव विरहिण्या भावितत्वात्। शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥' अत्र शशिनि धूसरे शल्ये शल्यान्तराण्यपीति शोभनाशोभनयोग । तथा हि—शशिनः शोभनत्वं प्रकृतिसौन्दर्यात्, अशोभनत्वं धूस

---

१ यत्तरेतच्च' क प्र

---

१ धुरि' क प्र

सदृशदर्शनात्स्मरणं स्मृतिः ।

पूर्वोपलब्धस्यार्थस्य तादृशदर्शनात्संस्कारोद्बोधे सति यत्स्मरणं सा स्मृतिः ।

यथा—

'अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तयः ।
अस्मर्यन्त च निःश्वस्य प्रियानयनविभ्रमाः ॥'

विपर्ययो भ्रान्तिः ।

सदृशदर्शनाद्विपर्ययज्ञानं भ्रान्तिः ।

यथा—

'नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे
पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।
लीयन्ते कबरीषु बान्धवकुलव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति ॥'

न चैतद्रूपकं प्रथमा वातिशयोक्तिः । तत्र वस्तुतो भ्रमस्याभावात् ॥

क्रियाफलाभावोऽनर्थश्च विषमम् ।

न केवलं क्रियाफलाभावोऽपि तु कर्तुर्यावदनर्थश्च भवति यत्र तद्विषमम् ।

यथा—

'उत्कण्ठा परितापो रणरणको जागरस्तनोस्तनुता ।
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा ॥'

अत्र मृगलोचनावलोकनेन न केवलं सुखं न प्राप्तम्, यावद्विपरीत उत्कण्ठादिरनर्थः प्राप्तः ॥

योग्यतया योगः समम् ।

उत्कृष्टमुत्कृष्टस्य निकृष्टं निकृष्टस्य योग्यमिति योग्यतया योगः समम् ।

यथा—

'धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
देवो रूपेऽप्ययमनुपमे दत्तपत्रः स्मरस्य ।

१ 'रूपे देवो' क. प्र. २ 'पमो' क. प्र.

जातं दैवादुचितरचनयोः संगतं यत्र तस्मि-
ञ्शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥'

यथा वा—

'चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फातिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काककोलः ॥'

**हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः ।**

कस्यचित्कार्यस्य एकस्मिन्हेतौ साधके सति हेत्वन्तराभिधानम्, कार्ये चैकस्मिन्प्रस्तुते कुतश्चिन्निमित्तात्कार्यान्तराभिधानं च समुच्चयः । युगपद्गुणौ च क्रिये च गुणक्रिये च समुच्चयः । बहुवचनं व्याप्त्यर्थम् ।

हेतौ हेत्वन्तरं यथा—

'दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽप्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।

---

भाव० ॥ समुच्चय इति । अतुल्यकक्ष्यतामनपेक्ष्यैव समुच्चयनं समुच्चय इति सामान्येन व्युत्पत्तिः कर्तव्या । एवं हि 'समाधिः सुकरं कार्यं कारणान्तरयोगतः' इत्येव लक्षणमुक्तम् समाधिरपि समुच्चय एवान्तर्भवति । अन्यथा 'मानमस्या निराकर्तुम्' इत्युदाहरिष्यमाणे तुल्यकक्ष्यत्वाभावात् समुच्चयः स्यादिति । एष एव च समुच्चयः सद्योगे असद्योगे सदसद्योगे च पर्यवस्यतीति न पृथग्लक्ष्यते । तथा हि—'कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् । प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥' अत्र सतां योगः । 'दुर्वाराः' इत्यादौ त्वसतां योगः । नववयःप्रभृतीनां यद्यपि शोभनत्वे सर्वेषामप्यशोभनत्वम्, अशोभनत्वेनैव विरहिण्या भावितत्वात् । 'शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥' अत्र शशिनि धूसरे रम्ये शल्यत्वात् शोभनाशोभनयोगः । तथा हि—शशिनि शोभनत्वं प्रकृतिसौन्दर्यात्, अशोभनत्वं धूस-

---

१ 'पतत्पेतव्य' वा प्र०

---

१ धुनि' च प्र०

वीर्यं मैर्यविरोधि मन्मथमुहल्काश कृतान्तोऽर्धमी
नो सख्यश्चतुरा' कथं नु विरह सोढव्य इत्थं मैया ॥'

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तेषु सत्सु प्रियसमदूरस्थित्याद्युपाधम् ।

यथा वा—

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यत ।
उपकाराय दिष्ट्यैवमुदीर्णं घनगर्जितम् ॥'

कार्ये कार्यान्तरं यथा—

'स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥'

अत्र त्वां सृजतेत्येकस्मिन्कार्ये प्रस्तुते मनोभवादीनां कार्यान्तराणामुपनिबन्ध ।

युगपद्गुणौ यथा—

'विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥'

क्रिये यथा—

'प्रतिगृहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥'

गुणक्रिये यथा—

'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षै' ॥'

पृष्टेऽपृष्टे वान्यापोहपरोक्तिः परिसंख्या ।

पृष्टेऽपृष्टे वा सत्यन्ययव्यवच्छेदपरा योक्तिः सा परिसंख्यानात्परिसंख्या । उभयत्रोपमानस्य वाच्यत्वं प्रतीयमानता चेति चत्वारोऽस्या भेदाः ।

---

रत्नोत्पादात् । एवं चास्य सरस्वतीप्रसाद तारकेणैवापरेण योज्यमिदं सदसयोय । गुम्फितिं यादृशेनात्र यथा सूत्रेण 'व्यधिकरणे वा यस्मिन्' (७।२७) इत्यादिना व्यधिकरणे इति एकस्मिन्वा इति च प्रतिपादितम्, न तथा प्रतिपादनीयम् । कुर्वेति चास्ति लघुवे च कीर्तिम्' इत्यादि कृपाणपाणिश्च भवान्रणक्षितौ ससाधुवादास्य पुरा' पुराणे

---

१ क्ष्मो' क्व प्र २ 'सठ' क्व प्र

पृष्टे यथा—

'कोऽलंकारः सतां शीलं न तु काञ्चननिर्मितम् ।
किमाधेयं प्रयत्नेन धर्मो न तु धनादिकम् ॥'

'का विसमा दिव्वगई किं लद्धं च जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुग्गेज्झं खलो लोओ ॥'

अत्र दैवगतिरेव विषमेत्यादिरन्यापोहः प्रतीयते ।

अपृष्टे यथा—

'धेहि धर्मे धनधियं मा धनेषु कदाचन ।
सेवस्व सद्गुरूपज्ञां शिक्षां मा तु नितम्बिनीम् ॥'

'कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥'

यथा वा—

'राज्ये सारं वसुधा वसुधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥'

'दानं वित्ताद्दतं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥'

'पोढमहिलाण जं सुट्ठु सिक्खिअं तं रएसु होवेइ ।
जं जं असिक्खिअं नववहूण तं तं दिहिं देई ॥'

एषु कौटिल्यं कचनिचये एषेत्यादि, राज्ये सारं च वसुधैवेत्यादि,

---

एतादृशस्थलेऽप्यपि दर्शनादिति ॥ राज्ये सारमिति । अत्र सारालंकारः कैश्चिदुक्तः स चान्यापोहमन्तरेण न चमत्कारकारीति परिसंख्यैव युक्तोऽलंकारः ॥ दानं वित्तादिति पोढमहिलाणेत्यत्रापि केचित्सारालंकारं उक्तवन्तस्तत्रापि अन्यापोहस्य चारुत्वमिती-

---

१ 'का विषमा दैवगतिः किं लब्धं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुःखं यत्खलो लोकः ॥' [इति छाया]

२ 'दुक्खं' क प्रतौ

३ 'प्रौढमहिलानां यत्सु शिक्षितं तद्रतेषु रमयति ।
यद्यदशिक्षितं नववधूनां तत्तद् ददाति ॥ [इति छाया]

स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥'

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तेषु सत्सु प्रियतमदूरस्थित्याद्युपात्तम् ।

यथा वा—

'मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥'

कार्ये कार्यान्तरं यथा—

'स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥'

अत्र त्वां सृजतेत्येकस्मिन्कार्ये प्रस्तुते मनोभवादीनां कार्यान्तराणामुपनिबन्धः ।

युगपद्गुणौ यथा—

'विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥'

क्रिये यथा—

'प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥'

गुणक्रिये यथा—

'कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः[1] ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥'

पृष्टेऽपृष्टे वान्यापोहपरोक्तिः[2] परिसंख्या ।

पृष्टेऽपृष्टे वा वस्त्वन्यव्यवच्छेदपरा योक्तिः सा परिसंख्यानात्परिसंख्या । उभयत्राप्यन्यस्य वाच्यत्वं प्रतीयमानता चेति चत्वारोऽस्या भेदाः ।

---

त्योत्पादनम् । एवं चास्य पूर्वसूत्रस्य तात्पर्येणापरेण योऽयमिह समुच्चयः । गुणक्रिययोरत्र यथा सूत्रेण 'व्यधिकरणे वा यस्मिन्' (७।१७) इत्यादिना व्यधिकरणे इति तद्भिन्नत्व इति च प्रतिपादितम्, न तथा प्रतिपादितमिह । 'पुष्णाति चार्थं तनुते च कीर्तिम्' इत्यादौ कल्पवृक्षमिव भवन्तमर्थितौ समाश्रुताश्च गुणः गुणस्य

---

१ 'हसो' क प्र. २ 'सक्तः' क प्र.

पृष्टे यथा—

'कोऽलङ्कारः सतां शीलं न तु काञ्चननिर्मितम् ।
किमार्जेयं प्रयत्नेन धर्मो न तु धनादिकम् ॥'

'का विसमा दिव्वगई किं लद्धं जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुग्गेज्झं जं खलो लोओ ॥'

अत्र दैवगतिरेव विषमेत्यादिरन्यापोहः प्रतीयते ।

अपृष्टे यथा—

'धेहि धर्मे धनधियं मा धनेषु कदाचन ।
सेवस्व सद्गुरूपज्ञां शिक्षां मा तु नितम्बिनीम् ॥'

'कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥'

यथा वा—

'राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥'

'दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥'

'पोढमहिलाण जं सुट्ठु सिक्खियं तं रएसु होवेइ ।
जं जं असिक्खियं नववहूण तं तं दिहिं देई ॥'

एषु कौटिल्यं कचनिचये एवेत्यादि, राज्ये सारं च वसुधैवेत्यादि,

---

इत्यादेरन्यत्रापि दर्शनादिति ॥ राज्ये सारमिति । अत्र सारालङ्कार इति केचित् । स चान्यापोहमन्तरेण न चमत्कारमावहतीति परिसंख्यैव युक्तोऽलङ्कारः ॥ दानं वित्तादिति पोढमहिलाणेत्यत्रापि केचित्सारालङ्कारं उक्तवन्तस्तत्रापि अन्यापोहकृतं चारुत्वमिति

---

१ 'का विषमा दैवगतिः किं लब्धं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥' [इति छाया]

२. 'गुरूणां' ख प्रतौ

३ 'प्रौढमहिलानां यत्सुष्ठु शिक्षितं तद्रतेषु भवति ।
यद्यदशिक्षितं नववधूनां तत्तद् रतिं ददाति ॥' [इति छाया]

विचारसारं दानमेवेत्यादि, मौकमहिलानां सुश्लिष्टमेवेत्यापपोह्यमानस्य प्रतीयमानत्वमन्यापोहाभावे प्रश्नोत्तराभ्यां न वैचित्र्यं किंचिदिति नोत्तरं पृथग्लक्षितम् ॥ उत्तरास्यमादिमतिपत्तिस्त्वनुमानमेव।

यथा—

'वाणिअय हत्थिदन्ता कुत्तो अम्हाण वग्घकित्तीआ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सोण्हा ॥'

अत्र विशिष्टोत्तरान्यथानुपपत्त्या प्रश्नानुमानम्।

तथा—

'जं मणइ तं सहीओ आम करेहामि तं तहा सव्वम्।
जइ तरइ रुम्भिउं मे धीरं समुहागए तम्मि ॥'

तत्र भ्रुकुट्यादिभिर्मानं कुर्विति सख्याः पूर्ववाक्यमनुमीयते ॥

यथोत्तरं पूर्वस्य हेतुत्वे कारणमाला।

उत्तरमुत्तरं प्रति पूर्वस्य पूर्वस्य कारणत्वे कारणमाला।

यथा—

'निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमायाति च।
निर्विण्णः शुचमेति शोकविवशो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥'

कारणमात्र तु न वैचित्र्यमिति न हेतुरलंकारान्तरम् ॥

---

स्यापि परिसर्पत्येव पुत्रेति ॥ मनुमानमेवेति। न तु यथोक्त—'प्रश्नादप्युत्तरं यत्र- (९१) स्युत्तरवर्णनं ॥ तथं तत्र अपोह्यत्वाभावे काव्यम् ॥ कारणमात्रं

---

१ वणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयः।
यावल्लुलितालकमुखी गृहे परिसर्पति स्नुषा ॥ [इति छाया]

एतस्य उद्देशदृष्टान्तरोहान्तरस्यानन्तर्यं न स्पष्टं तथापि तत्र तदनु-मारेण तु—

'यद्भणिष्यन्ति सख्यः सत्यं करिष्यामि तत्तथा सर्वम्।
यदि म धैर्यं संमुखागते तस्मिन् ॥' इति कल्प्यते.

२ अन्यं इत्यनुमानम् ... इति पाठान्तरेषु

स्वातन्त्र्याङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः संकरः ।

परस्परनिरपेक्षत्वं स्वातन्त्र्यम् । उपकारकत्वमङ्गत्वम् । एकस्य ग्रहेऽन्यस्य त्यागे साधकबाधकप्रमाणाभावादनिर्णयः संशयः । एकस्मिन्पदेऽर्थाच्छब्दार्थालंकारयोः समावेश ऐकपद्यम् । एभिरेषां पूर्वोक्तानामलंकाराणामेकत्र वाक्ये वाक्यार्थे वावस्थानं संकीर्यमाणस्वरूपत्वात्संकरः ।

स्वातन्त्र्येण शब्दालंकारयोः संकरो यथा—

'कुसुमसौरभसौरपरिभ्रमद्भ्रमरसम्भ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥'

अत्र यमकानुप्रासयोः ।

---

स्थिति। अभेदेन इत्येवंरूपमित्यर्थः ॥ नन्वीदृशस्य हेतोर्हेतुत्वाभावादलंकारत्वं मा भवतु । यत्र तु— 'पशुपाङ्गनाभिरुषितमिदं जन्मनि पुरा पुरारे नैवासि भक्तमपि भवन्तं प्रपन्नवान् । ममन्मुच संप्रति तत्परत्वमेऽपि भविता मदेव जन्तव्यं तदिदमपराधद्वयमपि ॥ इत्यादौ अस्मोद्भूतन भावस्तु भवन स्थायमाने द्रुमे इ सोपानपरम्परां गिरिसुता-चन्तानम्भासस्फूर्तिम् । अथारामनरोपितन विभुना तुम्बस्सपर्योत्सुकाशोकेनैवमेवेति मोक्ष-नामनि महामोहे निषीदामहे ॥ इत्यादौ च अपरापद्वये पूर्वापरजन्मनोरनमस्करणे हेतुर्नोभयकार्यीभूतो महामोहे सुखास्मेक्षोपेक्षेतिलक्षणस्य पदार्थीभूतो इत्यतमावधीयते तत्र कथं नालंकारत्वमिति ॥ सत्यमस्ति । एवता परं न हेतो किं तर्हि अलंकारान्तरस्य । तथा हि प्रथमे उदाहरणेऽनुमानस्य रमणीयत्वम्, द्वितीये तु मोक्षस्य महामोहतया रूपणमिति रूपकस्येति हेतुर्नालंकारः । तदिदाकरणेन तद्रूपं काव्यमिश्रमपि निरा-कृतमेवेति । एवं च 'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' । इत्येवंरूपोऽपि हेतुर्न वाच्यः । आयुर्घृतं नदी पुण्यं भयं चौरः सुखं प्रिया । वैरं द्यूतं गुरुर्ज्ञानं श्रेयो ब्राह्मणभोजनम् ॥' इत्येवंरूपो ह्येष न भूषयति काव्यमित्युक्तेरिति वैचित्र्याभावात् । गौणे शुभ्याचारे सादृश्यसंप्रत्ययमूलत्वैचित्र्यम् । यत्र तु न सादृश्यसंप्रत्ययस्तत्र नेति ॥ 'अविरलकमल-विकासः सकलालिमदश्च कोकिलानन्दः । रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः ॥ इत्यत्र तु काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषु न तु हेत्वलंकारकल्पनयेति ॥ तदप्यव्यभिचारित्वैव विषयधारीणां नैरन्तर्येण जननमिहोपचारप्रयोजनं व्याख्यम्,

---

१ 'तोषितम्' च प्र २ —हाल्मीपम । सोऽलंकारो हेतुः स्यादन्येभ्यः पृथ-ग्भूतः ॥' इत्येव न्यट समुपलभ्यते ३ 'पूजनम्' इत्यन्यास्मा ४ 'कर–' इति

अर्थालंकारयोर्यथा—

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥'

अत्रोत्प्रेक्षोपमयोः ।

शब्दार्थालंकारयोर्यथा—

'सो नत्थि एत्थ गामे जो एयं महमहन्तलायण्णम् ।
तरुणाण हिययलूडिं परिसक्कन्तिं निवारेइ ॥'

अत्रानुप्रासरूपकयोः ।

अङ्गत्वेन संकरो यथा—

'कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
कुद्रोलूककदम्बकस्य पुरतः काकोऽपि हंसायते ।
कीर्त्या ते धवलीकृते त्रिभुवने क्ष्मापाल लक्ष्मीः पुन
कृष्णं वीक्ष्य बलोऽयमित्युपहितभ्रान्तिः शनैर्जल्पति ॥'

अत्रातिशयोक्तिमपेक्ष्य भ्रान्तिरुद्भूता । तदाश्रयेण चातिशयोक्तिश्च मत्कारहेतुरित्यनयोरङ्गाङ्गिभावः ।

'त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।
इयता युवयोर्भेदः स जडात्मा पटुर्भवान् ॥'

अत्र श्लेषो व्यतिरेकस्याङ्गम् ।

'कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
याति विश्वसनीयत्वं कस्य ते कलभाषिणि ॥'

अत्र श्लेषो विरोधस्याङ्गम् ।

तदसुन्दरमपि काव्यस्य अप्यमत्वनिबन्धने भवति । तथाप्यलंकारचिन्तायां प्रक्रान्तत्वा-दपदस्यैव हेतोरलंकारस्य विराजितत्व ॥ दुर्वारावितति । दुर्वारोऽस्माद्दनमरः दुर्वारं पायस च यस्य युवा । सत्त्वं धैर्यम्, सत्त्वाय प्राणिन । तत्र प्रभावः चक्रवान मध । जलात्मेति जडत्वमभावोऽपि ॥ कृष्णार्जुनेति । कृष्णा असिता । अर्जुना श्वेता ।

१ न चास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम् ।
तरुणानां हृदयलुण्टाकीं परिसर्पन्तीं निवारयति ॥ [इति संस्कृतम्]

२ गम्यमिति क. ग. ३ भारतरथ्याम्...परिस्फुरत्तु दृश्यकदति श्लेषम्

'आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥'

अत्र श्लेषोऽर्थान्तरन्यासस्याङ्गम् ।

सन्देहेन संकरो यथा—

'निर्गण्डदुरारोहं मा पुत्रय पाटल समारुहसु ।
आरूढनिपतिया के इमिए न कया इह ग्गामे ॥'[1]

अत्र शठतरयोटापाटल्योरन्यतरस्या प्राकरणिकत्वाभावात् ज्ञायते किमियं समासोक्तिरुतान्योक्तिरिति संशयः ।

यथा—

'नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुना विनिरुद्धाशमपि शीर्णमिदं तम ॥'

अत्र मुखेन सहाभेदारोपात्किमतिशयोक्तिः, किमेतदिति मुखं निर्दिश्येन्दुसमारोपणाद्रूपकम्, किं मुखनैमल्यप्रस्तावेऽन्योक्तिः, अथैतयो समुच्चयविवक्षाया दीपकम्, किं प्रदोषवर्णने विशेषणसाम्यात्समासोक्तिः, किं मदनोद्दीपकः कालो वर्तते इति तात्पर्यात्पर्यायोक्तमित्यनेकाकार संशयः ।

यथा—

'शशिवदनासितसरसिजनयनासितकुन्ददशनपङ्क्तिरियम् ।
गगनजलस्थलसंभवहृद्याकारा कृता विधिना ॥'

अत्र तु रूपकमुपमा वेति संशयः ॥ यत्र तु—'मोहमहाचलदलने सा सुनिश्चितवज्रकोटिरिकापि' इत्यादावारोपितकुलिशकोटिरूपाया भक्ते र्मोहस्य महाचलेनोपमितमात्रस्य दलने कर्तृत्वं न हृदयावर्जकं स्यादिति

———

मधुरया बोधिता । कर्णोपलम्भिनी विपुलतया श्रोत्रसमीपर्वभिता । विरोधे तु कृष्णो हरि अर्जुन पार्थ तत्र सानुरागा सा कर्णे राधेयं कथमालम्बत इति । अतएव न विरोधमात्रया अविश्वासस्य निष्टृम् ॥ कोशदण्डसमग्राणामिति । श्लेषो माण्ड-

———

१ निर्भण्डदुरारोहं मा पुत्रक पाटलं समारोह ।
आरूढनिपतिता कैरनेन न कृता इह ग्रामे ॥ [इति संस्कृतम्]

भावमात्र यथासंख्यं दोषाभिधानेनैव गतार्थम् । विनोक्तिस्तु तथाविधव-
चस्त्वविरहात् ॥ भाविकं तु भूतभाविपदार्थप्रत्यक्षीकारात्मकमभिनेयप्रबन्ध
एव भवति । यद्यपि मुक्तकादावपि दृश्यते, तथापि न तत्त्ववत्ते । उदात्तं
तु ऋद्धिमद्वस्तुलक्षणमतिशयोक्तेर्नातिरिक्तं न भिद्यते । महापुरुषवर्णनारूपं च
यदि रसपरं तदा ध्वनेर्विषयः ॥

---

यम् ॥ यथासंख्यमिति । तथा चाह—'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः' इति । यथा—'एकस्त्रिधा वससि चेतसि चित्रमत्र देव द्विषां च विदुषां च मृगीदृशां च । तापं च संमदरसं च रतिं च पुष्णन् शौर्योष्मणा च विनयेन च लीलया च ॥' इति । अत्र न यथासंख्यकृतं किमपि वैचित्र्यं किंतु एकस्त्रिधा वससीति वाक्ये विरोधप्रतीतिकृतमेवेति ॥ विनोक्तिस्त्विति । तथा चाह—'विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः' इति । सन् शोभनः इतरोऽशोभनः । यथा—'मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः । अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥' 'अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः । उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥' इति उदाहरणद्वयेऽपि यदन्यु सहृदया—यदि किमपि विनोक्तिकृतं वैचित्र्यमवभासते सहोक्तौ तु सहार्थ-वचनस्याप्यसमन्वयप्रतीतेर्युक्तमेव वैचित्र्यमिति । किंच—वाक्यमात्रयोगेनालंकारत्वकल्पने विषयपुरुषव्यक्त्यलंकारत्वप्रसङ्गः प्राप्नोतीति ॥ भाविकमिति । भावः कवेरभिप्राय स यत्रास्ति तद्भाविकम् । भूतभाविपदार्थप्रत्यक्षीकारात्मकमिति । प्रबन्धसामा-ज्ञागमाभ्यन्तरा अपि भावा समहितात्मा प्रसादनयाय मधुर स्फुरन्त इव रत्नमाला बध्नन्त इत्यर्थः । भूतभाविवस्तुनः परोक्षोपलक्षणपरत्वे परोक्षाणां पुरःस्फुरत्प्रतिहेतु-वर्णनमिति तु व्याख्याने स्वभावोक्तिर्न भिद्यते । अभिनेयप्रबन्ध एवेति । प्रबन्धक-विवक्षाभ्यन्तरितिवस्तुत्रैव तत्र वर्ण्यमानत्वादिति भावः ॥ ननु—'आसीदञ्जनमत्रेति पश्यामि तव लोचने । भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥' अत्रापेऽर्थे भूतस्य द्वितीये भाविनो दर्शनमिति मुक्तकविषयमपि भाविकं दृश्यते तत् कुतो न तत्त्वत इत्या-शङ्क्याह—यद्यपीति ॥ ऋद्धिमद्वस्तुलक्षणमिति । यदाह—'उदात्तं वस्तुनः संपद्' इति । यथा—'मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः प्रातः प्राङ्गण-सीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः । दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥' न ह्यतिशयोक्तेर्भेदोऽपि मुक्तानां प्राङ्गणमता-करणप्रकारस्य पुष्टीकरणं संभवति । उक्तं च—'असंबन्धे संबन्धाभिधानमतिशयोक्तिमव-गमयति' । तदाह—अतिशयोक्तेरिति । अतिशयोक्तेरलंकारात्म भिद्यत इत्यर्थः ॥

---

१ 'मत्र' क प्र २ 'चेतःप्रसाद' स्यात् ३ 'साधन' क प्र ४ 'धर्मे' स्यात् 'चेतीति' मूलानुसारी

विषयः। प्रत्यनीकं च प्रतीयमानोत्प्रेक्षाप्रकार एवेति नालंकारान्तरतया वाच्यम्॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ
अर्थालंकारवर्णनः षष्ठोऽध्यायः।

---

सप्तमोऽध्यायः।

इह च काव्यं नायकादिप्रतिबद्धं भवतीति नायकादिलक्षणमुच्यते। तत्र तावदुत्तममध्यमाधमभेदेन पुंसां स्त्रीणां च तिस्रः प्रकृतयो भवन्ति। तत्र केवलगुणमय्युत्तमा। स्वल्पदोषा बहुगुणा मध्यमा। दोषवत्यधमा। तत्राधमप्रकृतयो नायकयोरनुचरा विटचेटीविदूषकादयो भवन्ति। उत्तममध्यमप्रकृतियुक्तस्तु—

समग्रगुणः कथाव्यापी नायकः।

समग्रगुणो नेतृत्वादिगुणयोगी वक्ष्यमाणशोभान्वितश्च। तत्र नेतृत्वादिगुणबाहुल्यात् मध्यमप्रकृतावपि समग्रगुणता।

---

व्यनुज्ञायते। अत्रापि वायुविनाशलक्षणविभावद्वारेण दर्पात्मनो भावस्योपनिबन्धात्पूर्ववदत्र न निरेवेति। तदाह—भावज्ञापनेनेति। प्रत्यनीकमिति। अनीकप्रतिनिधित्वात्प्रत्यनीकम्। यथानीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः। तथा चाह—'प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया। या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते॥' यथा—'त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता। पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः॥' तां त्वदनुरक्तां मनोभवः पीडयतीति वाच्योऽर्थः। तत्र च मनोभवस्य त्वद्रूपेण विनिर्जिततयाऽसामर्थ्यं स्मरणस्योत्प्रेक्षित इत्युत्प्रेक्षा। सा च प्रतीयमाना इवादिप्रयोगाभावात्॥ जातिगतिरीति-वृत्तिच्छायामुद्रोक्तियुक्तिभणितिगुम्फनाशय्यापीति वाच्ये वाच्यार्थयोर्गेयाभिनेयानि शब्दालंकारा उभयालंकारा उपमासमानार्थी पाकमानलक्षणपाकालंकारा ये भोजराजेन प्रतिपादितास्ते केनचिद्विशेषेणान्तर्भवन्ति। केचित्तु चमत्कारं नावहन्ति केचित्तु शब्दशरीरलक्षणा एवेति न सूत्रिता॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेके षष्ठोऽध्यायः॥

---

१ 'विषमम्' क म. २ 'भव' स्यात्.

अथ तथाविधमवर्णनीयवस्तुपरम्, तदा गुणीभूतव्यङ्ग्यस्येति नालंकारः ॥ रसवत्प्रेयस्स्वूर्जस्विभावसमाहितानि गुणीभूतव्यङ्ग्यप्रकारा एव ॥ आशीस्तु प्रियोक्तिमात्रं भावज्ञापनेन गुणीभूतव्यङ्ग्यस्य

---

अथ यत्र महिमवस्तु संभवदेव वर्णयिष्यते तथोदात्तं भविष्यतीत्याशयेनाह—समासोक्तमिति । किं च । यदि महिमवस्तुवर्णनमलंकारस्तदा महिमरहितवस्तुवर्णनमप्यलंकारः प्रसिद्धमस्त्वतीति । महापुरुषवर्णनारूपमिति । यदाह—'महतां चोपलक्षणम्' इति । यथा—'तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी । निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥' रामो हि पितृवचनमनुतिष्ठन्पराक्रमादिधर्मयोगादुत्साहस्थायिकेन वीररसवानेवेति रसध्वनिरेवायम् ॥ ननु उपलक्षणमात्रमात्रोऽर्थोऽयमुपलक्षणीयेऽपि । तत्रोपलक्षणीभूतस्य रामचरितस्य वाक्यार्थीभावाभावादङ्गत्वमेव । तदङ्गस्योत्कर्षप्रतिपत्तिर्हि वाक्यार्थः सैव प्रधानं तत् कथं ध्वनिविषयत्वेत्याशङ्क्याह—अथेति । गुणीभूतव्यङ्ग्यप्रकारा एवेति । सप्तमध्यमप्रभेदविषयत्वेन ये प्रतिपादिताः । आशीस्त्विति । आशासनमप्राप्तप्रार्थितस्यार्थस्याशीः प्रयोक्तृधर्मः । अथ वा आशास्यमानो योऽसावर्थोऽप्रत्यक्षप्राप्तनर्थोपरमात्मकः स एव प्राप्तव्यत्वादनुज्ञात आशीर्विषयत्वादाशीरिति । तत्र पक्षद्वयेऽपि स्नेहाभावे स्वैकस्यपरमात्मानुसरणमार्थत्वेनाशीर्यदि प्रयुज्यते तदा 'गतोऽस्तमर्कः' इत्यादिवदर्थवर्णनमात्रत्वादूरयैवालंकारत्वेत्याह—प्रियोक्तिमात्रमिति । यद् तथानां किमप्येतदिति चमत्कारमाधास्यति ॥ अथ स्नेहातिशयेनोच्यते तदा ध्वनेर्विषयः । तथा हि कश्चित्कस्मैचिद्भक्तिनिर्भरहृदयस्तथा व्याशिषं प्रयुङ्क्ते तत्र च तस्य चेतोवृत्तिविशेषः स्नेहाख्या रतिभावविशेषस्य आशीर्द्वारेण प्रतीयत इति भावध्वनिरेवायम् । यथा—'भक्तिप्रह्वीविदधदि प्रणयाभ्यसूयामाश्लिष्य गाढमनुनानतमादरेण । विन्ध्यं महागिरि वनं समयेऽभिवर्धमानानन्दवैनयिककारिभिरस्तु त्वाम् ॥' कवेर्भिन्नैवीसंबन्धे पिशुनयनाद्यप्रवेशनविघ्नमर्य(?) कुर्वे सति कल्पविनायकस्य तस्येत्युत्कर्षसंपादनायेयमुक्तिः । अत्र च चौरस्यप्याप्रासिस्य मैत्रीयैव यस्य प्रवर्धमानत्वोपनिबद्धम् । पातीतीति आक्षिप्येति च प्रार्थना पेयान्वन्ती । उद्यतिति प्राप्तव्यत्वात्ता पञ्चमी । तेनात्राशास्यमानस्य मैत्रीसंबन्धस्योपनिबन्धो न त्वप्राप्तप्रार्थितस्येत्यस्मिद्ध आक्षेपः । तथा—'मदाम्यमातङ्गविभिन्नशालं हतप्रवीरानुहतप्रवीरा । त्वत्तेजसा स्वर्गसमानभोगं द्विषां पुरी यस्तु राजलोकः ॥' अत्र शत्रुनगरीविनाशोपनिबन्धद्वारेण [illegible] तद्विधत्वादाशास्यमानार्थोपनिबन्ध एव ॥ अभिन्नं भूपादिरसेकमाश्रित्यकथा प्रयोक्तृधर्मत्वेनावस्थितया आशिषोऽत्रोपदर्शनम् । तथा शत्रुविधा शत्रुनगरी राजलोके इत्यादिति भावमभार्थः संपन्नत्वाद्रसार्थस्य किंतु तथाविधायां शत्रुनगर्यां वर्णनस्य प्रशस्यतया-

---

१ 'भिन्नवीह' स्यात्. १–१ भवेदेते मध्यरस्य पञ्चमीनामाभिधेयं स्यात्.

नीचजुगुप्सा यथा—

'दृष्टाष्टताडकोत्पातदर्शनोऽप्यप्रकम्पितः ।
मृगुकस्त्रक्षमाधाय स्त्रैणेन विचिकित्सति ॥'

उत्तमस्पर्धा यथा—

'एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापतेः
मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम् ॥'

धीरे गतिदृष्टी सस्मितं वचो विलासः ।

यथा—

'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥'

मृदुश्शृङ्गारचेष्टा ललितम् ।

यथा—

'कस्मिंश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयांचकार ॥'

क्षोभेऽप्यनुल्बणं माधुर्यम् ।

महत्यपि युद्धनियुद्धव्यायामादौ क्षोभहेतौ अनुल्बणत्वं मधुरा चेष्टा माधुर्यम् । यथा—

'कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्छृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥'

नेतृगुणाश्चेमे—

'नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥'

कथाप्रबन्धस्य व्यापी । नयति प्राप्नोति इतिवृत्तं फलं चेति नायकः ।

तस्य सात्त्विकान्गुणानाह—

शोभाविलासमधुरललितमाधुर्यस्थैर्यगाम्भीर्यौदार्यतेजांस्यष्टौ सत्त्वभवास्तद्गुणाः ।

सत्त्वं देहविकारस्तत्समाख्याताः ।

क्रमेण लक्षयति—

दाक्ष्यशौर्योत्साहनीचजुगुप्सोत्तमस्पर्धागमिका शोभा ।

यतः शरीरविकाराद्दाक्ष्यादि गम्यते सा शोभेत्यर्थः ।

दाक्ष्यं यथा—

'स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डारं कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥'

शौर्यं यथा—

'खरेण खण्डिताशेषगात्रेण रणमूर्धनि ।
रामव्याजेन लोकेषु शौर्यमुत्सारितं नृणाम् ॥'

उत्साहो यथा—

'मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापती
नाश्वास्याशुसुतान्गुरुः प्रियसखान्प्रेष्यान्समादिश्य च ।
आरम्भं कुरुते महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥'

नीचजुगुप्सा यथा—

'उच्चाल्लताङ्कोत्पातदर्शनोऽप्यप्रकम्पित ।
प्रयुक्तस्तम्भमाधाय खेदेन विचिकित्सति ॥'

उत्तमस्पर्धा यथा—

'एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम् ॥'

धीरे गतिदृष्टी सस्मितं वचो विलासः ।

यथा—

'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥'

मृदुश्रृङ्गारचेष्टा ललितम् ।

यथा—

'कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयांचकार ॥'

क्षोभेऽप्यनुल्बणं माधुर्यम् ।

महत्यपि युद्धनियुद्धव्यायामादौ क्षोभहेतौ अनुल्बणस्य मधुरा चेष्टा माधुर्यम् । यथा—

कपोले जानक्या करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ्शृण्वन्रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥'

---

१ 'सक्तापि' स्यात्.

नेतृगुणाश्चेमे—

'नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥'

कथाप्रबन्धस्तद्व्यापी । नयति व्याप्नोति इतिवृत्तं फलं चेति नायकः ।

तस्य सात्त्विकान्गुणानाह—

शोभाविलासमधुरललितमाधुर्यस्थैर्यगाम्भीर्यौदार्यतेजांस्यष्टौ सत्त्वजास्तद्गुणाः ।

सत्त्वं देहविकारस्तत्प्रभवाः ।

क्रमेण लक्षयति—

दाक्ष्यशौर्योत्साहनीचजुगुप्सोत्तमस्पर्धागमिका शोभा ।

यतः शरीरविकाराद्दाक्ष्यादि गम्यते सा शोभेत्यर्थः ।

दाक्ष्यं यथा—

'स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डकस्
तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥'

शौर्यं यथा—

'त्वरेण त्रिविक्रमाभ्येषगात्रेण रणमूर्धनि ।
रामव्याजेन लोकेषु शौर्यमुत्सारितं नृणाम् ॥'

उत्साहो यथा—

'मूर्ध्ना जाम्बवतोऽभिवाद्य चरणावापृच्छ्य सेनापती
नाश्वास्याश्रुमुखान्मुहुः प्रियसखान्प्रेष्यान्समादिश्य च ।
आरभ्य नगुहे महेन्द्रशिखराद्व्योमोर्मिवेल्लङ्घने
रंहस्वी रघुनाथपादरजसामुद्वेग सर मारुतिः ॥'

नायकभेदानाह—

**धीरोदात्तधीरललितधीरशान्तधीरोद्धतभेदात्स चतुर्धा ।**

स इति नायकः । धीरशब्दः प्रत्येकमभिसंबध्यते । तेन धीरोदात्त-, धीरललित-, धीरशान्त, धीरोद्धत इति ।

**दक्षिणधृष्टानुकूलशठभेदादेकैकश्चतुर्धा ।**

एते शृङ्गाररसाश्रयिणो भेदाः । इति षोडश भेदा नायकस्य ।

धीरोदात्तादीँल्लक्षयति—

**गूढगर्वः स्थिरो धीरः क्षमावान् अविकत्थनः महासत्त्वो दृढव्रतो धीरोदात्तः ।**

गूढगर्वो विनयच्छन्नावलेपः । अविकत्थनोऽनात्मश्लाघापरः । महासत्त्वः क्रोधाद्यनभिभूतान्तःसत्त्वः । दृढव्रतोऽङ्गीकृतनिर्वाहकः । यथा—रामादिः ।

**कलासक्तः सुखी शृङ्गारी मृदुः निश्चिन्तो धीरललितः ।**

कलासु गीताद्यासु आसक्तः । सुखी भोगप्रवणः । शृङ्गारप्रधानः सुकुमाराकारः । सचिवादिसंविहितयोगक्षेमत्वाच्चिन्तारहितः । यथा—वत्सराजः ।

**विनयोपशमवान् धीरशान्तः ।**

यथा मालतीमाधव-मृच्छकटिकादौ—माधव-चारुदत्तादिः ।

**शूरो मत्सरी मायी विकत्थनश्छद्मवान् रौद्रोऽवलिप्तो धीरोद्धतः ।**

मत्सरी असहनः । मन्त्रादिबलेनाविद्यमानवस्तुप्रकाशको मायी । छद्म वञ्चनामात्रम् । रौद्रश्चण्डः । अवलिप्तः शौर्यादिमदवान् । यथा—जामदग्न्य रावणादिः ।

'देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः ।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥

---

देवा धीरोद्धता इति । अत्र हि धीरोदात्त भवति चरितं रामस्यापि विष्णो-रवतारविशेषस्य प्रभृतीनां रामादीनां च न धीरललितत्वानुचितत्वमिति धीरललितत्वं राज्ञ एव वर्णनीयं नान्यस्य । सेनापत्यमात्ययोर्धीरोदात्तत्वमेव । देवानां धीरोद्धतत्वमेव । हि

विघ्नेऽप्यचलं स्थैर्यम् ।

सत्स्वपि विघ्न उपक्रमादप्रभ्रंशः स्थैर्यम् । यथा—

'यथा यथा समारम्भो वैरासिद्धिं न गच्छति ।
तथा तथाधिकोत्साहो धीराणां हृदि वर्धते ॥'

हर्षादिविकारानुपलम्भकृद्गाम्भीर्यम् ।

यस्य प्रभावाद्धर्षविषादकोपादीनां विकारा दृष्टिविकासरागादयो नोपलभ्यन्ते तन्निश्चितवेहस्वभाव गाम्भीर्यम् । यथा—

'आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥'

स्वपरेषु दानाभ्युपपत्तिसंमापणान्यौदार्यम् ।

अभ्युपपत्तिः परित्राणार्थमिमोऽङ्गीकरणम् । परजनविषये दानादि चेष्टासकमेवौदार्यम् । स्वग्रहणं तु दृष्टान्तार्थम् । स्वेष्विव परेष्वपीत्यर्थः ।

दानं यथा—

'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवैव तावत्किं भक्षणात्त्वं विरतो गरुत्मन् ॥'

अभ्युपपत्तिर्यथा—

'एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत केनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥'

समाषण यथा—

'उत्पत्तिर्जमदग्नितः स भगवान्देवः पिनाकी गुरुः
शौर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं यतः कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधि
सत्यब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥'

पराधिक्षेपाद्यसहनं तेजः ।

पराधिक्षेपं न तु गुरोरभिजातेर्वाधिक्षेपापमानादेरसहनं तेजः । यथा—

'ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी ।
अङ्गुलीदर्शनाद्येन न जीवन्ति मनस्विनः ॥'

नायकभेदानाह—

**धीरोदात्तललितशान्तोद्धतभेदास्स चतुर्धा ।**

स इति नायकः । धीरशब्दः प्रत्येकमभिसंबध्यते । तेन धीरोदात्तः, धीरललितः, धीरशान्तः, धीरोद्धत इति ।

**दक्षिणधृष्टानुकूलशठभेदादेकैकश्चतुर्धा ।**

एते शृङ्गाररसाश्रयिणो भेदाः । इति षोडश भेदा नायकस्य ।

धीरोदात्तादींल्लक्षयति—

**गूढगर्वः स्थिरो धीरः क्षमावान् अविकत्थनः महासत्त्वो दृढव्रतो धीरोदात्तः ।**

गूढगर्वो विनयच्छन्नावलेपः । अविकत्थनोऽनात्मश्लाघापरः । महासत्त्वः क्रोधाद्यनभिभूतान्तःसत्त्वः । दृढव्रतोऽङ्गीकृतनिर्वाहकः । यथा—रामादिः ।

**कलासक्तः सुखी शृङ्गारी मृदुर् निश्चिन्तो धीरललितः ।**

कलासु गीतावाद्यादिषु आसक्तः । सुखी भोगप्रवणः । शृङ्गारप्रधानः सुकुमाराकारः । सचिवादिसंविहितयोगक्षेमत्वाच्चिन्तारहितः । यथा—वत्सराजः ।

**विनयोपशमवान् धीरशान्तः ।**

यथा मालतीमाधव-मृच्छकटिकयोः—माधव-चारुदत्तादिः ।

**शूरो मत्सरी मायी विकत्थनश् छद्मवान् रौद्रोऽवलिप्तो धीरोद्धतः ।**

मत्सरी असहनः । मन्त्रादिबलेनाविद्यमानवस्तुप्रकाशको मायी । छद्म वञ्चनमात्रम् । रौद्रश्चण्डः । अवलिप्तः शौर्यादिमदवान् । यथा—जामदग्न्य रावणादिः ।

'देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः ।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥'

---

देवा धीरोद्धता इति । अत्र हि धीरोदात्तं जगति ख्यातं रामनामैव मित्यो' इत्यादिर्देवनामकप्रयतीनां रामादीनां च न धीरललितत्वमुचितत्वमिति धीरललितत्वं पक्ष एव वर्णनीयं नाम्नस्य । सेनापत्यमात्ययोर्धीरोदात्तत्वमेव । देवानां धीरोद्धतत्वमेव । द्वि

धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ।
इति चत्वार एवेह नायकाः समुदाहृताः ॥'

इत्यन्तरश्लोकौ ।

अथ नायकस्य शृङ्गारित्वेऽवस्थाभेदानाह—

**ज्येष्ठायामपि सहृदयो दक्षिणः ।**

कनिष्ठायां रक्तो ज्येष्ठायामपि समानहृदयो दाक्षिण्यशीलत्वाद्दक्षिणः ।

यथा—

'प्रसीदत्यालोके किमपि किमपि प्रेमगुरवो
रतक्रीडाः कोऽपि प्रतिदिनमपूर्वोऽस्य विनयः ।
सविस्रम्भः कश्चित्कथयति च किंचित्परिजनो
न चाहं प्रत्येमि प्रियसखि किमप्यस्य विकृतम् ॥'

**व्यक्तापराधो धृष्टः ।**

यथा—

'लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
१ वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽधरे ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥'

---

आदीनां धीरप्रशान्तत्वमेवेत्येवं परं व्याख्येयम् । धीरोद्धतादिशब्दाश्च यथोक्तगुणसमारोपितावस्थाभिधायिनो वत्सराजमहोद्यादिवन्न व्यवस्था कश्चिदवस्थितरूपो धीरोद्धतादिरस्ति । तथा हि महाकविप्रबन्धेषु विरुद्धानेकरूपाभिधानमसमञ्जसमेव स्यात् । जातेरनपायित्वात् । तथा च भवभूतिना एक एव जामदग्न्यः 'कैलासोद्धारसार–' इत्यादिभी रामादीन् प्रति प्रथमं धीरोद्धतत्वेन पुनः 'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये' इत्यादिना रामं प्रति धीरोदात्तत्वेन 'पुण्या ब्राह्मणजातिः–' इत्यादिभिश्च धीरप्रशान्तत्वेनोपवर्णितः । न चावस्थान्तराभिधानमनुचितम् । अङ्गभूतनायकानां नायकान्तरापेक्षया महासत्त्वादेरव्यवस्थितत्वात् । अङ्गिनस्तु रामादेरेकप्रबन्धोपात्तान् प्रत्येकस्यारम्भोपात्तावस्थातोऽवस्थान्तरोपादानमन्याय्यम् । यथोदात्तत्वाभिमतस्य रामस्य छद्मना वालिवधादमहासत्त्वतया स्वावस्थापरित्याग इति । वत्सराजादीनां च दक्षिणावस्थानां पूर्वा प्रस्तावना इव इति निरस्तापेक्षत्वेनाविर्भावादुपात्तावस्थातोऽवस्थान्तराभिधानमङ्गाङ्गिनोरप्यविरुद्धमिति । अन्तरश्लो

---

१ 'भूतये' च प्र. २ 'न्तरापेक्षया' स्यात्.

एकभार्योऽनुकूलः ।

यथा—

'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥'

गूढापराधः शठः ।

यथा—'एकत्रासनसंगते प्रियतमे—' इति ।

नायकविशेषं प्रतिनायकमाह—

व्यसनी पापकृल्लुब्धः स्तब्धो धीरोद्धतः प्रतिनायकः ।

यथा—रामयुधिष्ठिरयो रावणदुर्योधनौ ।

नायिकालक्षणमाह—

तद्गुणा स्वपरसामान्या नायिका त्रेधा ।

तद्गुणा यथोक्तसंभविनायकगुणयोगिनी नायिका । सा च स्वकीया, परकीया, सामान्या, चेति त्रेधा ।

स्वीलक्षणमाह—

स्वयमूढा शीलादिमती स्वा ।

आदिग्रहणादार्जवलज्जागृहाचारनैपुण्यादिपरिग्रहः ।

शीलं यथा—

'कुलबालिआए पेच्छह जोव्वणलायण्णविब्भमविलासा ।
पवसन्ति व पवसिए एन्ति व पिए घरं इन्ति ॥'[1]

वयःकौशलाभ्यां मुग्धा मध्या प्रौढेति सा त्रेधा ।

वयः शरीरावस्थाविशेषः, कौशलं कामोपचारनैपुण्यम्, ताभ्यां मुग्धा । एवं मध्या प्रौढा चेति ।

---

१ 'कुलबालिकाया प्रेक्षध्वं यौवनलावण्यविभ्रमविलासाः ।
प्रवसन्तीव प्रवसिते आगच्छन्तीव प्रिये गृहमागते ॥' [इति च्छाया]

तत्र वयसा मुग्धा यथा—

'दोर्मूलावधिसूत्रितस्तनमुरः स्निग्धकटाक्षे दृशौ
किंचित्ताण्डवपण्डिते स्मितसुधासिक्तोक्तिषु भ्रूलते।
चेतः कन्दलितं स्मरव्यतिकरैर्लावण्यमङ्गैर्धृतं
तन्वङ्ग्यास्तरुणिम्नि सर्पति शनैरन्यैव काचिद्गतिः॥'

कौशलेन यथा—

'उचितो रसादमय मेघ्पुमस्युदयोभिमर्दुविधुरं धपमा।
वपुरावरातिशयशसि पुरः मतिपसिमूढमपि गाढमभूत॥'

वयसा मध्या यथा—

'तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च।
दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलतां
अहो सारङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः॥'

कौशलेन यथा—

'स्वेदाम्भःकणिकाचितेऽपि वदने जातेऽपि रोमोद्गमे
विस्रम्भेऽपि गुरौ पयोधरभरे कम्पे च वृद्धिं गते।
दुर्वारस्मरनिर्भरेऽपि हृदये नैवाभियुक्तः प्रियः
स्वाङ्गस्था हठकेशकर्षणघनश्लेषामृते लुब्धया॥'

वयसा प्रौढा यथा—

'नितम्बो मन्दत्वं जनयति गुरुत्वाद्गतिगते-
र्महत्त्वादुद्भूतः स्तनकलशभारः श्रमयति।
विकासिन्या कान्त्या प्रकटयति रूपं मुखशशी
ममाङ्गानीमानि प्रथममभिसारे हि रिपवः॥'

---

काचिदिति। अन्तरे मध्ये वयःस्वभावाभिप्रायवती मोघमन्तरम्भोधा। वयसा मुग्धेति। वयःस्वरूपेणैवमेवं। एवं कौशलेनापि। वयसा मध्येति। निपिरमंसूत्रैवं। वयसा

कौशलेन यथा—

'उन्मृतैर्निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामे ।
श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥'

**धीराधीराधीराधीराभेदादन्त्ये त्रेधा ।**

अन्त्ये मध्याप्रौढे । त्रेधा धीरामध्या, धीराधीरामध्या, अधीरामध्या । एवं प्रौढापि त्रेधा ।

**षोढापि ज्येष्ठाकनिष्ठाभेदाद्द्वादशधा । मध्याप्रौढयोः प्रत्येकं त्रिभेदत्वम् ।**

षड्विधापि ज्येष्ठाकनिष्ठाभेदाद्द्वादशधा स्वकी भवति । तत्र प्रथमम्ूढा ज्येष्ठा । पश्चादूढा कनिष्ठा ।

अथासां कोपचेष्टामाह—

**सोत्प्रासवक्रोक्त्या सबाष्पया वाक्पारुष्येण कोपिन्यो मध्या धीराद्याः ।**

मध्याधीराद्यास्तिस्रोऽपि यथासंख्यं सोत्प्रासवक्रोक्त्यादिभिः कोपं कुर्वन्ति ।

तत्र सोत्प्रासवक्रोक्त्या धीरमध्या यथा—

'न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः ॥'

सबाष्पया सोत्प्रासवक्रोक्त्या धीराधीरा यथा—'बाले नाथ—' इति ।

वाक्पारुष्येणाधीरा यथा—

'धिक्त्वां किं समुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा क ते
वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त निर्बाधसे ।
खिन्नाहं तव रात्रिजागरतया तामेव या च प्रिया
निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥'

उपचारावहित्थाभ्यामानुकूल्यौदासीन्याभ्यां सतर्जनघाताभ्यां मौढाधीराया:।

मौढाधीरायास्तिस्रोऽपि यथासंख्यमुपचारावहित्थादिद्विकक्रमेण क्रोधिन्यो भवन्ति।

तत्र धीरा प्रौढा सोपचारा यथा—

'एकत्रासनसंगतिः परिहृता प्रत्युद्गमाद्दूरतः
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः॥'

सैव सावहित्था यथा—

'वरं भ्रूभङ्गास्ते प्रकटितगुरुक्रोधविभवा
वरं सोपालम्भाः प्रणयमधुरा गद्गदगिरः।
वरं मानो येन प्रसभमनितोऽन्यादरविधि-
र्न गूढान्तःकोपा कठिनहृदये सद्गुणिरियम्॥'

मौढा धीराधीरानुकूला यथा—

'यत्प्राधिर्न निवारितो निवसनग्रन्थिः समुद्ग्रन्थयन्
भ्रूभेदो न कृतो मनागपि मुहुर्यत्स्पृश्यमानेऽधरे।
यन्निःशङ्कमिहार्पितं वपुरहो पत्युः समालिङ्गने
मानिन्या कथितोऽनुकूलविधिना तेनैव मन्युर्महान्॥'

सैवोदासीना यथा—

'आयस्ता कलहं पुरेव कुरुते न स्रंसते वाससो
भग्नभ्रूरतिखण्ड्यमानमधरं धत्ते न केशग्रहे।
अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने
तन्व्या शिक्षित एष संप्रति कुतः कोपप्रकारोऽपरः॥'

---

१ 'चतुरया' स्यात्.

प्रौढाधीरा सतर्जनेन यथा—

'तथाभूदस्माकं प्रथममविभिन्ना तनुरियं
ततोऽनु त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं त्वं नाथो वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥'

सैव सामाता यथा—'कोपात्कोमललोलबाहुलतिका—' इति ।

परस्त्रीलक्षणमाह—

परोढा परस्त्री कन्या च ।

परेणोढा परस्य स्त्री परस्त्री । सा च नाङ्गिनि रसे उपकारिणीति नास्या प्रपञ्चः कृतः । ऊढेत्युपलक्षणम् । अनूढापि परस्त्रीत्युच्यते ।

परोढा यथा—'दृष्टिं हे प्रतिवेशिनि—' इति ।

कन्या तु पित्राद्यायत्तत्वादनूढापि परस्त्री । यथा—

'दृष्टिः शैशवमण्डना प्रतिकलं प्रागल्भ्यमभ्यस्यते
पूर्वाकारमुरस्तथापि कुचयो शोभां नवामीहते ।
नो धत्ते गुरुतां तथाप्युपचिताभोगा नितम्बस्थली
तन्व्याः स्वीकृतमन्मथं विजयते नैकरूपं वपुः ॥'

सामान्यां लक्षयति—

गणिका सामान्या ।

कलाप्रागल्भ्यधौर्त्याभ्यां गणयति कलयति गणिका सामान्या सगुणस्य निर्गुणस्य च साधारणी केवलधनलोभात्मनेन कृत्रिमप्रेमत्वात् । यथा—

'गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाधरमुक्तसीत्कृतलसद्भ्रूभ्रान्तनृत्यत्करम् ।
चाटुप्रायवचोविचित्रभणितं घातै रुतैश्चाङ्कितं
वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् ॥'

स्वपरस्त्रीणामवस्था आह—

स्वाधीनपतिका प्रोषितभर्तृका खण्डिता कलहान्तरिता वास

१ 'कुचयोः' स्यात्.

कलज्ञा विरहोत्कण्ठिता विप्रलब्धा अभिसारिका चेति स्वकीयानामष्टावस्थाः।

रतिगुणाकृष्टत्वेन पार्श्वस्थितत्वात्स्वाधीन आयत्तः पतिर्यस्याः सा तथा। यथा—

'सीलोए च्चिय सूरे घरिणी घरसामियस्स घेत्तूण।
णेच्छन्तस्स वि चलणे धुयइ हसन्ती हसन्तस्स॥' इति।

कार्यात् प्रोषितो देशान्तरं गतो भर्ता यस्याः सा तथा। यथा—

'श्वासा बाष्पजलं गिरः सकरुणा मार्गे च नेत्रार्पणं
केनेदं न कृतं प्रियस्य विरहे कस्यासवो निर्गताः।
तस्यैवं यदि नास्ति तेन कथिता पान्थ क्व प्रोषितः
प्राणाः सम्प्रति मे कुरङ्गमथिनास्तिष्ठन्तु वा यान्तु वा॥'

वनितान्तरव्यासङ्गादनागते प्रिये तु खसखा खण्डिता। यथा—

'नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि मुहुरोष्ठं पाणिना दन्तदष्टम्।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्नवपरिमलगन्धः केन शक्यो वरीतुम्॥'

ईर्ष्याकलहेन निष्कान्तभर्तृकत्वात्तत्संगमसुखेनान्तरिता कलहान्तरिता। यथा—

'निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मूल्यते
निद्रा नैति न दृश्यते प्रियमुखं नैक्तंदिनं रुद्यते।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः॥'

---

१ सालोक एव सूर्ये गृहिणी गृहस्वामिकस्य गृहीत्वा।
अनिच्छतश्च चरणे धावति हसन्ती हसतः॥ [इति च्छाया]

२ त्रि पाठ 'नि पाठ अपि पार्श्वे' 'सर्व १ मर्त्य'पि' स्मरः

'परिपाट्यां फलार्थे या नवे प्रसव एव वा ।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ॥
उचिते वासके स्त्रीणामृतुकाले तु वा बुधैः ।
ज्येष्ठानामथ वेश्यानां कर्तव्यमुपसर्पणम् ॥'

इति नवेन वासके रतिसंभोगलालसतयाङ्गरागादिना सज्जा प्रगुणा वासकसज्जा । यथा—

'तल्पकल्पनविधेरनन्तरं भर्तृमार्गमवलोकते मुहुः ।
दर्पणेक्षणमुदीक्षते वपुर्हर्षभूषणमनिन्द्यभूषणा ॥'

चिरममन्या चिरयति भर्तरि विरहोत्कण्ठिता । यथा—

'अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक्सुहृद्
यो मां नेच्छति नागतश्च स हहा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥'

दूतीमुखेन स्वयं वा संकेतं कृत्वा केनापि कारणेन वञ्चिता विप्रलब्धा । यथा—

---

प्रौढेति । दर्पणेक्षणं । परिपाट्यामिति । परिपाटिर्यथा कल्पितानुपूर्वी । अस्या एकेन दिनेन भारः अस्या ग्राम्यमित्यादि ॥ तदपवादमाह—फलार्थे इति । अस्यामिति यावत । नव इति । नवत्वे प्रसवे रते चिरविरहविनां सुखयितुम् । दुःखे तदीयबन्धुव्यापत्त्यादौ दुःखिता आश्वसनीयेति । प्रमोद इति । तदीयपुत्रोत्सवादौ । उत्सवे हि माननीय एवमुचितम् । वासकमस्ति तत्र स्थाने रात्रिमिति वासकः तत्सुचिता क्रमोपचाराः । फलार्थं इत्यस्य हेतो सत्त्वावबोधकत्वं दर्शयितुं चतुरस्तिना तत्र परिपाट्या दुर्भग्यापि सेव्येति च विस्पष्टयितुमाह—उचिते वासके इति । आर्तवकाले हि सुभगापि फलतः परिमितीभवति । यथोक्तम्—'ऋतु योऽस्य तेऽऽप्यापतये समभावपरः । त्रयोदशी च नित्याः स्युर्युग्मा कन्याप्रेप्सया । पञ्चमी च दशमी ग्राम्या वर्जेयं सर्वदा । युग्मा पुत्राय रात्रिः स्यात्' इति । तत्रापि नक्षत्रविशेषपरिवर्जनम् । पुत्रस्य

---

१ 'अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रियः । तदनागमदुःखार्ता विरहोत्कण्ठिता भवेत् ॥' इति भरतसंग्रहात् 'कार्यासक्तस्य' इति भवन्.

'तत्संकेतगृहं प्रियेण कथितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच्च गमाशया।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभि-
र्भूमावक्षरमालिकेव लिखिता दीर्घं रुदत्या शनैः॥'

अभिसरत्यभिसारयति वा कामार्ता कान्तमित्यभिसारिका। यथा—
'उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ।
प्रियमभिसरस्येवं मुग्धे समाहतडिण्डिमा
यदि किमपरं त्रासोद्भ्रान्ता दिशो मुहुरीक्षसे॥'

तथा—
'न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि।
निपुणमथैनमभिगम्य वदेरभिदूति काचिदिति संदिदिशे॥'

अन्वर्थं एवासां लक्षणमित्याद्यस्य लक्षणं न कृतम्।

अन्यस्यपरस्या परस्त्री।

परकीये तु कन्योढे। संकेतात्पूर्वं विरहोत्कण्ठिते, पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके, कुतोऽपि कारणात्संकेतस्थानमप्राप्ते नायके विप्रलब्धे इति व्यवस्थैवानयोरिति।

नायिकानां प्रतिनायिकामाह—

ईर्ष्याहेतुः सपत्नी प्रतिनायिका।

यथा—रुक्मिण्याः सत्यभामा। दूत्यश्च नायिकानां लोकसिद्धा एवेति नोक्ताः।

अथ स्त्रीणामलंकारानाह—

सत्त्वजा विंशतिः स्त्रीणामलंकाराः।

संवेदनरूपात्प्रसृतं यत्ततोऽन्यद्देहधर्मत्वेनैव स्थितं सत्त्वम्। यदाह—'देहात्मकं भवेत्सत्त्वम्' इति। ततो जाता सत्त्वजाः राजसतामसभावरी रेष्वसंभवात्। चाण्डालीनामपि हि रूपलावण्यसंपदो दृश्यन्ते न तु

चेष्टालंकारा इति । तासामपि वा भवन्तु । उत्तमतामेव सूचयन्ति । अलं कारा देहमात्रनिष्ठा न तु चित्तवृत्तिरूपाः । ते यौवने उद्रिक्ता दृश्यन्ते । बाल्येऽनुद्भिन्ना वार्धके तिरोभूताः । यद्यपि च ते पुरुषस्यापि सन्ति, तथापि योषितां न एवालंकारा इति तद्गतत्वेनैव वर्णिताः ।

पुंसस्तूत्साहहेत्वन्त एव परोऽलंकारः । तथा च सर्वेष्वेव नायकभेदेषु धीरत्वमेव विशेषणतयोक्तम् । तदाच्छादितास्तु शृङ्गारादयो धीरललित इत्यादौ ।

अलंकाराश्च केचन क्रियात्मकाः केचिद्गुणस्वभावाः । क्रियात्मका अपि केचन प्राग्जन्माभ्यस्तरतिभावमात्रेण सत्त्वोद्भवेन देहमात्रे सति भवन्ति ते अङ्गजा इत्युच्यन्ते । अन्ये स्वजन्मसमुचितविभाववशस्फुटीभवद्रतिभावानुविद्धे देहे परिस्फुरन्ति ते स्वाभाविकाः । स्वभावरतिभावात् हृदयगोचरीभूताद्भवन्तीति । यथाहि कस्याश्चिन्नायिकायाः कश्चिदेव स्वभाववशाद्भवति अन्यस्या अन्यः कस्याश्चिद्द्वौ त्रय इत्यादयतोऽपि स्वाभाविकाः । भावहावहेलास्तु सर्वा एव सर्वास्वेव सत्त्वाधिकास्तूत्तमाङ्गनासु भवन्ति । तथा शोभादयः सप्त । एवमङ्गजाः स्वाभाविकाः क्रियात्मानः । शोभादयस्तु गुणात्मानः ।

ते चायत्नजाः ।

यत्नाज्जाताः क्रियात्मकाः । इच्छातो यत्नस्ततो देहे क्रियेति पदार्थविदः । ततोऽन्येऽयत्नजाः ।

तान्क्रमेण लक्षयन्ति—

**भावहावहेलास्त्रयोऽङ्गजा अल्पभूयोविकारात्मकाः ।**

यद्यपि

'देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः ।
भावात्समुत्थितो हावो हावाद्धेला समुत्थिता ॥'

इति भरतवचनात्क्रमेणैतेषां हेतुभावः, तथापि परम्परया दीप्ततमसत्त्व स्याङ्गस्यैव करणत्वादङ्गजा इत्युक्ताः । एवं च परस्परसमुत्थितत्वेऽप्यमी

१ 'भवन्ति' स्यात्.

पामङ्गत्वमेव। तथा हि—कुमारीशरीर मौढतरकुमार्यन्तरगतहेलावलोकने हावोद्भवो भावस्येवुल्लासितपूर्व । अन्यथानुभावस्यैवोद्भव । एवं भावे ऽपि दृष्टे हावो हेला वा । यदा तु हावावस्थोद्भिन्नपूर्वा परत्र च हेला दृश्यते तदा हेलातोऽपि हेला । एव हावात् हाव, भावाद्भाव इत्यपि वाच्यम् । एव परकीयभावादिस्मरणात्सरसकाव्यादेरपि हेलादीनां प्रयोगो भवतीति मन्तव्यम् । एतदन्योन्यसमुत्थितत्वं तथाङ्गस्यास्यो विकारोऽन्तर्गतवासनात्मतया वर्तमान रत्यास्यं भाव भावयन् सूचयन् भावः । यथा—

> 'दृष्टि' सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
> श्रोत्रं प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि ।
> पुंसामेकमपेतशङ्कमधुना नारोहति प्राग्यथा
> बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनै ॥'

बहुविकारात्मा भ्रूतारकभिमुकभ्रूमीवादेर्धर्म स्वचित्तवृत्ति परत्र जुहतीं दधतीं कुमारीं हावयतीति हाव' । सा चाद्यापि स्वयं रतेः प्रबोधं न मन्यते केवलं तत्संस्कारवशात्तथा विकारान्करोति यैर्दृष्टा तथा कल्पयति । यथा—

> 'स्मित किंचिन्मुग्ध तरलमधुरो दृष्टिविभव
> परिस्पन्दो वाचामभिनवविलासोक्तिसरस' ।
> गतीनामारम्भ किसलयति लीलापरिकर'
> स्पृशन्त्यास्तारुण्य किमिव न हि रम्यं मृगदृश ॥'

यदा तु रतिवासनामबोधार्थां प्रबुद्धां रतिममिमन्यते केवलं समुचितविभावोपग्रहविरहान्निर्विषयतया स्फुटीभावं न प्रपद्यते तदा तज्जनितबहुतराङ्गविकारात्मा हेला हावस्य संबन्धिमी क्रिया प्रसरत्वावेगयाहि त्वामित्यर्थ । वेगेन हि गच्छन् हेलतीत्युच्यते लोके इति । एवं चोद्भिद्योद्भिद्य विभाव्यन् हाव' । स एव प्रसरत्वैकसमावो हेलेति । यथा— 'कुरङ्गीवाङ्गानि–' इति ।

अत्र ह्यन्तर्गतिरतिमनोमात्रमुक्तं न स्वभिलापशृङ्गार इति मन्तव्यम् । तदेतद्ब्राह्मणस्योपनयनमिव भविष्यत्पुरुषार्थसमपीठबन्धत्वेन योषितामामनन्ति ।

**लीलादयो दश स्वाभाविकाः ।**

विशिष्टविभावलाभे रतौ सविषयत्वेन स्फुटीभूतायां तदुपबृंहणकृता देहविकारा लीलाविलासविच्छित्तिबिब्बोकविभ्रमकिलिकिञ्चितमोट्टायितकुट्टमितललितविहृतनामानः । एते च प्राप्तसंभोगेऽप्राप्तसंभोगे च भवन्ति । शोभादयस्तु सप्त वक्ष्यमाणाः प्राप्तसंभोगतायामेव ।

लीलादीन् लक्षयति—

**वाग्वेषचेष्टितैः प्रियस्यानुकृतिर्लीला ।**

प्रियगतानां वाग्वेषचेष्टानां प्रियबहुमानातिशयेन नत्वपदृकरूपेणात्मनियोजनमनुकृतिर्लीला ।

यथा—

> 'जं जं करेसि जं जं च जंपसे जह तुम नियंसेसि ।
> तं तमणुसिक्खिरीए दियहो दियहो न सवइ ॥'[1]

**स्थानादीनां वैचित्र्यं विलासः ।**

स्थानमूर्धता । आदिशब्दादुपवेशनगमनहस्तभ्रूनेत्रकर्मपरिग्रहः । तेषां वैशिष्ट्यं विलासः । यथा—

> 'अत्रान्तरे किमपि वाग्विभवातिवृत्त-
> वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
> तद्भूरिसात्त्विकविकारविशेषरम्य-
> माचार्यकं विजयि मान्मथमाविरासीत् ॥'

**गर्वादल्पाकल्पन्यासः शोभाकृद्विच्छित्तिः ।**

सौभाग्यगर्वादनादरेण कृतो माल्याच्छादनभूषणविलेपनरूपस्याल्पस्याकल्पस्य न्यासः सौभाग्यमहिम्ना शोभाहेतुर्विच्छित्तिः । यथा—

---

[1] यद्यत्करोषि यच्च जल्पसि यथा त्वं नियमयसि ।
तत्तदनुशिक्षणशीलाया दिवसो दिवसो न संवदति ॥' [इति च्छाया]

'सिहिपिञ्छकण्णऊरा जाआ वाहस्स गव्विरी भमइ।
मुत्ताहलरइअपसाहणाण मज्झे सवत्तीणम्॥'[1]

इष्टेऽप्यवज्ञा बिब्बोकः।

सौभाग्यगर्वादिष्टेऽपि वस्तुन्यनादरो बिब्बोकः। यथा—

'निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा।
शैलराजतनया समीपगामाललाप विजयामहेतुकम्॥'

वागङ्गभूषणानां व्यत्यासो विभ्रमः।

वचनेऽन्यथावक्तव्येऽन्यथाभाषणं हेलेवाद्यातव्ये पादेनादान रसनाया[2] कण्ठे न्यासः। यथा—

'चकार काचित्सितचन्दनाङ्के काञ्चीकलापं स्तनभारपृष्ठे।
प्रियं प्रति प्रेषितचित्तवृत्तिर्नितम्बबिम्बे च बबन्ध हारम्॥'

स्मितहसितरुदितभयरोषगर्वदुःखश्रमाभिलाषसंकरः किलिकिञ्चितम्।

सौभाग्यगर्वात्स्मितादीनां संकरः किलिकिञ्चितम्। यथा—

'रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदित-
स्मितक्रुद्धोद्भ्रान्तं पुनरपि विदध्यान्मयि मुखम्॥'

प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम्।

प्रियस्य कथायां दर्शने वा तद्भावभावनं तन्मयत्वं ततो योद्भूता चेष्टा लीलादिका सा मदनाङ्गपर्यन्ताङ्गपर्यन्ताङ्गमोटनान्मोट्टायितम्। यथा—

'स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः।

---

१ शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम्॥' [इति च्छाया]

२ 'हरणना' स्यात्.

हरति विनतपृष्ठोदमपीनस्तनाग्रा
नतवलयितबाहुर्जृम्भिते साङ्गभङ्गे ॥'

**अधरादिग्रहाद्दुःखेऽपि हर्षः कुट्टमितम् ।**

अधरस्तनकेशादीनां ग्रहणात् । प्रियसमेनेति शेषः । दुःखेऽपि हर्षः कुट्टमितम् । यथा—

'ईषन्मीलितलोललोचनयुगं व्यावर्तितभ्रूलतं
सव्रणाधरवेदनाप्रलपितं मा मेति मन्दाक्षरम् ।
तन्वङ्ग्या सुरतावसानसमये दृष्टं मया यन्मुखं
स्वेदार्द्रीकृतपाण्डुगण्डपुलकं तत्केन विस्मार्यते ॥'

**मसृणोऽङ्गन्यासो ललितम् ।**

अङ्गानां हस्तपादभ्रूनेत्राधरादीनां मसृणः सुकुमारो विन्यासो ललितम्। यथा—

'सभ्रूभङ्गं करकिसलयावर्तनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरपातैः
निःसंगीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥'

**कर्तव्यवशादायत एव हस्तादिकर्मणि यद्वैचित्र्यं स विलासः ।**

यत्र तु भावव्यापारयोग एव न कश्चिदस्ति भावावष्टम्भबुद्धिरथ च सुकुमारकरादिव्यापारणं तल्ललितम् । अन्ये तु 'लस विलासे' इति पाठं प्रमाणयन्तो विलासमेव सातिशयं ललितसंज्ञमाहुः ।

**व्याजादेः प्राप्तकालस्याप्यवचनं विहृतम् ।**

व्याजो मौग्ध्यादिप्रख्यापनाशयः । आदिग्रहणान्मौर्ख्यलज्जादिपरिग्रहः । ततो भाषणावसरेऽप्यभाषणं विहृतम् । यथा—

'पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥'

---

राज्ञां मुख्यं पत्न्यम् । यथाह—'प्रजायै गृहमेधिनाम्' इति ॥ प्रियसमेनेति । अवपक्षेपर

केषिद्बाल्यकौमारयौवनसाधारणविहारविशेष क्रीडितम् । क्रीडितमेव च प्रियतमविषय केलिं चाळङ्कारा आहु । यथा—

'मन्दाकिनीसैकतवेदिकाभि' सा कन्दुकै' कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥'

'व्यपोहितं लोचनतो मुखानिलैरपारयन्त किल पुष्पजं रज ।
पयोधरेणोरसि काचिदुन्मना प्रिय जघानोन्नतपीवरस्तनी ॥'

शोभादय सप्तायत्नजा ।

*शोभाकान्तिदीप्तिमाधुर्यधैर्यौदार्यप्रागल्भ्यनामान' सप्तालङ्कारा अयत्नजा ।*

क्रमेण लक्षयति—

रूपयौवनलावण्यै पुंभोगोपबृंहितैर्मन्दमध्यतीव्राङ्गच्छाया शोभा कान्तिर्दीप्तिश्च ।

तान्येव रूपादीनि पुरुषेणोपभुज्यमानानि छायान्तर जयन्तीति सा छाया मन्दमध्यतीव्रत्वे क्रमेण संभोगपरिशीलनादारभन्ती शोभा कान्ति दीप्तिश्च भवति ।

शोभा यथा—

'करकिसलय धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेष प्रदीपशिखां प्रति ।
स्थगयति मुहु पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षितः ॥'

कान्तिर्यथा—

'उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीकेशभारं वहन्त्या' ।

---

यस्य हि चन्द्रमसि परं भाग्यमभ । अनवरतपादपतनप्रसादनर्थिना न स्पृशसिति चापेक्षानुवर्तिन्या मान्यमिति चोपदेश' । चिरविरहिता च या चन्द्रस्य तामपि परिमथेति सपत्नीलोकविजय उक्त ॥

इत्याचार्यश्रीहेमचन्द्रविरचित विवेके सप्तमोऽध्याय ।

भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥'

दीप्तिर्यथा—

'आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किंचिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसः शीकरैः ।
तन्व्या यत्सुरतान्तकान्तनयनं वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः ॥'

चेष्टामसृणत्वं माधुर्यम् ।

क्षोभितेषु क्रीडादिषु यथा मसृणत्वं चेष्टायास्तथा दीप्तेष्वपि कोपादिषु यत्तन्माधुर्यम् । यथा—

'कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमत्यानतिमति ।
न दृष्टेः शैथिल्यं मिलितमिति चेतो दहति मे
निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥'

अचापलाविकत्थनत्वे धैर्यम् ।

चापलानुपहतत्वमात्मगुणानाख्यानं च धैर्यम् । यथा—

'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति ।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥'

प्रश्रय औदार्यम् ।

अमर्षेर्ष्या कोपावस्थास्वपि प्रश्रय औदार्यम् । यथा—

'भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रतां
मीयन्मां प्रतिमिवकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥'

प्रयोगे निःसाध्वसत्वं प्रागल्भ्यम्।

प्रयोगे कामकलादौ। चातुःषष्टिके इत्यर्थः।

यदाह—

'अन्यदा भूषणं पुंसः शमो लज्जेव योषितः।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव॥'

मनःक्षोभपूर्वकोऽङ्गसादः साध्वसं तदभावः प्रागल्भ्यम्।

यथा—'आशु लङ्घितवतीष्टकराग्र—' इति।

अत्र शोभाकान्तिदीप्तयो माधुर्यादिगता एव विशेषा आवेगचापल्यमदर्शशानां स्वभाव एव माधुर्यादयो धर्मा न चित्तवृत्तिस्वभावा इति नैतेषु भावशङ्कावकाशः। शाक्याचार्यराहुलादयस्तु—मौग्ध्यमदभाविकत्वपरितपनादीनप्यलंकारानाचक्षते। तेऽस्माभिर्भरतमतानुसारिभिरुपेक्षिताः॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ नायकवर्णनः सप्तमोऽध्यायः समाप्तः।

---

अष्टमोऽध्यायः।

अथ प्रबन्धात्मकस्य काव्यस्य भेदानाह—

काव्यं प्रेक्ष्यं श्रव्यं च।

नानृषिः कविः 'कवृ वर्णे' इति च दर्शनाद्वर्णनाच्च कविस्तस्य कर्म काव्यम्। एवं च दर्शने सत्यपि वर्णनाया अभावान्मीमांसादितिहासादीनां न काव्यत्वमिति तल्लक्षणं न वक्ष्यते।

तथा चाह भट्टतौतः—

'नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्॥
स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।
दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः॥
तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।
नोदिता कविता लोके यावज्जाता न वर्णना॥'

इति प्रेक्ष्यमभिनेयम्।

प्रेक्ष्यं विभजते—

**प्रेक्ष्यं पाठ्यं गेयं च ।**

तत्र पाठ्यं भिनत्ति—

**पाठ्यं नाटकप्रकरणनाटिकासमवकारेहामृगडिमव्यायोगोत्सृष्टिकाङ्कप्रहसनभाणवीथीसट्टकादि ।**

तथा च नाटकादीनि वीथ्यन्तानि वाक्यार्थाभिनयस्वभावानि भरतमुनिनोपदर्शितानि । सट्टकश्च केश्चिद्यथा—

'प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकम् ।
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम् ॥

---

प्रख्यातेति । प्रख्यातमितिहासपुराणादि वस्तु विषयो यस्य । तत्र हि लोकस्य कथापरिचयादादरातिशयो भवति । यद्वा प्रकर्षेण ख्यातं वस्तु निश्चितं तथा विषयो यस्येत्यभिप्रायो यस्मिन् । चक्रवर्तिनोऽपि हि वस्तुरूपस्य लोकाभ्यासप्रसिद्धे विषये कथान्तरोपक्षेपेण विना वचनिरन्तरं निर्वहणेन उद्गतरसाय भवति । वस्तुविषयत्वं प्रख्यातिमुक्त्वा तृतीयो प्रख्यातिमाह—प्रख्यातोदात्तेति । उदात्त इति धीररसयोग्य उक्तः । तेन धीरललितधीरप्रशान्तधीरोद्धतधीरोदात्तानां चतुर्णामपि ग्रहणम् । राजर्षिवंश्येत्यनेन प्रख्यातमपि वस्तु यदि तुल्यानां राज्ञां वंशेन चानुगमितं तथा प्रख्यातत्वेऽपि देव चरितं नरप्रभावातिशयेनोपायोपदर्शनायोग्यमिति नैतदुभयं निबध्नीयमिति पक्षद्वय प्रतिक्षेपो दर्शितः । राजानः ऋषयश्च इवेत्युपमितिसमासः । तदुपलक्षणं चरितं वस्तुमिति यावदिति । न च सर्वथा देवचरितं तत्र न वर्णनीयम्, किं तु दिव्यानामाश्रयत्वेनो पायत्वेन प्रकृतिपताकाप्रकरीत्वेनोपेतत्वमुपगमोऽङ्गीकरणं यत्र । तथाहि यथायथं भगवता पूर्वकृतपुण्यनिर्भरतया साक्षात्करणे प्रत्युत्पत्तिर्जायते । निरन्तरमभिध्यायिता नामैव नाम देवता प्रसीदन्ति । तस्माद्देवताराधनपुरःसरमुपायानुष्ठानं कार्यमिति । ननु दिव्यनायकमप्युपायपरमपि नाटकं भवतीति कस्मान्न व्याख्यायते । व्याख्या येत यद्येवं प्रधानेन नाटकेन व्युत्पत्तौ व्युत्पादयेत । न चैतदेव दिव्यानां दिव्यप्रभावैश्वर्य योगानुपपादेव्यवच्छिन्नमात्रमेव प्रयत्नो नैव सिद्धो व्याहन्यते । तस्माच्चरितं यथैव चाद्भुतमिति नैवोपदेशयोग्यम् । तथा श्रुतम्—देवानां मायिनी सिद्धिर्दूरे पूरयन्तेषु च । क्रियायत्नाभिनिष्पन्ना सर्वे मान्या हि मानुषाः । तस्माद्देवचरितैर्नैव विसर्पेत मानुष ॥' इति । तस्माद्दिव्यानिर्दैवमानुषयत्नोपपादितशुभाशुभफलप्रमाणा मर्त्यानामेव समुपमोपनिषद्वयवस्थितप्रतिबिम्बमनसुत्पादकं चरितमाश्रित्य नाटकं निबध्नीयमिति पूर्वतम एव नाटकेषु युज्यन्ते । नायिका तु दिव्याप्यविरोधिनी । यथोर्वशी । नायकचरितेनैव यद्

नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चापि ।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम ॥'
'यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् ॥
यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥

---

तत्समावेशात् । प्रसिद्धमपि वस्तु न निष्फलं व्युत्पत्तये भवतीत्यत आह—नानाविभूतिभिर्युतमिति । धर्मार्थकाममोक्षविभावैः फलभूतैर्विचित्ररूपैर्युक्तम् । तत्राप्यर्थकामौ सर्वजनाभिलषणीयाविति तत्प्राधान्यं दर्शनीयमिति । ऋद्धिविलासादिभिरिति । ऋद्धिरर्थस्य राज्यादेः संपत्तिः । विलासेन कामो लक्ष्यते । आदिग्रहणं प्रधानफलौ । धर्ममोक्षावभि फलसंपत्तिभिर्युक्तमित्यर्थः । तेन राज्ञा सर्वं राज्यं ब्राह्मणेभ्यो दत्त्वा वानप्रस्थं गृहीतमित्येवंप्रायं फलं नोपनिबद्धव्यम् । धर्ममोक्षबहुलमिति । तत्प्रधानत्वे हि चतुर्थेन शमेन रस इति तत्रास्य प्रतीतिर्विरसी भवेत् । गुणैरिति । अप्रधानभूतानि यानि भणितानि हेयानि प्रतिनायकगतान्यप्रधानानि तैर्युक्तम् । तथा पूर्वपक्षस्थानीयानां प्रतिक्षेपेण सिद्धान्तकल्पस्य नायकचरितस्य निर्वाहात् वत्सराजादिसंपत्तिर्भवेदिति । कौमुदीमहोत्सवादयो विभूतयः । संधिनिर्वहणादयो गुणा इति नाटकपरिषद(?)भेदनमात्रफलम् । चतुर्थपेन राजर्षिचरित्रवर्णनं न सर्वसाधारणस्य तस्य संभवात् । अवान्तरवस्तुसमाप्ती विश्रान्त्याय ये विच्छेदा भवन्ति प्रवेशकैर्भावैः ये च निर्मितपात्रप्रसादप्राप्ता यतितानामावेशश्च प्रवेशकप्रेक्षणं तन्नाटकं नाम रूपकम् ॥ आत्मशक्त्येति । इतिहासप्रसिद्धिं निरस्यति । वस्त्विति । साध्यं फलम् । शरीरमिति । उपायम् । नायकमिति । साधयितारम् । चकारः पूर्वसमुच्चये । द्वितीयस्त्वसमस्तसमुच्चये । एवकारः समुच्चयाभावे । उत्पत्तौ भवमौत्पत्तिकं निर्मितम् । तदयमर्थः—त्रितयमपि अत्र निर्मितं द्वयमेकं वा अन्यत्तु पूर्वोपनिबद्धं तत्सर्वं प्रकरणम् । मेघसारकादयम् । वत्सराजादि काव्याभिधेयमात्मनयतत्व प्रकुरुते यत्र काव्ये तत्प्रकरणमिति बुधैर्ज्ञेयमिति संबन्धः ॥ यत्र सर्वमुत्पाद्यं भवति तत्र भोऽकृत्यपर्याय स कृत्यो भाण इति दर्शयितुमाह—यदनार्षमिति । पुराणमितिहासादिरहितकथाद्युपनिबद्धं मृच्छकटिकादिचरितादि ॥ आहार्यमिति । पूर्वकविकथाश्रयमाहरणीयं समुद्रदत्तचेष्टितादि ॥ ननु न तत्रापि कविकृतत्वाभावात्कथं प्रकरणत्वमपेक्षमित्याह—उत्पन्नेति । पूर्वसिद्धं बीजं वस्तु च यत्र तादृशमपि तदपीति यत्सामस्त्येनोत्पादितं काव्यान्तरे वा प्रसिद्धैर्गुणैर्युक्तं प्रकरोति तदिति तत्साधेतोरेतदपि प्रकरणम् । तेन बृहत्कथादिविरहितस्य मृच्छकटिकादिविरचनार्थं कविपरिकल्पिता भिद्यते

---

१ 'कुरुते प्रभूत' भरते

यन्नाटके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च ।
तत्प्रकरणेऽपि योज्यं सलक्षणं सर्वसन्धिषु तु ॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यन्नैकविधं तज्ज्ञेयं प्रकरणं नाम ॥
नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम् ।
बाह्यजनसम्प्रयुक्तं तज्ज्ञेयं प्रकरणं नाम ॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं काव्ये कार्यं प्रकरणे तु ॥'

---

तथा प्रकरणम् । एवं पूर्वकविसमुत्प्रेक्षितसमुद्रदत्तचरितादिवर्णनेऽप्यभिप्रायं विदध त्कवि प्रकरणं कुर्यादिति तात्पर्यम् ॥ नन्वस्येतिवृत्तस्य कथं योजनेत्याशङ्क्य पूर्वोक्तमे- वातिदेशद्वारेण स्मारयितुमाह—यन्नाटक इति । 'नानाविभूतिभिर्युक्तमृद्धिविलासादिभि' इत्यादिना यल्लक्षणयुक्तं तद्वस्तुशरीरमित्यत्रापेक्षणीयम् ॥ वृत्तिभेदाश्चेति । नाना- रसभावचेष्टितैर्बहुधा युक्ता वृत्तयोऽत्रापि ज्ञेया इति ॥ सलक्षणमिति । लक्षणमङ्कपरिमाणम् । प्रवेशकान्तरसंविधानहेतुषु च प्रबन्धेषु यत्प्रयोज्यमुक्तं विष्कम्भकादिकम् यथोक्तेनोपपद्यत इत्यादि तत्सर्वं प्रकरणेऽपि योज्यम् ॥ अतिदेशादायातमतिप्रसङ्गं वारयन्नार्यादूयेन—विप्रे त्यादि । अमात्योऽधिकृतः । सार्थवाहो विभिन्नदेशान्तरगामी । तदेव पुनर्विभाव्यते नायकोऽत्र एव । नैकविधमित्यनेकरसयुक्तमिति । इतिवृत्तिविशेषमात्रमिति सूचितं प्रस्ता- वोपात्ततिप्रसङ्गं निषेधति । तन्निषेधे धर्मार्थकामपरीक्षणमायातम् । नाटके च देवो नायकस्तेन निषिद्ध इति प्रकरणे कर्तव्यत्वेनापद्यत इत्यत आह—न दिव्यचरित मिति । तथा दिव्याश्रयमिति यदतिवृत्तानामुपायत्वेन प्रयोज्यत्वं प्रसक्तम् तदप्यनेन निषिद्धम् । नाटके यथात्मप्रवेशेऽपि राजा प्रवेशं याचमानो निराकरोति—न राजसम्भोग इति । यदि पार्थिवस्पर्शिकथेऽपि न राज्ञोऽभिमतसम्भोगः प्रेक्ष्यः किमपि तु करणीयमनेन नि रूपयति । अत एव राजनि च उचितोऽन्तःपुरजन कञ्चुकिप्रभृतिव्यतिरिक्तो बाह्यज- नोऽत्र चेटदासादि प्रवेशकारी कार्य इत्यर्थः । एतदेव दर्शयति—दासविटेति । कञ्चु किस्थाने दास विदूषकस्थाने विट अमात्यस्थाने श्रेष्ठीत्यर्थः । वेश्यागृहे यथात्र या स्त्री तस्या उपचारो वैशिके प्रसिद्धः स कारणं यस्य शृङ्गारस्य तेनोपेतम् । कुलस्त्रीचरितं चेष्टि-

---

१ अथ चेदवस्तुन्यापादस्तु स्यात्' भरतपुस्तके

---

१ 'तदतिदेशमात्र' स्यात्. २ 'नोदात्तनायकेति' इति प्रतीकं मुद्रितं भवेत

प्रतिपद्यन्ते । तत्रापि धर्मारम्भे दानतपोयोगयज्ञप्रमुखानां धर्मस्वरूपफलसमस्तमुपदेशवृत्तं च व्युत्पाद्यते । अर्थारम्भे तु सन्ध्युपक्षेपपुरःसरा षाड्गुण्यवर्त्मना सामदानभेददण्डनी-तियोगपर्यन्ता कथ्यादिसंधानबहुला संधिविग्रहादिसिद्धा राज्यावाप्तिर्व्युत्पाद्यते । कामारम्भे चानुरागजातसंभोगासु च दिव्यासु कन्यासु हस्तप्राप्तासु च स्वाधीनपतिकासु अन्यासु परस्परावलोकनादि दिवा संभोगे रात्रौ वा सोपचार एकान्ताभ्यन्तरः कामोपभोगो राजकन्यां च राजनि व्युत्पाद्यते । तथा राज्ञामन्तःपुरोपभोगे महादेवी देवी स्वामिनी स्थापिता भोगिनी शिल्पकारिका नाटकीया नर्तकी अनुचारिका परिचारिका प्रेषणकारिका महत्तरा प्रतीहारी कुमारी स्थविरा युक्तिकाश्च योषितो राज्ञो वर्तितव्याश्च यथार्हं राजनीति[1]। तथा स्वापसम्भुक्तिभिर्नववरोपस्थापितकनिर्मुक्तानामन्तर्वंशकप्रतानसंचार । तथा युवराज-सेनापतिमन्त्रिसचिवप्राड्विवाककुमाराधिकृतानां सार्वसंचारिणां वृत्तम् । तथा विदूषकप्रच्छ-रवेष्टचरितं व्युत्पाद्यते । नायकप्रतिपक्षाणां च राज्ञामुभयगुणविपर्ययाद्वधोदयं वृत्तं व्याख्यानतया व्युत्पाद्यते ॥ प्रकरणे तु सचिवसार्थवाहादीनां पूर्ववत्सोचिता त्रिवर्गप्राप्तिः सर्वसर्वस्वपर्योगादि व्यापारसमूहता कुलस्त्रियां वृत्तं कुलस्त्रियाश्च भर्तरि व्रतितेषु संभोगे वैशिकाचारव्यवहारश्च विटस्य गुण्य धूर्तकर्माणि योग्यविशेषे धूर्तकर्मसमागमे वेश-कामी नायिकया रूपपरायत्तानि नायकयोरपरागस्मरणानि नायका हृदयाकृष्टप्रयोगः । उत्तममध्यमाधमनायिकाप्रवर्तनैव न समा' । चतुरोत्तममध्यमा नायका साधारणमेव दृष्टोपेक्ष्याप्युपायानां प्रमेयविभाग इत्यादि प्रयोगतो व्युत्पाद्यते ॥ नाटिकायां तु मिश्र-स्वरूपं राज्ञां धर्मार्थाविरोधिरतिकर्म वृत्तं नाटक इव व्युत्पाद्यते ॥ समवकारे च देवासुर-निमित्तो युद्धादिसंरम्भो विप्रकर्षतया कपट संक्षिप्तश्च शृङ्गारो हास्यादि सर्वमेव व्यक्तिकी-भिस्सप्रतिभिन्नं विस्मयप्रवाहरूपं व्युत्पाद्यते । पूर्वापरानुसंधानप्रत्यभिज्ञा प्रहसनरूप-विद्रावविरचितानां पुत्त्रवस्तुनल्कनयवैश्यमार्गमन्नसमविप्रयुक्तादि बहुव्यापारमन्त्रा परितोष उत्पाद्यते । तथा चाह— मायासु चौरदोषेषु निपुणव्यापारेषु च । नास्य मूर्खा शिवभय दासयोनिष्पापादिषु ॥' तुष्यन्तीति गम्यते । इदं च देवता धर्मप्रमाणानुमितिर्यान तदुपयुक्त प्रीति । यात्राभ्यवहारेषु च प्रेक्षाप्रवर्तनं च ॥ ईहामृगडिमयोरप्येवमेव ॥ व्यायोगे तु मन्त्रिसेनापतिप्रभृतीनां वृत्तं युद्धनियुद्धापमर्दबहुलं व्युत्पाद्यते ॥ उत्सृष्टिकाङ्के चोत्त-मानां मध्यमानां च दैवस्पर्शितानां शोकनिवेदितबहुलं वृत्तं प्रेक्षकाणां चित्तक्षोभं विधातु व्युत्पाद्यते । एवंविधव्यसनपतितानां चित्तक्षयाद्युपनरसतीर्दिश्यते इति तत्प्रयोगदर्शनात्म-चित्तमाना व्यसनेऽपि न विषीदन्ति ॥ प्रहसने तु पाषण्डमूर्खाणां हास्यप्रयोगदर्शनेन नाट्य प्ररोचना क्रियते । तत्र च नाम्ये प्रवृत्ता' संस्तरकर्मप्रायधर्मेषु व्युत्पाद्यन्ते । प्रयुक्तव्य भवदत्तापसविप्रादीनां वृत्तव्युत्पत्तानां व्युत्पत्त्यां वृत्तं शुद्धं तथा वैश्याचरणेनुराग-विटधूर्तवत्सप्रभृतीनां प्रवर्तनप्रत्ययस्य च कामिनो वृत्तं संकीर्णं लोकाचारसम्प्रयुक्तमिदा बहुलं व्याख्यानतया व्युत्पाद्यते ॥ भाणे च पूर्वविरचेत्सार्थमनसीनां परस्य वचनपरं प्रेक्ष-

---

१ 'स्वाधिता' स्यात्

गेयं विभजते—

गेयं डोम्बिकाभाणप्रस्थानशिङ्गकभाणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठीश्रीगदितरागकाव्यादि ।

पदार्थाभिनयस्वभावानि डोम्बिकादीनि गेयानि रूपकाणि चिरन्तनै रुक्तानि । तद्यथा—

'छन्नानुरागगर्भाभिरुक्तिभिर्यत्र भूपतेः ।
आवर्ज्यते मनः सा तु मसृणा डोम्बिका मता ॥'
'नृसिंहशूकरादीनां वर्णनं यत्र पठ्यते ।
नर्तकी तेन भाणः स्यादुद्धतात्र प्रवर्तितः ॥'
'गजादीनां गतिं तुल्यां कृत्वा प्रचलनं तथा ।
अत्याविद्धं सुमसृणं तत्प्रस्थानं प्रचक्षते ॥'
'यस्याः समग्रं पत्युर्यदुद्धृत्य वृत्तमुच्यते ।
मसृणं च क्वचिद्धूर्तचरितं शिङ्गकस्तु सः ॥'
'माला क्रीडानियुद्धादि तथा शूकरसिंहमा ।
चपलादिकृता क्रीडा यत्र सा भाणिका मता ॥'

---

प्रच्छन्नमदनीयप्रमदोपाख्यानमिह वर्ण्यते ॥ वीथ्यां तु बहुविधा वक्रोक्तिविशेषा मुखराः वन्ते ॥ साट्टके च प्राकृतमयमिव रतिरागं तत्र प्रयुज्यते । एवं भाणकादीनां स्वरूपं लक्षणं च दर्शितम् । तच्छरीरभूतसंविदभ्यासाभिलक्षणं विस्तरतस्तु भरतादेरवसेयं ॥ मसृणेति । त्रिविधो हि नर्तनस्य प्रयोगः । मसृण उद्धतो मिश्रश्च । तथा हि— डोम्बिकासु मदपरिवारकृष्णप्रायेण प्रयतस्तु सुकुमारमेव छन्नं रूपम् ॥ भाणकेषु नृसिंहादिचरितवर्णने उद्धतमेव । प्रस्थानशिङ्गकेऽप्युद्धतं प्रविशति तदुचितमेव । तत्राप्यस्य बहुलत्वतो भेदः । पूर्वप्रस्थानप्रबन्धः । उत्तरः शिङ्गकभेदः । उद्धत तु मसृणानुप्रवेशो भाणिकाभेदः । अन्यदपि प्रेरणरामाक्रीडरासकहल्लीसकादिकमन्यत्तत्प्रयुक्तैरभिनयैस्तस्मिन्निह प्रविष्टं वैचित्र्यम् ॥ ननु डोम्बिकाशिङ्गकादयो अन्योन्याश्रयितत्वं गाम्भीर्ये तत्प्रबन्धाये कथं रसवत्त्वमिति चेत्, न । देवतास्तुते श्रीपुंभावसमाश्रयस्य च शृङ्गारस्य सर्वत्रानुगमात् । तथा चाह— 'देवस्तुत्याभयार्थं श्रीपुंभावसमाश्रयम् ।' इति । तत एव चूडामणि

---

१ 'संध्यादिप्रबन्धविस्तरत्' पाठः ।

'हास्यप्रायं प्रेरणं तु स्यान्नहेलिकयान्वितम् ।'
'ऋतुवर्णनसंयुक्तं रामाक्रीडं तु भाष्यते ॥'
'मण्डलेन तु यन्नृत्तं हल्लीसकमिति स्मृतम् ।
एकस्तत्र तु नेता स्याद्गोपस्त्रीणां यथा हरिः ॥'
'अनेकनर्तकीयोज्यं चित्रताललयान्वितम् ।
आचतुःषष्टियुगलाद्रासकं मसृणोद्धतम् ॥'
'गोष्ठे यत्र विहरतश्चेष्टितमिह कैटभद्विषः किंचित् ।
रिष्टासुरमथनप्रभृति तदिच्छन्ति गोष्ठीति ॥'

---

डोम्बिकायां तु कामस्यैव प्रच्छन्नानुरागपरमरहस्योपदेशात् । अङ्गुष्ठाभिनिवेशितमिसनेन मन्मथपारवश्येनाभिधानात् । सिंहासनवर्णनसिर्णनेनापि भाणकप्रेरणमाभिधानप्रस्तुत-प्रसंसार्थान्तरन्यासनिदर्शनादिना पुरुषार्थस्यैवोपदेशदर्शनात् । अथ पाठ्यस्य गेयस्य च रूपकस्य को विशेषः । अत्रमाह्यन्यवते—पाठ्ये हि अङ्गं गीतं चेत्युभयमप्रतिष्ठितम् । तथा हि करकरपत्रपारी मण्डलादि करतालोपयोगोऽपि तत्स्वरूपेण व्यावर्त्यमानत्वात् यदि पतमेव यथारसं प्रयुज्यमानत्वेन विपर्यासितम्[1] । गेये तु गीतमङ्गं च द्वयमपि समप्रतिष्ठम् । तथा हि—यस्य यादृशं स्थापयति स्वरपाठिकं निरूपितं तत्र विपर्ययेऽपि भञ्जनीयम् । यद्यपि क्वचिद्गुणीभूतप्राधान्यं यथा प्रस्थानादौ क्वचिद्भाव्यप्राधान्यं यथा भाणकादिषु अभ्यस्तानपि क्रमप्राप्तौ क्वचिद्गीयमानरूपकाभिधेयप्राधान्यं[2] यथा शिल्पकादौ क्वचिद्गुणप्राधान्यं यथा डोम्बिकादिप्रयोगानन्तरं द्विपद्यवसरे । अत एव तत्र लोकभाषया वस्तुमार्ग इति प्रसिद्धिः । तथापि गीतप्रधानत्वेन गायनैः प्रयोग इति गेयमिति निर्दिष्टम् । रासकादेषु च गीतस्यैव निर्वाहः । तथा हि—रावणविजयस्य विचित्रवर्णनीयत्वेऽपि ककुभरागेणैव निर्वाहः मारीचवधस्य तु ककुभग्रामरागेणैवेति । किं च पाठ्ये साक्षात्कारनयनानुभव-सामर्थ्यपर्युपयोगे पात्रं प्रति भाषानियमस्य नियतस्य छन्दोऽलंकारादेश्चाभिधानं दृश्यते । गीयमानं च नाभिधीयते अर्थप्रकाशनपरत्वेऽपि तु यथा यथा अभ्यस्ततायुक्तिना यथार्थसूचन-योग्योऽभिनयः सात्त्विकादिः प्रमाणरसानुसारितया प्रयोक्ताभ्यस्तानुचितार्थपरिपूर्णं धृतार्थेन क्रियते । गेये च वैशारद्येनैव[3] वस्तुमूलस्वरसादिमध्यपातिविषयविशेषयोजनया कृता प्रतीतिः साध्या । डोम्बिकादौ गन्धस्येवार्थविशेषस्य[4] प्रादुर्भावनया । तथा हि—डोम्बिकायां च वर्णच्छन्दः यद्यपि प्रयोगे तावदभिनयकथन नास्ति किं तत्र विचार्यते केवलतालभावं हि तत् । तदनन्तरं तु भावपरिक्रमपूर्वकस्य प्रयोगावसरे 'पाञ्चालमध्येऽसाहि भिदु अथ अथ अभिष्ठपण्यमतिमा' इत्यादि वादितं तत्स्येदित्यम् । यदि तावदर्थ-

---

१ 'विपर्येति' स्यात्. २ 'प्रधान' स्यात्. ३ 'सुखादे' स्यात्. ४ 'गेतस्येवा' स्यात्.

एतानि क्रमेण लक्षयति—

पद्यं प्रायः संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्धभिन्नान्त्यवृत्तसर्गाश्वाससंध्यवस्कन्धकबन्धं सत्संधि शब्दार्थवैचित्र्योपेतं महाकाव्यम् ।

छन्दोविशेषरचितं प्रायः संस्कृतादिभाषानिबद्धैर्भिन्नान्त्यवृत्तैर्यथासंख्यं सर्गादिभिर्निर्मितं सुश्लिष्टमुखप्रतिमुखगर्भविमर्शनिर्वहणसंधिसुन्दरं शब्दार्थवैचित्र्योपेतं महाकाव्यम् ।

मुखादयः संधयो भरतोक्ता इमे—

'यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।
काव्ये शरीरानुगता तन्मुखं परिचक्षते ॥'

---

स्यप्रबन्धस्याभावात् । तत एव न लौकिकं साक्षात्स्वरूपेण वार्तयति अपि तु तदेव गूढं सामिव्यक्तं केवलं च प्रवर्तयतीति वा वैचित्र्यस्यान्तरप्रादुर्भावेनेति । मुखसंधिसंधानं च नेमे नास्ति । पद्ये तु तदेव प्रयोजनं भरतमुनिप्रभृतीनां तदेव सूक्तं प्रतिरिसर्गं बहुधा अप्रस्तुतप्रपञ्चेनेति ॥ भिन्नान्त्यवृत्तैरिति । उपक्रान्तवृत्तमुपसंहृत्य सर्गादीनां वृत्तान्तरैरुपसंहारः कर्तव्य इत्यर्थः । यथा कुमारसंभवे— 'अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं रतिवलयपदाङ्के चापमासज्य कण्ठे । सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥' यथा वा हरिप्रबोधे आर्यागीतिप्रबन्धोपसंहारे छन्दो पुष्पिताग्रा— 'भ्रमयति सविधे विभावरीणां द्युतिमपहृत्य वयोविभावरीणाम् । नवतमसतया विभावरीणां सकलमहः समतां विभावरीणाम् ॥' संधिबन्धस्तु न नाटकवत् रम्याणि विचित्राणि छन्दांसि रच्यन्ते ॥ यत्र बीजेति । बीजस्य यत्र समुत्पत्तिः कविप्रस्तुतो निबन्धः । नानार्थस्योऽर्थं प्रयोजनं येषां ते नानार्थाः संभवन्तीति संभवः । नानार्थरसाः संभवो यस्याः सा तथा । काव्ये नाटकादौ । तत्र च संधीनां मुख्यत्वावस्थानात् । अत एव तदीयोदाहरणार्थ— शरीरानुगता इति । शरीरमुख्या इति तत्स्थापिनी । तन्मुखम् । यथा वेणीसंहारे कृपणपाण्डवानामुभयेषां क्षेमप्रतिपादक स्वामिकस्य वचनं सहदेवे कृष्णस्य भीमसेनस्याश्रुपूर्वेण प्रशमाय कृष्णसीयनपरं व्यापारयते— 'निर्वाणवैरदहनाः प्रशमादरीणाम्' इति । अत्र प्रशमोऽभ्युदयमुखमनिरोधात् । यथा शान्तो यदुपाल्तोऽभिरक्षित इत्यर्थः । तदेवमरीणामपवाहनेन शान्तामभ्यभिर्पाभिरामस्य पाण्डवनन्दनं नन्दन्तु सह माधवेन । कुरुराजसुतास्तु समस्ता रुधिरप्रसाधितमुखं कृतपरीवार्तस्ता भवन्त्विति सुयोधनपूर्वस्य पाण्डवानां समाधिरस्यस्य पक्षस्य बीजं कविप्रस्तुता

१ संधिनिवेशं' क. २. 'शरीरानुगतं' क्वचित्

'बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् ।
मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं स्मृतम् ॥'
'उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥'

---

मुखमम् । नानारससंभवा चास्योत्पत्तिः । नाटकस्यानेकरसत्वेन पात्रानेकत्वविवक्षया व्यवस्थितेता रसानाम् । तथा हि—अत्र एव कुरुसंतानसमुच्छेदाय प्रवृत्तस्योद्धतपरिवीतमेघ-मुत्कटिरापिबन्निव न सर्वान् रसिपवेन सहदेवेनानुगतः क्रुद्धो भीम इत एवाभिवर्तते' इति पारिपार्श्वकवचनात्सूचितभीमसेनस्याविभावानुभावः 'लाक्षागृहानलविषान्नसभाप्रवेशैः'— इत्यादिलक्षणप्रकाशितस्थायिभावो भीमसेनस्य रौद्रो रसः कुरुक्षयप्रयोजनो बीजेन प्रकाशितत्वाद्बीजोत्पत्तेरेव संभवविषयः । कृष्णा च कुरुक्षयनिमित्तकः करुण पाण्डवस्येति प्रयोजनो बीजोत्पत्तेरेव संभवविषयः । यथा दुर्योधन शोकनाद्— अपैवाया रणसुपयो तातमम्बां च दृष्ट्वा प्राप्तराज्यां शिरसि निहतो हन्त दुःशासनश्च । तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां पार्श्वे पित्रोरपगतघृणः किं नु वक्ष्यामि वत्स ।' तदेवं भीमसेनस्येव क्रोधास्पदं भवति सत्रकपालमिन्दुपादेवम् । दुर्योधनस्येव च वीरसम्भ-बिन्दुः भवति शोकसम्भारणम्यमिति विभिन्नैव विषम्यतुरसोनानामर्थेता पात्रानेकत्वादस्य रसानाम् । नाटकस्यैकत्वाद्यथा सामाजिकप्रास्वर्यो यत्तप्रयतस्य शृङ्गार बीजसमुत्पत्तिरिति । बीजं समुत्पन्नमुत्पत्तिसंभेदमेवैचिन्त्यमित्यते । तथा हि बीजमेव पुनस्तकरीरस्यापि यतो मुखसंधौ तस्योत्पत्तिः । प्रतिमुखे दृष्टनष्टमिव तस्योद्घाटनं गर्भे चोद्भेदस्तस्य अवमर्शे च गर्भनिर्भेदः । निर्वहणे च समानयनमिति पुनस्तकरीरस्याप्यपिता ॥ बीजस्योद्घाटनमिति । अवमर्शे — दृष्टनष्टमिव कृत्वा तावन्मुखे 'दीपयन्तु— इत्यादिना भवतु भूताबिव बीजम् प्रमाणेन सागरिकाचरितं वसन्तोत्सवप्रसङ्गेषु इत्यादिना तिरोहितत्वान्नष्टमिव नहि दृष्टमेव । सागरिकाचरितस्य हि बीजस्य तदात्मकपुनरनुत्सवाभिरपि भूमिवदस्तुत पर्यवसाना-दनुद्भेदनम् । तत्र दृष्टनष्टत्वं कृत्वा न्यस्तत । एवं कुसुमबीजस्य चतुर्दशाटने तत्स्व-बन्धोद्घाटनं सर्वत्रैव कथावास्तुमुखे स प्रतिमुखम् । प्रतिरामिमुखत्वे । मुखस्याभिमु-ख्येन यतोऽत्र वृत्तिः । पराङ्मुखता हि दृष्टनष्टता । तथा हि रत्नावल्याम्—'परपेसल-करसिदं पि सरीरमवत्थ रक्तेण अज्ज मे बहुमदं संपण्णम्'[1] इत्यादिसाम्यरियाघेयरमन्तरं सु-संगतारचितरागतत्समाप्तपर्यन्त यत्र द्वितीयाङ्कगतं प्रतिमुखसंधिस्थापितबाहीविपर्यस ॥ उद्भेदस्तस्येति । प्राप्तिरप्राप्तिरन्वेषणमित्येवम्भूतमिदमवस्थानि पुनः पुनर्भवन्तीभि-मुख्ये गर्भसंधिः । प्राप्तिसंभवावस्थायावस्थया मुख्यत्वेन प्रकृतस्य गर्भीभावात् । तथा हि रत्ना

---

१ 'परप्रेषणकर्षितमपि शरीरमेतस्य रक्षणेनाद्य मे बहुमतं संपन्नम्' इति च्छाया

शब्दवैचित्र्यं यथा—असंक्षिप्तग्रन्थत्वम्, अविषमबन्धत्वम्, अनतिविस्तीर्णपरस्परनिबद्धसर्गादित्वम्, आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वम्, वक्तव्यार्थतत्प्रतिज्ञानतत्प्रयोजनोपन्यासकविप्रशंसासुजनदुर्जनस्वरूपवर्णनादि

---

स्वस्वप्रस्तावानियतासिकच्छन्दसोऽपां सह नीतिभिर्नायकविषयैः क्रमेण प्रस्तुतवृत्ते भव गिरिसमुद्रमनोऽपि रसभावैर्वर्णमानानां नानाविधे सुखदुःखात्मके रसिकसंयोगवियोगादिभि र्वैचित्र्यैरुत्तराणां चमत्कारास्वादस्वेन जातोत्कर्षाणां वर्ण्यमानत्वमिति यस्मिन्सर्वरसाः समानीयन्ते फलनिष्पत्तौ योज्यन्ते तथाविधेन फलयोगोऽवश्यम् आसाम्। तत्र यथा सुखप्राप्ते फलस्य तथा रतिहासोत्साहविस्मयस्थायिभावप्राधान्यं हर्षधैर्यौत्सुक्यमत्याद्यव्यभिचारिभावप्राधान्यं च प्रारम्भादीनाम्, दुःखहेतुषु फलस्य क्रोधशोकभयजुगुप्सास्थायिभाव प्राधान्यम्। मानसौम्यव्यभिचारिभावप्राधान्यं च प्रक्रमम्। रसान्तरस्यैव रसान्तरप्रवेशा त्समासासमासैरेषामवस्थाभेदादीनां नामव्यवहितानामव्यवहितपरिवारभावितत्वेनापि नियोजनम्। न त्वेकस्यैवेति। असंक्षिप्तग्रन्थत्वमिति। अनेन ग्रन्थस्यैवासमासत्वात् कथारसविच्छेदराहित्येन मनःसावधानत्वमिति। अविषमबन्धत्वमिति। अनेन शब्दसंदर्भ- वैरस्यं मनो सुखमापादयति। अनतिविस्तीर्णपरस्परनिबद्धसर्गादित्वमिति। अनेन ग्रन्थविस्तरभीरूणां चित्तमाकर्षति। सर्गादीनां परस्परमेकवाक्यतया महावाक्यात्मकस्य प्रबन्धस्योपकारिता च दर्शयति। आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वमिति। तत्र आशीर्यथा हरविजये— 'ओमिति ध्येयमक्षरं यत्र श्रुतीनां मुखमक्षरम्। प्रसीदतु सतां स्वान्त स्थितं त्रिपुरशासनम्॥' नमस्कारो यथा रघुवंशे— 'वागर्थाविव—' इत्यादि। वस्तुनिर्देशो यथा हयग्रीववधे— 'आसीद्दैत्यो हयग्रीवः' इत्यादि। वक्तव्यार्थेत्यादि। वक्तव्यार्थ- प्रतिज्ञानं यथा सेतुबन्धे— 'तं तिमसवणिम्मोक्खं समत्तखेमस्स हिअअसल्लुद्धरणम्। सुणह अणुराअइण्हं सीआदुक्खक्खअं दसमुहस्स वहम्॥' प्रयोजनोपन्यासो यथा— 'परिवड्ढइ विण्णाणं संभाविज्जइ जसो विढप्पन्ति गुणा। सुव्वइ सुउरिसचरिअं किं तं जेण न हरन्ति कव्वा लावा॥' कविप्रशंसा यथा रावणविजये— 'सयलं चिअ णिबन्धं दोहिँ पएहिँ कलुसं पसण्ण- मिमं। जाणन्ति कइन्द कई सुद्ध सहावेहिँ लोअणेहिँ व हिअअम्॥' सुजनदुर्जनस्वरूप

---

१ तं त्रिदशवनविमोक्षं समस्तत्रैलोक्यस्य हृदयशल्योद्धरणम्।
शृणुतानुरागचिह्नं सीतादुःखक्षयं दशमुखस्य वधम्॥' [इति च्छाया]

२ । ॥' [इति च्छाया]

३ । ॥' [इति च्छाया]

वाच्यत्वम्, दुष्करचित्रादिसर्गत्वम्, स्वाभिप्रायस्वनामेष्टनामाङ्कितस मासित्वम्, इति ।

अर्थवैचित्र्यं यथा—चतुर्वर्गफलोपायत्वम्, चतुरोदात्तनायकत्वम्, रसभावनिरन्तरत्वम्, विधिनिषेधव्युत्पादकत्वम्, सुसूत्रसविधानकत्वम्, नगराश्रमशैलसैन्यावासार्णवादिवर्णनम्, ऋतुरात्रिदिवार्कास्तमयचन्द्रोदया दिवर्णनम्, नायकनायिकाकुमारवाहनादिवर्णनम्, मन्त्रदूतप्रयाणसङ्ग्रामा

---

यथा हरविजये— इतरथाप्यनपस्मृति न पपात्पिशुन श्रुतम् । अथवा तदवद् किं च न सेव्यं ईस्तत सत ॥' दुष्करचित्रादिसर्गत्वमिति । अस्मिन्ननेन यमकश्लेषादयो गृह्यन्ते । ते च किरातार्जुनीयादौ स्पष्टा एव । स्वाभिप्रायेत्यादि । स्वाभिप्रायाङ्किता यथा—धैर्यमाधुर्यस्य उत्साह सर्वसेनस्य अनुराग प्रवरसेनस्येति । स्वनामाङ्किता यथा—रावणविजये हरविजये । इष्टनामाङ्किता यथा—लक्ष्म्यङ्किता किराते भारवेः श्र्यङ्किता शिशुपालवधे माघस्य । मुद्राङ्किता यथा—मन्मथस्य हृष्टचरिते जय इत्याहृत्य आनन्द पञ्चाशिखाद्यल्पकाव्यानाम् इति । चतुर्वर्गफलोपायत्वमिति । अनेन चत्वारो वर्गा धर्मार्थकाममोक्षा त एव स्मृता समस्ता वा फलं तस्योपायस्तस्य भावस्तत्त्वं आपन्नं मुख्यमिति मेदभाक्त्वं । चतुरोदात्तनायकत्वमिति । अनेन व्याप्तशरीरव्यापिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमभिदधाति भावस्वभिभूतोऽस्पृष्टकर्ममभिदधाति । रसभावनिरन्तरत्वमिति । अनेन रसग्रहणेनापि तत्कारणभूतानां भावानां परिग्रहे पृथग्भावग्रहणेन रसभावानां परस्परं धर्मधर्मिभावमभिदधत्स्वेभ्यो भावाभावेभ्यो रसा रसेभ्यश्च रसा इति नैरन्तर्यस्य रसभावयोरप्यस्येव भोगमर्मसंवेद्यरसस्य प्रबन्धस्यापि नरसत्वमपाकरोति । विधिनिषेधव्युत्पादकत्वमिति । अनेन गुणवतो नायकस्योत्कर्षप्रकाशनेन दोषवतश्चोत्कर्षप्रदर्शनेन विनीतस्य गुणवतैव भाव्यं न दोषवतेति व्युत्पादयति । सुसूत्रसविधानकत्वमिति । अनेन प्रोक्तव्यापारा पदार्थास्तथा निबन्धनीया यथा प्रबन्धस्य शोभाय भवन्तीति कवीन् शिक्ष यति । नगराश्रमेत्यादिना वेषप्रबन्धमुपदिशति । नगरवर्णनं यथा हरिविजय-रावणविजय-शिशुपालवध-कुमारसंभवादौ । आश्रमवर्णनं यथा रघुवंश-किरातार्जुनीयादौ । शैलवर्णनं किरातार्जुनीयादौ । सैन्यावासवर्णनं माघे । अर्णववर्णनं सेतुबन्धादौ । ऋत्वित्यादिना काव्य वस्तुप्रपर्णनं लक्षयति । तत्र ऋतुवर्णनं वसन्तग्रीष्मवर्षादिवर्णनानि सेतुबन्ध-हरिविजय-रघुवंश-हरिवंशादौ । रात्रिवर्णनं किरातार्जुनीय-कुमारसंभव-शिशुपालवध-हयग्रीववधादौ । दिवसवर्णनं प्रभातमध्याह्नापराह्णवर्णनानि शिशुपालवध-किरातार्जुनीयादौ । अर्का स्तमयवर्णनं कुमारसंभव-हरिविजय-रावणविजय-सेतुबन्धादौ । चन्द्रोदयवर्णनं कुमारसंभव किरातार्जुनीय-शिशुपालवध-सेतुबन्धादाविति । नायकेत्यादिना पात्रविशेषाभिमानत्वं सूचयति । तत्र नायकवर्णनं हरिविजय-रावणविजय-जानकीहरण-रघुवंशादौ । नायिकावर्णनं

म्युदयादिवर्णनम्, वनविहारजलक्रीडामधुपानमानापगमरतोत्सवादिवर्णनम्, इति ।

उभयवैचित्र्यं यथा—रसानुरूपसंदर्भत्वम्, अर्थानुरूपच्छन्दस्त्वम्,

---

कुमाराभ्युदयचरित-कुमारसंभव-जानकीहरण-सुभद्राहरणादयः । कुमारवर्णनं रघुवंशादौ । नायकवर्णने हयग्रीववधसेतुबन्धप्रबन्धानि हरिविजय-रावणविजयादयः । मन्त्रस्यादिवर्णना अर्थप्रधानपेशलमासुपदेशाच्चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशाच्छन्दःसाम्यं भवतीत्यभिप्रायः । तत्र मन्त्रः पञ्चाङ्गः प्रतिपादितः । स यथा—किरातार्जुनीय-शिशुपालवध-भट्टिकाव्य-हयग्रीववधादौ । दूतस्त्रिधा—निसृष्टार्थः परिमितार्थः शासनहरश्च । निसृष्टार्थो यथा—उद्योगपर्वणि वासुदेवः हरिविजये वा सात्यकिः । परिमितार्थो यथा—रामायणेऽङ्गदः । शासनहरो यथा—मन्मथमार्गे केयूरक इति । प्रयाणं त्रिधा—साधारण्यपक्षे परव्यसने अभिमतार्थसिद्धये च । तत्र साधारण्यपक्षे यथा—रघुवंशे । परव्यसने यथा—जरासंधव्यसनिनः शिशुपालस्योपेक्षाय वासुदेवस्य शिशुपालवधे । अभिमतार्थसिद्धये यथा—विष्णोः पारिजातहरणाय हरिविजये यथा वा—दिव्यास्त्रप्राप्त्यर्थमर्जुनस्य किरातार्जुनीये इति । संग्रामस्त्रिधा—समः विषमः समविषम इति । तत्र समः—इन्द्रयुद्धे चतुरङ्गयुद्धे च । इन्द्रयुद्धं यथा—रामरावणयोः । चतुरङ्गयुद्धं कुरुपाण्डवानाम् । विषमो यथा—रामस्य खरदूषणत्रिशिरोभिः सह चतुर्दश सहस्राणि चतुरङ्गं च राक्षसाः । हतान्येकेन रामेण मानुषेण पदातिना ॥ इति । समविषमो यथा—महेश्वरार्जुनयोः किरातार्जुनीये रघुभार्गवयोर्वा रघुवंशे इति । अभ्युदयस्त्रिधा—अरिविजयः स्त्रीलाभः पुत्रोत्पत्तिः । तत्रारिविजयो द्विधा—संमुखच्छेदेन तत्पुत्रस्य च । स पूर्वो रावणवधादौ द्वितीयो हरिविजयादौ । स्त्रीलाभो यथा—इन्दुमतीस्वयंवरे । पुत्रजन्मो दिलीपस्य रघुणा इति । वनविहारादयस्त्रिधा उद्दीपनविभावस्य संभोगशृङ्गारस्योपदेशात् । मध्यमभूतप्रयाणसंग्रामाभ्युदयादिभिरप्यर्थान्तरप्रतिबन्धं तैरविभ्रमसविशेषैः श्रमसेवया तदुपयोगः कर्तव्य इति सूचयति । तत्र वनविहारो द्विधा—मृगयादिः पुष्पावचयादिश्च । तत्राद्यो यथा—दशरथस्य रघुवंशे । द्वितीयो यथा—यदूनां शिशुपालवधे अप्सरसां वा किरातार्जुनीये इति । जलक्रीडा द्विधा—एकस्य वा बह्वीभिः सह योषाभिर्बहूनां वा बह्वीभिर्यथास्वमङ्गनाभिः । तत्राद्या यथा—कार्तवीर्यस्य नर्मदायाम्, कुशस्य वा सरय्वाम् । द्वितीया यथा—अप्सरसां सिद्धसिन्धौ यदूनां रैवतकहृदे इति । मधुपानं द्विधा—गोष्ठीगृहे, यानभवने च । तत्राद्यं हरिविजये शिशुपालवधे च । द्वितीयं किरातार्जुनीये कुमारसंभवे च ॥ मानापगमो द्विधा—प्राकृतिको नैमित्तिकश्च । प्राकृतिको हरिविजये सत्यभामायाः । नैमित्तिको रामाभिसारिकाप्रभावतीनां सेतुबन्धे । रतोत्सवोऽपि द्विधा—सामान्यतः विशेषतश्च । सामान्यतः किरातार्जुनीये शिशुपालवधे च । विशेषतः कुमारसंभवे जानकीहरणे च । रसानुरूपसंदर्भत्वमिति । अत्र रतिप्रकर्षे वामनः उत्साहप्रकर्षे प्रौढः क्रोधप्रकर्षे कठोरः शोकप्रकर्षे मृदुः विस्मयप्रकर्षे तु स्फुटः संदर्भो विरचनीय इति उपदेशात्, नैकमात्रप्रमादो वा रसभावभेद इति व्यापयति । अर्थानुरूपच्छन्दस्त्वमिति । अनेन

नायकाख्यातस्ववृत्ता भाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताख्यायिका ।

धीरप्रशान्तस्य गाम्भीर्यगुणोत्कर्षात्स्वगुणोपवर्णनं न संभवतीत्यर्थादस्यां धीरोद्धतादिना नायकेन स्वकीयवृत्तं सदाचाररूपं चेष्टितं कन्यापहारसंग्रामसमागमाभ्युदयभूषितं मित्रादि वा व्याख्यायते, भाव्यर्थशंसीनि च वक्त्रापरवक्त्रादीनि यत्र बध्यन्ते, यत्र चावान्तरप्रकरणसमाप्तावुच्छ्वासा बध्यन्ते, सा संस्कृतभाषानिबद्धा अपादः पदसंतानो गद्यं तेन युक्ता । युक्तग्रहणादन्तरान्तरा अविरलपद्यनिबन्धेऽप्याख्यायिका । यथा—हर्षचरितादि ।

धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ।

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः । तस्य तु वृत्तमन्येन कविना वा यत्र वर्ण्यते, सा च काचिद्गद्यमयी । यथा—कादम्बरी । काचित्पद्यमयी । यथा—लीलावती । या च सर्वभाषा काचित्संस्कृतेन काचित्प्राकृतेन काचिन्मागध्या काचिच्छूरसेन्या काचित्पैशाच्या काचिदपभ्रंशेन बध्यते सा कथा ।

---

कर्णाभिकल्पेन यथेष्टकल्पनया मकरन्दप्रसङ्गः । तत्र आहकवल्ल(?)सोमप्रभीयवत् । यदा कथाशरीरस्य परिपूर्णत्वसंभवस्तदा समुच्चयेन । यदान्यथा तदा विकल्पेनेति । तत्रापि केचाभिधानानां विकल्पोऽपरेषां नियमेन प्रयोग । यानि पुरुषार्थस्यार्थाभावे रसभोपस्करीणि तानि नियमतः प्रयुज्यन्ते । यथा मन्त्रप्रयाणादिनायकाभ्युदयादय । यथा च वैवर्णादूतप्रेषणमधुपानक्रीडाचन्द्रोदयमधुपानरतोत्सवादय । तानि च यदि कथाशरीरे न सुसङ्गतानि कथान्तरानुप्रवेशेनापि कर्तव्यानीति प्रबन्धत ॥ वृत्तमिति । वृत्तस्य सदाचार एव वर्तते । तदेव मनुराह—न विद्यया केवलया तपसा वापि पात्रता । यस्य वृत्तमिमोर्वेते तद्धि पात्रं प्रकीर्तितम् ॥' इति । तदाह—वक्त्रेति । वक्त्रसम्बन्धेन वक्त्रप्रकरणं लक्षयत । तद्यथा—'अयुजि ननरलगाः समे नजौ यद्वद्धिमुखे वक्त्रम्' इत्यादि । अथवा अपरवक्त्रम् । द्वयोपक्षे योऽन्तो वा पूर्वेऽर्थे परे पक्षे स्वर्गागापेक्षैव छन्दोनुप्रासनमन्वितानि । वक्त्रं यथा हर्षचरिते—सिद्धवर्णाङ्कितशेषा बहुमन्त्रकलमान्विता । कुमार एव आनन्दप्रबुद्धा पुष्पेण भूसत ॥ अपरवक्त्रं यथा—तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते । अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥ आर्या यथा—

प्रबन्धमध्ये परप्रबोधनार्थं नलाद्युपाख्यानमिवोपाख्यानमभिनयन् पठन् गायन् यदेको ग्रन्थिकः कथयति तद्गोविन्दवदाख्यानम् ।

तिरश्चामतिरश्चां वा चेष्टाभिर्यत्र कार्यमकार्यं वा निश्चीयते तत्पञ्चतन्त्रादिवत् धूर्तविटकुट्टनीमतमयूरमार्जारिकादिवच्च निदर्शनम् ।

प्रधानमधिकृत्य यत्र द्वयोर्विवादः सोऽर्धप्राकृतरचिता चेटकादिवत् प्रवह्लिका ।

प्रेतमहाराष्ट्रभाषया क्षुद्रकथा गोरोचनानङ्गवत्यादिवन्मतल्लिका । यस्यां पुरोहितामात्यतापसादीनां प्रारब्धानिर्वाहे उपहासः सापि मतल्लिका ।

यस्यां पूर्वं वस्तु न लक्ष्यते पश्चात्तु प्रकाश्यते सा मत्स्यहसितादिवन्मणिकुल्या ।

एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रधाना शूद्रकादिवत्परिकथा ।

---

'सकलमहीमण्डलनृपतत एक एव नृपवरो । विपुलेऽपि पृथ्वीतले स्वल्प इव मण्डलिपतिः सुखे ॥' उपाख्यानमिति । यदाह—'सकलामिश्रीपोलप्रायोपाख्यानवदाख्यानस्य । अन्यप्रबोधनार्थं यदुपाख्यानं तूपाख्यानम् ॥' आख्यानमिति । तथा चाह—'आख्यान-कसंज्ञां तदभते यदभिनयन् पठन् गायन् । ग्रन्थिक एकः कथयति गोविन्दवदवहिते सदसि ॥' निदर्शनमिति । तथा च—'निश्चीयते तिरश्चामतिरश्चां वापि यत्र चेष्टाभिः । कार्यमकार्यं वा तन्निदर्शनं पञ्चतन्त्रादि ॥ धूर्तविटकुट्टनीमतमयूरमार्जारिकादिकं लोके । कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि ॥' प्रवह्लिकेति । तथा च—'यत्र द्वयोर्विवादः प्रधानमधिकृत्य जायते सदसि । सार्धप्राकृतरचिता प्रवह्लिका चेटकप्रभृति ॥' मतल्लिकेति । तथा च—क्षुद्रकथा मतल्ली प्रेतमहाराष्ट्रभाषया भवति । गोरोचनेव कार्या सानङ्गवतीव वार्कण्डेति ॥' सापीति । तथा च—'यस्यामुपहास्यः स्यात्पुरोहितामात्यतापसादीनाम् । आरब्धानिर्वाहे सापि हि मतल्लिका भवति ॥' मणिकुल्येति । तथा च—'मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु । पश्चात्प्रकाश्यते सा मणिकुल्या मत्स्यहसितादि ॥' परिकथेति । तथा च—'पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः ।

१ 'यद' म्यान. २. तथादि' मूले. ३-४-५. 'मत' म्यान. ६ 'मत्स्यहसितादि-' मूल्यपुस्तके.

मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सेन्दुमत्यादिवत्खण्डकथा ।

समस्तफलान्तेतिवृत्तवर्णना समरादित्यवत्सकलकथा ।

एकतरचरिताश्रयेण प्रसिद्धकथान्तरोपनिबन्ध उपकथा ।

लम्भाङ्किताद्भुतार्था नरवाहनदत्तादिचरितवद्बृहत्कथा ।

एते च कथाप्रभेदा एवेति न पृथग्लक्षिताः ।

गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः ।

संस्कृताभ्यां गद्यपद्याभ्यां रचिता प्रायेण यान्यङ्कनानि स्वनाम्ना परनाम्ना वा कविः करोति तैर्युक्ता उच्छ्वासनिबद्धा चम्पूः । यथा वासवदत्ता दमयन्ती वा ।

अनिबद्धं मुक्तकादि ।

मुक्तक-संदानितक-विशेषक-कलापक-कुलक-पर्या-कोश-प्रभृत्यनिबद्धम् । एषां लक्षणमाह—

एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि ।

एकेन छन्दसा वाक्यार्थसमाप्तौ मुक्तकम् । यथा अमरुकस्य शृङ्गारशते रसस्यन्दिनो मुक्तकाः । द्वाभ्यां संदानितकम् । त्रिभिर्विशेषकम् । चतुर्भिः कलापकम् । एतानि च विशेषानभिधानात्सर्वभाषाभिर्भवन्ति ।

पञ्चादिभिश्चतुर्दशान्तैः कुलकम् ।

छन्दोभिरिति वर्तते । मुक्तकानामेव प्रपञ्चकोपनिबन्धः । अवान्तरवाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः । पर्या सा कोशेषु प्रचुरं दृश्यते । स्वपरकृतसूक्तिसमुच्चयः कोशः । यथा सप्तश

---

भूयन्ते शूद्रकवर्णितगीतिभिः परिकथा सा तु पुनः खण्डकथेति । तथा च— ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः । मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती ॥ सकलकथेति । [illegible] ॥ उपकथेति । तथा च— यत्राभिधेय कथान्तरमतिप्रसिद्धं [illegible] । [illegible] [illegible]मप्यगोपकथा चित्रलेखादि ॥ बृहत्कथेति ।

तकादि । एकप्रघट्टके एककविकृतः सूक्तिसमुदायो वृन्दावनमेघदूतादिः संघातः । विप्रकीर्णसूक्तानामेकत्र संधानं पद्यवंशादिकोपवंशादिकर्तृसंहिता । एवमनन्तोऽनिबद्धगणः स आदिग्रहणेन गृह्यते । इह च सत्सधित्व धर्म्यार्थवैषिम्ययोगश्च महाकाव्यवदाख्यायिकाकथाचम्पूष्वपि द्रष्टव्यः ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायामलंकारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ
अष्टमोऽध्यायः समाप्तः ।

---

तथा च — कम्पाहितामृतार्थी विद्याधरचक्रवर्ती महासंपदा । नरवाहनदत्तदेवचरित मिव बृहत्कथा भवति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते विवेकेऽष्टमोऽध्यायः ।

समाप्तोऽयं ग्रन्थः ।

